पितः यतोजलमयश्चंद्रः प्रकाशशून्यःप्रोक्तः तस्मिंस्तरणिकिरणप्रतिफलनादिनरस्यज्योत्स्नाप्रसरःविस्तरःयस्मात् तदुक्तं सलिलमयेशशिनिर-
वेर्दीधितयोमूर्च्छितास्तमोनैशम् क्षपयंतिदर्पणोदरनिहिताइवमंदिरस्यांतरमिति तथाचवेदे सुषुम्णः सूर्यरश्मिश्चंद्रमाइति अथवाशशिभृतइ-
तिपाठः शशिभृतोमहादेवस्यमूर्तिर्विपरिकल्पितः यतोसौभगवानष्टमूर्तिः क्षितिजलपवनहुताशनाकाशयजमानसोमसूर्याख्याइति अष्टमूर्ति
र्यस्तस्य माहेश्वरीमूर्तिःसूर्यइत्यर्थः शशिभृतइतिसाधुपाठः तथावर्त्माऽपुनर्जन्मनांनपुनर्जन्मविद्यतेयेषांतेअपुनर्जन्मानःमुक्तास्तेषांवर्त्ममार्गः मोक्षद्वा
रमित्यर्थः यतोद्विविधोमार्गः देवयानाख्यःपितृयानाख्यश्चतत्रपितृयानमार्गद्वारभूतश्चंद्रमाःयेनस्वर्गगामिनःस्वर्गंगच्छंति मोक्षद्वारंसूर्यः यतः
सूर्यमंडलंभित्वामोक्षभाजोगच्छंति तथाचाहभगवान्व्यासः स्वर्गद्वारंप्रजाद्वारंमोक्षद्वारंत्रिविष्टपमिति आत्मेत्यात्मविदामिति आत्मानंविदंतीत्या
त्मविदोयोगिनस्तेषांसएवात्माचित्तत्वंतेजोरूपीप्राणरूपेणहृदयांतरस्थितः तथाचश्रुतिः सूर्यआत्माजगतस्तस्थुषश्चेति जगतोजंगमस्यतस्थुषः

श्रीगणेशायनमः मूर्तिर्विपरिकल्पितःशशभृतोवर्त्माऽपुनर्जन्मनामात्मेत्यात्मविदांक्रतुश्चयजतांभर्तामरज्यो
तिषाम् लोकानांप्रलयोद्भवस्थितिविभुश्चानेकधायःश्रुतोवाचंनःसददात्वनेककिरणस्त्रैलोक्यदीपोरविः १

स्थावरस्यसूर्यएवात्मा क्रतुश्चयजतांयजमानानांसएवक्रतुर्यज्ञः यदुक्तम् अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठति आदित्याज्जायतेवृष्टिर्वृ-
ष्टेरन्नंततःप्रजाइति भर्तामरज्योतिषां अमरादेवाःज्योतींषिग्रहनक्षत्रादीनितेषांभर्ताप्रभुःप्रधानइत्यर्थः यतःसर्वेदेवास्तस्योपस्थानंकुर्वंति ग्रहन
क्षत्राणांचतद्वशेनोदयास्तमयाः यदुक्तम् तेजसांगोलकःसूर्योग्रहर्क्षाण्यंबुगोलकाः प्रभावंतोहिदृश्यंतेसूर्यरश्मिप्रदीपिताइति एवंगुणाधिक्या-
द्भर्तामरज्योतिषांप्रभुः लोकानांप्रलयोद्भवस्थितिविभुरिति लोकाःभूर्लोकादयस्तेषांप्रलयेविनाशेउद्भवेउत्पत्तौस्थितौपालनेप्रभुर्विष्णुः भगवतःअतीतव
र्तमानभाविकालत्रयपरिच्छेदचिन्हभूतत्वात् चशब्दोत्रावधारणे अनेकधायःश्रुतोवेदेयोऽनेकधानेकप्रकारैःपठ्यते तथाचोक्तम् इंद्रंमित्रं
वरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मान् एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वानमाहुरित्यादि अधुनास्यशास्त्रस्यपरप्रणीत-
त्वादानर्थक्यंपरिजिहीर्षुस्तथान्यशास्त्रेभ्योस्यगुणवत्त्वंप्रदर्शयन्शार्दूलविक्रीडितेनाह १

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अहं होरातंत्रमहा
भूयोभिरिति होरायास्तंत्रं होरातंत्रं अथवा होरा एव तंत्रं होरातंत्रं तदेव महार्णवो दुःपारत्वात् तंत्रेति नार्यते येनार्थस्तत्तंत्रम्
र्णवप्रतरणे भग्नोद्यमानां शास्त्रप्लवं प्रारभे होरातंत्रमेव महार्णवो महासमुद्रः तत्प्रतरणे प्रतरण विषये भग्नोद्यमानां भग्नोत्साहानां शास्त्रप्लु
वं प्रारभे करोमि शास्त्रमेव प्लुवः शास्त्रप्लवः तं शास्त्रप्लवं यथा प्लुवस्तितीर्षूणां परपारगमनमाशु संपादयति तथेदमपि होरातंत्रमहार्णवप्रतरणे
भग्नोद्यमानामित्यस्य प्लुवेन साधर्म्यम् प्रकृते होरातंत्रमहार्णवप्रतरणे भग्नोद्यमानामित्यत आह भूयोभिरिति भूयोभिर्बहुनरैः किंभूतैः पटुबुद्धि
भिः पटुः पट्वी बुद्धिर्येषां ते पटुबुद्धयश्चतुराः प्राज्ञाः तैः शास्त्रेषु दृष्टेषु चिरं विचारितेष्वपि सत्सु किंभूतेषु शब्दन्यायसमन्वितेषु शब्दानां न्यायाः शब्दन्या
याः मीमांसा तदुक्तम् शब्दानामेव सा शक्तिस्तर्को यं पुरुषाश्रय इति अथवा शब्दाश्च न्यायाश्च शब्दन्यायाः शब्दोऽर्थवान्न्यायो मीमांसा तैः समन्वितेषु संयु
क्तेषु किमेकवारं दृष्टेषु नेत्याह बहुश इति बहून्वारान्बहुशः व्याससमासैर्बहुप्रकारैरचितेष्वित्यर्थः किमर्थं दृष्टेषु पटुधियां होराफलज्ञप्तये चतुरबुद्धीनां
होराफलार्थावबोधनाय प्राक्तनकर्मविपाको होरा होरायाः फलं होराफलं तस्य ज्ञप्तिः तत्सकलं शुभाशुभं तज्ज्ञानाय किंभूतम् शास्त्रप्लवम् स्वल्पं ल

भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये शब्दन्यायसमन्वितेषु बहुशः शास्त्रेषु दृष्टेष्वपि होरातंत्रमहार्णवप्रतर
णे भग्नोद्यमानामहं स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं प्रारभे २

घुग्रंथं वृत्तविचित्रम् वृत्तैः शार्दूलविक्रीडितप्रभृतिभिर्विचित्रं
रम्यम् तस्मात्स्वल्पार्थत्वेनैवास्य गुणवत्त्वम् यतस्तेषामत्राप्युद्यमभंगो न भवति स्वल्पमित्यनेन ग्रहणधारणे सुकरत्वं प्रदर्शयति तथा च हस्ति
वैद्यकरो वीरसेनः समासोक्तस्य शास्त्रस्य सुकरं ग्रहणधारणे वृत्तविचित्रमित्यनेन सूक्ततां प्रदर्शयति ननु स्वल्पशास्त्रस्य स्वल्पार्थत्वेनैव भावि
ष्यतीत्याह अर्थबहुलं बह्वभिधेयम् अत एव पूर्वविरोधि शास्त्रयोरस्य गौरवम् अन्यथा हि शास्त्रसंभवात् पुनरुक्ततादोषः स्यात् एतदुक्तं
भवति प्रागभिहितशास्त्राण्यतिविस्तृतान्यतस्ते भग्नोद्यमास्तदर्थमहं शास्त्रप्लवं प्रारभे ननु कदाचिदल्पप्रज्ञतया ते भग्नोद्यमास्तत्कृतो लब्धा
म् यथा पूर्वशास्त्राणां महत्त्वाद्भग्नोद्यमास्तदर्थमिदमल्पमित्यत इदमाह पटुधियामिति अनेनैतत्प्रतिपादितं भवति नहि ते बुद्धिहीन-
त्वात्तेषु शास्त्रेषु भग्नोद्यमाः किन्तर्हि शास्त्रदोषादन्यत्रापि तेषामुद्यमभंगः स्यात् प्लवमपि स्वल्पं च लघुवृत्तमदीर्घं विचित्रं रम्यमर्थबहुलं
वित्तपरिपूर्णं एवंविधं तितीर्षूणामतिसुकरत्वावहं भवतीति २

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अधुनाहोराशास्त्रस्यपुराकृतकर्मविपाकव्यंजकत्वंवर्णद्वयपरिहारेणशब्दव्युत्पत्तिंप्रदर्शयन्निंद्रवज्रयाह होरेति होरार्थशास्त्रंहोरा नामहोरा
त्रविकल्पमेकेवांछंति अहश्चरात्रिश्चाहोरात्रशब्देनोच्यते तस्यविकल्पोविकल्पना एकेअन्येहोरांवांछंतिइत्यर्थः कथमुच्यते पूर्वपरवर्णलो-
पात् अहोरात्रशब्दस्यपूर्ववर्णोकारोपरवर्णश्चत्रकारस्तयोर्लोपमदर्शनंकृत्वाहोराशब्दोवशिष्यते किमर्थंपुनरहोरात्रशब्दाद्धोराशब्दोव्युत्पाद्यते
तं४ इति अत्रोच्यते मेषादयोद्वादशलग्नराशयोहोरात्रांतर्भूताः लग्नस्यचकालवशाज्ज्ञानम् लग्नवशाच्छुभाशुभज्ञानम् अतोहोरात्राश्रयत्वात्तत-
एवहोराशब्दोव्युत्पाद्यते एतदेवाचार्यस्याप्यभिप्रेतम् यतः परमतमप्रतिषिद्धंस्वमतमिति तथाचसारावल्याम् आद्यंतवर्णलोपाद्धोरास्माकंभव
त्यहोरात्रात् तत्प्रतिषिद्धाः सर्वेग्रहभगणाश्चिंत्यतेयस्मात् किमस्यप्रयोजनमित्याह कर्मार्जितंपूर्वभवेसदादियत्तस्यपंक्तिंसमभिव्यनक्ति
पूर्वभवेप्राग्जन्मनियत्सदादिशुभमशुभंमिश्रंचकर्मार्जितंतस्यपंक्तिंपाकंसम्यक् व्यनक्तिप्रकटीकरोति तथाचलघुजातके यदुपचितमन्यजन्म

होरेत्यहोरात्रविकल्पमेकेवांछंतिपूर्वापरवर्णलोपात्
कर्मार्जितंपूर्वभवेसदादियत्तस्यपंक्तिंसमभिव्यनक्ति ३

निशुभाशुभंतस्यकर्मणःप्राप्तिं व्यंजयतिशास्त्रमेतत्तमसिद्रव्याणिदीपइवेति ननुशुभस्याशुभस्यवावश्यभाविनः किंव्यनक्ति उच्यते द्विविधं
शुभाशुभं दृढकर्मोपार्जितमदृढकर्मोपार्जितंच तत्रदृढकर्मोपार्जितस्यदशाफलंपाकक्रमेणव्यनक्ति अशुभंदशाफलंज्ञात्वायात्रादेःपरिहारःक
र्तव्यः शुभंज्ञात्वायात्रादेरतिशयेनदानम् अदृढकर्मोपार्जितस्याष्टकवर्गेणफलव्यक्तिः तच्चाशुभंज्ञात्वाशांत्यादिभिरुपशमंनयेत् तथाचयव
नेश्वरः यद्यद्विधानंनियतंप्रजानांग्रहर्क्षयोगप्रभवंप्रसूतौ भाग्यानितानीत्यभिशब्दयंतिवर्षानुयोगेनदिशानराणाम् तदप्यभिज्ञोद्विविधंनिरु
क्तेस्थिरारव्यमौत्पातिकसंज्ञितंच कालक्रमाज्जातकनिश्चितंयत्क्रमोपसर्पिस्थिरमुच्यतेतत् सप्तग्रहाणांप्रथितानियानिस्थानानिजन्मप्रभवानि
सद्भिः तेभ्यःफलंचारग्रहक्रमस्थाद्दृक्यर्थदौत्पातिकसंज्ञितंतत् अनेनास्थिरस्यशांत्यादिभिरुपशमःप्रदर्शितोभवति उक्तंच भगवताव्यासेन विह-
न्याद्दुर्बलंदैवंपुरुषेणविपश्चितेति ३

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अधुनाव्यवहारार्थंकालाख्यस्यपुरुषस्यमेषादिराशिपूर्वकंशिरःप्रभृत्यंगविभागंशार्दूलविक्रीडितेनाह कालांगानीति कालस्यांगानिकालांगानितानिचमेष-
प्रभृतिराशयोनवर्क्षचरणानवभिर्ऋक्षचरणैर्नक्षत्रपादैःप्रमाणंयेषांते अश्विप्रथमा अश्विनीतःप्रभृतिनवनवनक्षत्रपादाएकैकस्यप्रमाणम् मेषप्रभृतिरा-
शयोश्विप्रथमैर्नक्षत्रपादैर्युक्ताइत्यर्थःतथा मूलाराशयो धातुरवयवाः तथाचयवनेश्वरः इहेस्तपादेभवनंगतेति तथाचभगवान्गार्गिः अश्विनीभरणीमेषः
कृत्तिकापादमेवच तत्पादत्रितयंब्रह्मवृषःसौम्यदलंतथा सौम्यार्धमार्द्रामिथुनस्त्वादित्याश्चरणत्रयं तत्पादःपुष्यमाश्लेषाराशिःकर्कटकःस्मृतः पित्र्यंभाग्यमथा
र्यम्णःपादःसिंहःप्रकीर्तितः तत्पादत्रितयंकन्याहस्तश्चित्रार्धमेवच तथाचित्रादलंस्वातीविशाखाचरणत्रयम् तत्पादंमित्रंदेवत्यंज्येष्ठावृश्चिकउच्यते मूलमाप्यं
तथाधन्वीपादोविश्वेश्वरस्यच तत्पादत्रितयंश्रवणंमकरोवासवोदलम् तद्दलंवारुणंकुंभस्तथाजाच्चरणत्रयं तत्पादमेकोमीनःस्यादहिर्बुध्न्यंचरेवती चक्रे-
स्थिताः चक्रस्थिताःचक्रस्थिताराशयः अथवाचक्रवत्स्थिताः अनेकसंस्थानमेषांप्रदर्शितंभवति तत्रकालाख्यस्यवरांगंशिरोमेषःआननंमुखंतद्वृषःउरोव

कालांगानिवरांगमाननमुरोहृत्क्रोडवासोभृतोबस्तिर्व्यंजनमूरुजानुयुगलेजंघेततोंघ्रिद्वयम् मेषा
श्विप्रथमानवर्क्षचरणाश्चक्रस्थिताराशयोराशिक्षेत्रगृहर्क्षभानिभवनंचैकार्थसंप्रत्ययाः ४

क्षोमिथुनः तद्धृद
यंकुलीरःक्रोडमुदरंसिंहःवासोभृत् कटिःकन्या बस्तिर्नाभिव्यंजनयोरंतरंतुला व्यंजनंयेनपुंस्त्वंव्यंज्यतेलिंगंतद्वृश्चिकःऊरूयुगलंधन्वीजानुयुगलंमकरः
जंघेकुंभःअंघ्रिद्वयंपादयुगलंमीनइति तथाचबादरायणः मेषःशिरोथवदनंवृषभोविधातुर्वक्षोभवेन्मिथुनंहृदंकुलीरःसिंहस्तथोदरमथोयुवतिःक
टिश्चबस्तिस्तुलाभृदथमेहनमष्टमंस्यात् धन्वीचास्योरुयुगलंमकरोजानुद्वयंभवति जंघाद्वितयंकुंभः पादौमत्स्यद्वयंचेति अस्यप्रयोजनम् जन्मकाले
योराशिःपापग्रहाक्रांतःसकलाख्यस्यपुरुषस्ययस्मिन्नंगेस्थितःस्तत्रांगेजातस्योपघातोवक्तव्यःयत्रसौम्यस्थितःस्तत्रपुष्टिरिति तथाचसारावल्याम्
कालनिरस्यावयवाःपुरुषाणांकल्पयेत्प्रसवकाले सदसद्ग्रहसंयोगात्पुष्टाःसोपद्रवाश्चापिइतिराशिक्षेत्रमित्यादि एषांचप्रत्येकस्यराशिरितिसंज्ञा तस्यैवप
र्यायनामानिक्षेत्रम् गृहम् ऋक्षंभम् राशिश्चक्षेत्रंचगृहंचऋक्षंचभंचनानिराशिक्षेत्रगृहर्क्षभानि भवनंच गृहत्वाद्भवनग्रहणेसिद्धेयत्पुनर्भवनग्रहणंकृ-
तंतत्सर्वेषांगृहपर्यायाणांग्रहणार्थम् ऋक्षत्वादपिभग्रहणेसिद्धेयत्पुनर्भग्रहणंतेनैतद्दर्शयति यत्रयत्रहोराशास्त्रेभग्रहणंऋक्षग्रहणंवातत्रतत्ररा
शेरेवग्रहणंस्यान्नतुनक्षत्रस्या एतेराश्यादयः शब्दाएकार्थसंप्रत्ययाएकार्थाभिधायकाइत्यर्थः ४

३

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथ नाराशीनांस्वरूपविज्ञानंवसंततिलकेनाह मत्स्येति मीनोराशिर्मत्स्यौमत्स्यद्वयमन्योन्यंपुच्छाभिमुखंएतत्तु कुतोलभ्यते उच्यते तस्यैवोभयोदयत्वात् वक्ष्यतिच उभंसमेत्युभयतः पृथुरोमयुग्ममिति घटोकुंभः स्कंधासक्तरिक्तघटधारीपुरुषः कुंभः मिथुनोनृमिथुनराशिर्मिथुनंनृमिथुनम् स्त्रीपुमांन्सोनन्मिथुनं सगदंसवीणंपुमान्सगदः स्त्रीसवीणा चापीनरोश्वजघनः धन्वीराशिश्चापिविद्यमानधन्वानरः अश्वजघनः अश्वस्तस्येव जघनंयस्य सोश्वजघनः चतुष्पादित्यर्थः मकरोमृगास्यः मकरोराशिर्मकरएवसच मृगास्यः मृगमुखः तौलीत्यादि तुलाविद्यमानतुलः पुरुषः कन्याकुमारीप्लवगानौकास्थासस्यदहना सस्यानिचदहनश्चतोसस्यदहनौताभ्यांसहवर्तनंइतिसासस्यदहना शेषाराशयोमेषवृषकर्कटकसिंहवृश्चिकाः स्वनामसदृशाः स्वसंज्ञाविहिताकृतयः तद्यथामेषोमेषः वृषोवृषभः कर्कटकः कुलीरोजलचरप्राणी सिंहः केसरी वृश्चिकोवृश्चिकएवकीटजातिः तथाचसत्यः छागोवृषभोवीणागदाधरंमिथुनमंभसिकुलीरः सिंहः शैलेकन्यानौसंस्थादीपसस्यकरा पुरुषस्तुलाधरोवृश्चिकोथधन्वीनरोहयांत्यार्धः मकरार्धंमृगपूर्वंकुंभःपुरुषोझषोमीनः स्वचराश्चसर्वे सर्वेद्वादशराशयः स्वचराः स्वेषुस्वेषुस्थानेषुचरंति यथादृष्टस्थाननिवासिनइत्यर्थः तद्यथा मेषवृषावरण्योद्विवारात्रौ मिथुनो-

मत्स्यौघटीनृमिथुनंसगदंसवीणंचापीनरोश्वजघनोमकरोमृगास्यः तौलीससस्यदहनाप्लवगाचकन्याशेषाःस्वनामसदृशाःस्वचराश्चसर्वे ५

ग्राम्यः कर्कटोंबुचरः सिंह आरण्यचारी कन्यादर्शितदेशविभागा तुलापण्यवीथिस्थः वृश्चिकःश्वभ्रचारी धन्वीग्राम्यः मकरः पूर्वभागेअरण्योन्योजलचरः कुंभोग्राम्यः मीनोजलचरइति तथाचयवनेश्वरः आद्यः स्मृतोमेषसमानमूर्तिः कालस्यमूर्द्धागदितः पुराणैः सोजाविकासंचरकंदराद्रिस्तेनाग्निधात्वाकररत्नभूमिः १ वृषाकृतिस्कंधगतोद्वितीयः सवल्ककंठायतनंविधातुः वनाद्रिसानुद्विपगोकुलानांकृषीवलानामधिवासभूमिः २ वीणागदाभृन्मिथुनंतृतीयः प्रजापतेस्कंधभुजांसदेशः प्रनर्तकोगायनशिल्पकस्त्रीक्रीडारतिर्द्यूतविहारभूमिः ३ कर्कः कुलीराकृतिरंबुसंस्थोवक्षःप्रदेशोविहितश्चधातुः केदारवापीपुलिनानितस्यदेवांगनारम्यविहारभूमिः ४ सिंहश्चशैलेहृदयप्रदेशंप्रजापतेः पंचममाहुराद्याः तस्याटवीदुर्गगुहावनाद्रिव्याधावनीदुर्गवनप्रदेशाः ५ प्रदीपिकांगृह्यकरेणकन्यानौस्थाजलेषष्ठमितिब्रुवंति कलार्थधीराजठरंविधातुः सशाड्वलास्त्रीरतिशिल्पभूमिः ६ वीथ्यांतुलापण्यधरोमनुष्यः स्थितः सनाभीकटिबस्तिदेशे क्रयक्रयार्थवीथ्यापणपट्टनाध्वसार्थाधिवासोन्ननसस्यभूमिः ७ श्वभ्रोष्टमोवृश्चिकविग्रहस्तु प्रोक्तः प्रभोर्मेढ्रगुदप्रदेशे गुहानिलश्वभ्रविषाश्मगुप्तिर्वल्मीककीटाजगराहिभूमिः ८ धन्वीमनुष्योहयपश्चिमार्धस्तमाहुरूरू

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भुवनप्रणेतुः समास्थितव्यस्तसमस्तवाजीश्वरस्तथा दृश्यजरथाश्वभूमिः ९ मृगार्द्धपूर्वोमकरोंबुगार्धोजानुप्रदेशं नसुशंतिधातुः नदीवनारण्यसरोऽन्यकूपश्व-भ्राधिवासोदशमः प्रदिष्टः १० स्कंधेतुरिक्तः पुरुषस्य कुंभोजंघेनमेकादशमाह्वराधाः उष्णोदकाधारकुसस्यपक्षी स्त्रीशौंडिकाद्यूतनिवासभूमिः ११ जलेतुमी नद्वयमत्स्यराशिः कालस्यपादौ विहितौ वरिष्ठो सपुण्यदेवद्विजतीर्थभूमिर्नदीससमुद्रांबुधराधिवासः १२ प्रयोजनं हृतनष्टादिषु द्रव्यस्थानपरिज्ञानं उक्तंच राशिभ्यः कालदिग्देशाइति अधुनाराशिनवमांशद्वादशांशाधिपान्त्रोटकेनाह क्षितिजसितज्ञेति क्षितिजादयोग्रहाः गृहपाः अंशपाश्च गृहाणांराशीनां मेषादीनांपतयः स्वामिनोभवंति ५ क्षितिजोंगारकः समेषस्याधिपतिः सितः शुक्रः वृषभस्य ज्ञोबुधोमिथुनस्य चंद्रः कर्कटकस्य रविरादित्यः सिंहस्य-सौम्योबुधः कन्यायाः सितः शुक्रस्तुलायाः अवनिजोंगारकोवृश्चिकस्य सुरगुरुर्बृहस्पतिः धन्विनः मंदःशनैश्चरोमकरस्य सौरिः शनैश्चरोमंदइत्य मरः कुंभस्यगुरुर्बृहस्पतिः मीनस्येति प्रयोजनं होरास्वामिगुरुज्ञवीक्षितयुतनेत्यत्र एतएवमेषादिनवांशकाधिपतयः नकेवलंमेषस्यभौमाधिपतिः या वद्यस्मिन्राशौमेषनवांशकोदयोभवति तस्यापिभौमोधिपतिः शेषाणामप्येवं तेचनवांशकाः कथंभवंतीत्याह अजमृगतौलिचंद्रभवनादिनवांश-

क्षितिजसितज्ञचंद्ररविसौम्यसितावनिजाः सुरगुरुमंदसौरिगुरवश्चगृहांशकपाः अजमृगतौलिचंद्रभवनादिर्नवांशविधि भवनसमांशकाधिपतयः स्वगृहाद्द्वादशशः ५

विधिरिति अजोमेषः मृगोमकरः तौलीतुला चंद्रभवनंकर्कटकः अजोमेषः मृगोमकरः तौलि स्तुलः चंद्रभवनं कर्कः आदिनवांशविधिरिति प्रत्येकमभिसंबध्यते तत्रैवसंबंधोजायते अजादिर्मृगादिः तौल्यादिः चंद्रभवनादिर्नवांशविधिः सर्व राशीनांविधिर्भवति तत्रादिनवांशाविधिः मेषस्यतेनमेषवृषमिथुनकर्कटसिंहकन्यातुलावृश्चिकधनुर्धराणांसंबंधिनोनवांशाः मेषस्यभवंति मृगादिर्वृषस्य ते नमकरकुंभमीनमेषवृषमिथुनकर्कटसिंहकन्यासंबंधिनोनवांशाः वृषस्यतुलादिर्मिथुनस्य तेनतुलावृश्चिकधनमकरकुंभमीनमेषमिथुनानांसंबंधिनोन-वांशाः मिथुनस्यकर्कटादिः कर्कटस्य तेनकर्कटसिंहकन्यातुलावृश्चिकधनमकरकुंभमीनानांसंबंधिनोनवांशाः कर्कटस्य एवंसिंहस्यमेषवत् कन्यायाः वृषवत् तुलायाः मिथुनवत् वृश्चिकस्यकर्कटवत् पुनरपिधनुषःमेषवत् मकरस्यवृषवत् कुंभस्यमिथुनवत् मीनस्यकर्कटवत् तदुक्तंग्रंथांतरे मेषकेस रिधन्वीनांमेषाद्याअंशकाः स्मृताः वृषकन्यामृगाणांचमकराद्यानवस्मृताः १ तुलामिथुनकुंभानांतुलाद्यानवकीर्तिताः कर्कटालिझषाणांचकर्कटाद्या नवांशकाः प्रयोजनम् स्तेनोपाख्यापंडिताद्याइत्यादि भवनसमांशकाधिपतयः स्वगृहाद्द्वादशशइति भवनसमाअंशकाभवनांशकाः भवनानि- ४

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कि ५ वृष ५

द्वादशनलसमा अंशकाद्वादशांशकाइत्यर्थः तेचप्रत्येकस्यराशेः स्वगृहादारभ्यगणनीयाः तद्यथा मेषस्यमेषवृषमिथुनकर्कटसिंहकन्यातुलावृश्चिकधन्विम
करकुंभमीनानांसंबंधिनोद्वादशभागाभवंति तेषांभौमाद्याधिपतयः एवंवृषस्यवृषाद्यामेषांताः मिथुनस्यमिथुनाद्यावृषांताः कन्यायाः कन्याद्याः सिंहांताः
तुलायास्तुलाद्याः कन्यांताः वृश्चिकस्यवृश्चिकाद्यास्तुलांताः धन्विनोधनुराद्याः वृश्चिकांताः मकरस्यमकराद्याधन्व्यंताः कुंभस्यकुंभाद्याः मकरांताः मीन
स्यमीनाद्याः कुंभांताः प्रयोजनं तात्कालिकेंदुसहितोद्विरसांशकइत्यादि ८ अधुनात्रिंशांशकस्याधिपतीनांगणनयापरिज्ञानंचसुष्पितायाग्रयाहकुजेति
कुजोभौमः रविजः सौरिः शनिः गुरुर्बृहस्पतिः ज्ञोबुधः शक्रोभार्गवः एवंकुजरविजगुरुज्ञशक्राणांक्रमेणभागाः पवनसमीरणकौर्पिजूकलेयाः तद्यथा पव
नाः वायवः पंचपंचएवभागाः कुजस्य ततऊर्ध्वंसमीरणाः पंचैवरविजस्य एवंदश ततऊर्ध्वंकौर्पिसंज्ञाअष्टौगुरोः कौर्प्यारव्योवृश्चिकः सचगणनयाष्टमः
एवमष्टादश ततः परंजूकसंज्ञाः सप्तभागाः बुधस्यजूकसंज्ञातुलायाः सचगणनयासप्तमः एवंपंचविंशतिः ततऊर्ध्वंलेयसंज्ञाः पंचशुक्रस्य लेयसंज्ञा
सिंहस्य सचगणनयापंचमः एवंत्रिंशत् किंसामान्येनेत्यतआह अयुजियुजीति अयुजिविषमराशौकुजाद्योग्रहाः पवनादीनांभागानांयथाक्रमे-

कुजरविजगुरुज्ञशक्रभागाः पवनसमीरणकौर्पिजूकलेयाः अयुजियुजितुभेविपर्ययस्थाः शशिभवनालिझषांतमृक्षसंधिः ७

णाधिपतयः तत्रमेषमिथुनसिंहतुलाधनुः कुंभानांविषमराशीनामेषक्रमः युजिभेतुविपर्ययस्थाः युजिसमराशौपवनादिभागग्रहाश्चविपर्ययस्थाः वि-
लोमेनतिष्ठंति तद्यथा तत्रादौपंचशक्रस्य ततः परंसप्तबुधस्य एवंद्वादश ततः परंअष्टौजीवस्य एवंविंशतिः ततः परंपंचशनेः एवंपंचविंशतिः ततः परंपंच-
भौमस्य एवंत्रिंशत् तत्रवृषकर्कटकन्यावृश्चिकमकरमीनाः समराशयः एवंत्रिंशद्भागाधिपतयः पंचताराग्रहाः अत्रकेचिदाहुः यथाविपर्ययस्थाइत्य-
नेनैवानंतराणामेवपवनादिसंख्यानांभागानांविपर्ययेणभवितव्यंनव्यवहितानांकुजादीनां तच्चायुक्तं तस्मात्तुशब्दोत्रपठ्यते सचकुजादिसमुच्च-
यार्थः तथाचश्रुतकीर्तिः पंचाग्नयपंचचाष्टौसप्तचपंचैवचोजभवनेषु धरणिसुतमंदसुरगुरुबुधशुक्राणांक्रमेणांशाः पंचैवसप्तचाष्टौपंचपंचाग्नयसमभव
नेषु भागाभार्गवशशिसुतसुरेज्यशनिभूमिपुत्राणामितिप्रयोजनं कन्यैवदुष्टाव्रजतीहदास्यंसाध्वीसमायाकुचरित्रयुक्ता भूम्यात्मजर्क्षेक्रमशोंशकेषु
वक्रार्किजीवेंदुजभार्गवाणामित्यादि शशिभवनालिझषांतमृक्षसंधिः अंतशब्दः प्रत्येकमभिसंबध्यते शशिभवनांतमत्यंतंझषांतंचऋक्षसंधिः श
शिभवनंकर्कटः अलिर्वृश्चिकः झषोमीनः एतेषामंतंनवमनवांशकं यत्रनक्षत्रराश्योर्युगपत्पर्यवसानंतदृक्षसंधिः यस्मादाश्लेषांतेकर्कटकांतंज्येष्ठांतंच

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वृश्चिकांतेरेवत्यंतेमीनांतमिति एतद्देवलोकेगंडांतमितिप्रसिद्धं उक्तंच अश्विनीपित्र्यमूलाद्यामेषसिंहहयादयः विषमर्क्षाण्निवर्तंतेपादवृध्यायथोत्तर
मितिप्रयोजनं संधौपापैः शशिनिचजडःस्यान्नचेत्सौम्यदृष्टइति ७ अधुनाव्यवहारार्थंमेषादीनांसंज्ञायथार्थमाह क्रियेति इत्थमेवंप्रकारनामानोमे
षाद्याराशयोज्ञेयाः तद्यथा क्रियोमेषः तावुरिर्वृषः जितुमोमिथुनः कुलीरः कर्कटः लेयःसिंहः पाथोनःकन्या जूकस्तुला कौर्प्यारव्योवृश्चिकः तौक्षिको
धन्वी आकोकेरोमकरः हृद्रोगः कुंभः अंत्यभंमीनइति प्रयोजनम् गोसिंहौजितुमाष्टमौक्रियतुलेत्यादि ८ अधुनाग्रहस्यक्षेत्रहोराद्रेष्काणनवां
श द्वादशभागत्रिंशद्भागानांवर्गसंज्ञानांव्यवहारार्थमिंद्रवज्रयाह द्रेक्काणेति द्रेक्काणाद्यःषट्पदार्थाःस्वकीयग्रहस्यवर्गसंज्ञातत्रद्रेक्काणोराशि-
त्रिभागः होराराश्यर्द्धं नवभागोनवांशकः त्रिंशांशकःत्रिंशद्भागः द्वादशांशोद्वादशभागः क्षेत्रंराशिः एतत्संज्ञिताश्च एषांसंज्ञारव्यायेषांतेतथा

क्रियतावुरिजितुमकुलीरलेयपाथोनजूककौर्प्यारव्याः तौ
क्षिकआकोकेरहृद्रोगश्चांत्यभंचेत्थम् ८ द्रेक्काणहोरान
वभागसंज्ञास्त्रिंशांशकद्वादसंज्ञितास्च क्षेत्रंचयद्यस्यस
तस्यवर्गोहोरेतिलग्नं भवनस्यचार्द्धं ९

यद्यस्यग्रहस्यक्षेत्रंराशिः सतस्यवर्गः वर्गश
ब्देनात्रषड्वर्गः तेसर्वेएवग्रहस्यात्मीयवर्गसंज्ञाः एवंपड्विकल्पोराशिः षट्स्वात्मीयेषुस्थितोवर्गस्थोभवति ननुग्रहस्यषड्विकल्पानसंभवंति
यतश्चंद्रार्कयोस्त्रिंशांशकाभावः भौमादीनांहोराभावः तस्मात्पंचसंभवंति तेनपंचस्वात्मीयेषुस्थितोवर्गस्थः एतदस्युपलक्षणम् अतोयथासं
भवंस्वादिविकल्पस्थोग्रहोवर्गस्थउच्यते तस्माद्भगवान्गार्गिः क्षेत्रंहोराथद्रेक्काणोनवांशोद्वादशांशकः त्रिंशांशकश्चवर्गोयंसर्वस्यस्वउदाहृतः
आद्येष्वपिपदार्थेषुस्थितः स्वेषुस्ववर्गगः परवर्गगतोप्येवंग्रहोभवतिचान्यथा इति प्रयोजनम् एकोपिवक्रोपगतोनराणांशुभाशुभोवापिचतुष्ट
यस्थः वर्गोपितस्योदयगोविनाशंबहुप्रकारंकुरुतेध्वगानामित्यादि होरालग्नयोः संज्ञार्थमाह होरेतिलग्नंभवनस्यचार्धमिति होरा इतिल-
ग्नमुच्यते प्रयोजनं होरास्वामिगुरुज्ञवीक्षितफलेति भवनस्यचराशेरर्द्धंहोरा प्रयोजनं मार्तंडेंद्वोरायुजिसमभेचंद्रभान्वोश्चहोरेति ९

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

५

अथनाराशीनांरात्रिदिनसंज्ञत्वं पृष्ठोदयशीर्षोदयत्वंचवसंततिलकेनाह गोजाश्विककर्किमिथुना गोशब्देनवृषउच्यते अजोमेषः अश्वोस्यास्तीत्यश्वी धन्वी कर्कीकुलीरः मिथुनःप्रसिद्धः एतेगोजाश्विककर्किमिथुनाः समृगाः मृगेणमकरेणसहिताः षड्राशयोनिशाख्याः रात्रिबलसंज्ञा पृष्ठोदयाविमिथुनाः एतएवराशिसंज्ञाविमिथुनाः मिथुनवर्जिताः पृष्ठोदयसंज्ञाभवंति पृष्ठेनउदयंयांतीत्यर्थः मिथुनःपुनः शीर्षोदयः शीर्षोदयाइति उक्तेभ्यः शेषाःसिंहकन्यातुलावृश्चिककुंभाः शीर्षोदयाः शिरसाउदयंयांति दिनबलाश्चभवंति अत्ररात्रिदिनबलाख्यांइतिसंज्ञामात्रं यतस्तेषांपुनरोक्तंबलंवक्ष्यति द्विपदादयोन्हिनिशिचमासेचसंध्याद्वयेइति एवंसत्याचार्यस्यवचनविरोधःस्यात् तस्मात्संज्ञामात्रंबलग्रहणं प्रयोजनं रात्रिप्रसंज्ञेषु विलोमजन्मइत्यादि तथापृष्ठोदयकोभयसर्गाइति यात्रायांवक्ष्यतिच शीर्षोदयेसमभिवांछितकार्यसिद्धिंपृष्ठोदयेविपुलताबलबुद्धिनाशः शस्तंदिवादिनबलेनिशिनक्तवीर्ये रात्रौविपर्ययबलेगमनंनशस्तं अन्यल्लग्नेभ्योमीनस्यविशेषमाह लग्नंसमेत्युभयतः पृथुरोमयुग्ममिति पृथुरोमामत्स्यः तद्युग्मंमत्स्यद्वयंमीनोराशिः सउभ

गोजाश्विककर्किमिथुनाःसमृगानिशाख्याः पृष्ठोदयाविमिथुनाःकथितास्तएव शीर्षोदयादिनबलाश्चभवंतिशेषाल्लग्नंसमे
त्युभयतःपृथुरोमयुग्मं १० क्रूरःसौम्यःपुरुषवनितेतेचरागद्विदेहाःप्रागादीशाःक्रियवृषनृयुक्कर्कटाःसत्रिकोणाः यतःपृष्ठशीर्षाभ्यांल

ग्नसमेत्युद्गच्छति १० अथनाराशीनांक्रूरसौम्यविभागंस्त्रीपुरुषविभागंचरस्थिरद्विस्वभावविभागंदिगधिपत्वंहोराद्रेक्काणपतीनांविभागंचमंदाक्रांतयाह क्रूरःसौम्याइति तेमेषादयोराशयोयथाक्रमंक्रूरसौम्यसंज्ञाः तत्रमेषःक्रूरः वृषःसौम्यः मिथुनःक्रूरः कर्कटःसौम्यः एवंसर्वेषांयोज्यं युक्तंकरणीयमित्यर्थः तेनविषमराशयःक्रूरसंज्ञा समराशयःसौम्यसंज्ञाः प्रयोजनं क्रूरेषुजाताः क्रूरस्वभावाः सौम्येषुजाताःसौम्यस्वभावाभवंति तथाचसत्याचार्यः ओजाःपुरुषाश्चेपाः सौम्याः स्त्रीसंज्ञकाः क्रमात् ओजेषूग्राः पुरुषाः सौम्यायुग्मेषुभवनेषु पुरुषवनितेइति तएवमेषादयोयथाक्रमं पुरुषवनिताख्याज्ञेयाः तेनमेषःपुरुषोनरोवृषोवनितास्त्री एवंसर्वत्र तेनषड्विषमराशयःपुरुषसंज्ञाः षट्समराशयस्त्रीसंज्ञाः प्रयोजनं पुरुषराशिषुजातास्तेजस्विनःस्त्रीराशिषुजातामृदवोभवंति तेचरागद्विदेहाइति तएवमेषादयोयथासंख्यंचरागद्विदेहाख्याभवंति तत्रमेषश्चरः वृषोगःस्थिरः मिथुनोद्विदेहोद्विस्वभावः एवंकर्कटादिषुयोज्यं तेनमेषकर्कटतुलामकराश्चराः वृषसिंहवृश्चिककुंभास्थिराः मिथुनकन्याधनुर्मीनाद्विस्वभावाःप्रयोजनं चरराशिषुजाताश्चरस्वभावाभवंतिस्थिरेषुस्थिराःद्विस्वभावेषुमिश्रस्वभावाभवंति तथाचसत्यः चरसंज्ञाः स्थिरसंज्ञाद्विप्रकृतिश्चेतिराशयः क्रमशः राशिस्वभावतु

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्याजायंतेमकृतयः मसूतानाम् भागादीशाइति क्रियोमेषः तृषः मसिद्धः नृफग्मिथुनः कुलीरः कर्कटः एनोक्रियवृषनृयुकर्कटाः स्वत्रिकोणाख्यांस्वपंच
मनवमाख्यांसहिताः भागादिषु पूर्वाधास्कुवनस्थसुदिशास्कुईशाः स्वामिनः भवंति तेनमेषसिंहधन्विनः पूर्वस्याम् वृषकन्यामकरादक्षिणस्याम् मिथु
नतुलाकुंभाः पश्चिमायाम् कर्कटवृश्चिकमीनाउत्तरस्यामितिमयोजनम् त्हतनष्टादौ चौरादेर्द्रव्यस्यवादिग्विज्ञानं सूतिकागृहद्वारज्ञानंच तथान्व
यातव्यादिग्सुखगतस्यस्कुखेनोसिद्धिर्व्ययश्रमोभवतिदिकुमतिलोमलग्नइति मार्तंडेंद्वोरिति मार्तंडः सूर्यः इंदुश्चंद्रः अयुज्योजराशौयथाक्रमंमा-
र्तंडेंद्वोहोरेभवतः मथमाहोरासूर्यस्य द्वितीयाहोराचंद्रस्य होराशब्देनात्रराश्यर्द्धमुच्यते समभेचंद्रभान्वोश्चेति समभेसमराशौ चंद्रभान्वोः हो
रेभवतः मथमाहोराचंद्रस्यशशिनः द्वितीयाभानोः सूर्यस्यमयोजनम् सूर्यहोरायांजानास्तेजस्विनः चंद्रस्यहोरायांमृदुस्वभावाभवंति द्रेष्काणाःस्व
रिति द्रेष्काणोराशित्रिभागः स्वभवनस्कुतत्रित्रिकोणाधिपानांसंबंधिनोद्रेष्काणाभवंति मथमोद्रेष्काणः स्वभवनाधिपतेः आत्मीयभवनाधिपतेः

मार्तंडेंद्वोरयुजिसमभेचंद्रभान्वोश्चहोरे द्रेष्काणाःस्युःस्वभवनस्कुतत्रित्रिकोणाधिपानाम् ११ केचित्तुहोरांमथमांभपस्य
वांछंतिलाभाधिपतेर्द्वितीयाम्

द्वितीयः स्कुतभवनस्यपंचमस्थानाधिपतेः तृतीयः त्रित्रिकोणाधिपतेः नवमस्थानाधिपतेः तेनमेषस्य
मथमद्रेष्काणोभौमस्य द्वितीयोर्कस्य तृतीयोगुरोः वृषस्यमथमः शुक्रस्य द्वितीयोबुधस्य तृतीयः शनेः मिथुनस्यमथमोबुधस्य द्वितीयः शुक्र
स्य तृतीयः शनेः कर्कटस्यमथमश्चंद्रस्य द्वितीयोभौमस्य तृतीयोजीवस्य सिंहस्यमथमः सूर्यस्य द्वितीयोजीवस्य तृतीयोभौमस्य कन्यायाःमथ
मोबुधस्य द्वितीयः शनेः तृतीयः शुक्रस्य तुलायाःमथमः शुक्रस्य द्वितीयः सौरस्य तृतीयोबुधस्य वृश्चिकस्यमथमोभौमस्य द्वितीयोजीवस्य तृ
तीयश्चंद्रस्य धन्विनः मथमोजीवस्य द्वितीयोभौमस्य तृतीयोरवेः मकरस्यमथमः शनेः द्वितीयः शुक्रस्य तृतीयोबुधस्य कुंभस्यमथमः सौरेः
द्वितीयोबुधस्य तृतीयः शुक्रस्य मीनस्य मथमोजीवस्य द्वितीयश्चंद्रस्य तृतीयोभौमस्येति मयोजनम् द्विरुक्तमांस्वांशकभंत्रिभागगैरित्यादि
११ अथनामतांतरेणहोराद्रेष्काणपतीनांलक्षणमिंद्रवज्रयाह केचिदिति केचिद्यवनेश्वराद्यः मथमांहोरांभपस्यलग्नाधिपतेर्वांछंति द्विती
यांलाभाधिपतेरेकादशस्थानाधिपस्य यथामेषस्यमथमहोरा भौमस्याद्वितीयासौरस्यएवंसर्वेषामपियोज्यम् द्रेष्काणसंज्ञामपीति स्वद्वा
दशैकादशराशिपानामपि एकेद्रेष्काणसंज्ञांवांछंति कथयंति मथमंस्वाधिपतेरात्मीयस्वामिनः द्वितीयंद्वादशाधिपतेः तृतीयमेकादशरा-



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्यधिपतेः यथा मेषस्यप्रथमोद्रेक्काणोभौमस्य द्वितीयोजीवस्य तृतीयःसौरस्य एवमन्येषामपिज्ञातव्यम् तथाचयवनेश्वरः आद्याहोराभवनस्यपत्यु
रेकादशस्तैत्रपतेर्द्वितीया स्वद्वादशैकादशराशिपानांद्रेक्काणसंज्ञाःक्रमशोत्रचोक्ताः एवंयवनेश्वरमतेन सर्वग्रहाणांहोराद्रेक्काणाधिपत्यमस्ति एतदा
चार्यस्यनाभिप्रेतम् सत्यादीनामपि तथाचसत्यः ओजेषुरवेर्होराप्रथमायुग्मेषुचोत्तराशेषाः इंदोःक्रमशोज्ञेयाजन्मानिचेष्टोस्वहोरास्थोराशिस्तद्रे-
क्काणस्तत्पंचमनवम १ ५ ९ भवनपतयःस्फुटःतेषामधिपतयःस्फुटःस्वद्रेक्काणेग्रहाबलिनइति १२ अथग्रहाणामुच्चनीचविभागंप्रुषिताग्रहाय
अजाद्येति अजादयोराशयोयथाक्रमेणदिवाकरादीनांग्रहाणांतुंगाःउच्चसंज्ञाः तद्यथा अजोमेषः आदित्यस्योच्चः वृषभोवृषःसचंद्रस्य मृगोमकरः
सभौमस्य अंगनाकन्याबुधस्य कुलीरःकर्कटःजीवस्य झषोमीनः शुक्रस्य वणिक्तुलाधरःसौरस्य एतएवराशयोदशादिषुभागेषुसूर्यादीनांपरमोच्च
संज्ञाभवंति तत्र आदित्यस्यमेषोदशमेभागेपरमोच्चः चंद्रस्यवृषःशिखिसंख्येतृतीयेभागे भौमस्यमकरोमनुयुक्संख्येऽष्टाविंशेभागेपरमउच्चः म
नवश्चतुर्दशतेषांयुग्मंद्विगुणामनवइत्यर्थः बुधस्यकन्यायास्तिथिसंख्येपंचदशेभागे जीवस्यकर्कटइंद्रियसंख्ये पंचमेभागेशुक्रस्य मीनःत्रिनव-

द्रेक्काणसंज्ञामपिवर्णयंतिस्वद्वादशैकादशराशिपानाम् १२ अजवृषभमृगांगनाकुलीरझषवणिजौचदिवाकरादितुंगाः दश
शिखिमनुयुक्तिथींद्रियांशैस्त्रिनवकविंशतिभिश्चतेस्तनीचाः १३

कसंख्येसप्तविंशेसौरस्यतुलाविंशे ननुसर्वएवराशिरुच्चसंज्ञःसचत्रिं
शदंशकः तत्रदशादीनांनदंतभूतानांसिद्धैवोच्चसंज्ञा तत्किंदशाद्युपादानम् सत्यम् किंतुपरमोच्चलज्ञानार्थंदशादीनांग्रहणम् अथवासर्वएवराशि
उच्चसंज्ञः तेनोक्तराशिदशाद्यंशसंख्याःकथितान्ग्रहाः परमोच्चस्थाइत्युच्यंते परमोच्चज्ञानेनस्वोच्चव्यतिरिक्तंप्रयोजनमस्ति तथाचभगवान्गार्गिः
स्वोच्चगोरविशीतांशूजनयेतांनराधिपम् उच्चस्थोधनिनंख्यातंसस्त्रिकोणगतावपि तथाचयवनेश्वरःस्वोच्चेषुसर्वान्परिगृह्यभागंतिष्ठत्सुसर्वे
षुबलाधिकेषु लग्नेशुभेपूर्णवपुश्चमतोंदोःत्रैलोक्यराज्याधिपतिःप्रसूतः अथेदृशाःएवंविधाःसूर्यादयःपरमोच्चस्थिताद्रष्टव्याः अत्रवृत्तभंगभयात्सूर-
णमत्ययांतादशादयोआचार्येणोक्ताः पूरणप्रत्ययांतत्वमेषांयवनेश्वरवाक्याद्ज्ञायते तथाचयवनेश्वरःसूर्यस्यभागेदशमेतृतीयेचंद्रस्यजीवस्यतु
पंचमेंशे सौरस्यविंशेत्वधिसप्तकेतुविंद्याङ्गोःपंचदशेबुधस्य भौमस्यविंशेऽष्टकतेपरोच्चेविंशह्रवेसूर्यकृतस्यनीचाइति तेआदित्यादयःग्रहाः
अस्तनीचाःअस्तेनीचंयेषांते अस्तःसप्तमः प्रकृतित्वात् स्वोच्चात्सप्तमःप्रत्येकस्यनीचसंज्ञा तद्यथा आदित्यस्यस्वोच्चान्मेषात्सप्तमस्तुला

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सनीचसंज्ञः एवंचंद्रस्य सप्तमोवृश्चिकः भौमस्यसप्तमःकर्कटः बुधस्यमीनः गुरोर्मकरः शुक्रस्यकन्या सौरस्यमेषइति अत्रापिदशादिषुभागेषुपरम
नीचस्याद्रष्टव्याः तथाचयवनेश्वरः स्वोच्चात्तुयामित्रसुशांतिनीचंत्रिंशल्लवोयच्चसमानसंख्या अथदशा एवंविधाख्यादयःपरमनीचस्याभवंति पर
मनीचस्थानामनिष्टंफलंभवतीतिगार्गिणाप्रदर्शितम् तथाचगार्गिः अंधंदिगंबरंमूर्खंपरपिंडोपजीविनम् कुरुतामतिनीचस्थौपुरुषंशशिभा
स्कराविति १३ अथनायग्रहाणांवर्गोत्तममूलत्रिकोणपरिज्ञानंवसंततिलकेनाह वर्गोत्तमेति चरग्रहादिषुचरस्थिरद्विस्वभावेषुराशिषुयथासंख्यंपूर्व-
मध्यपर्यंततः आदिमध्यावसानतः पूर्वमध्यपर्यंतगावापाठः येनवभागास्तेवर्गोत्तमसंज्ञाभवंति वर्गाशिकसमूहेषुउत्तमाः प्रधानावर्गोत्तमाः तत्-
यथा चरेषुमेषकर्कतुलामकरेषुप्रथमोनवांशोवर्गोत्तमाख्योभवति स्थिरेषुवृषसिंहवृश्चिककुंभेषुमध्यमः पंचमोनवांशोकोवर्गोत्तमः द्विःस्वभा
वेषुमिथुनकन्याधन्वीमीनेषुपर्यंततः नवमोनवांशकोवर्गोत्तमः एतदुक्तंभवति प्रत्येकस्मिन् राशौस्वनवमांशकोवर्गोत्तमाख्यइति शुभफला-
नि नवभागसंज्ञाइति तेचवर्गोत्तमाख्याः नवभागसंज्ञाः जन्मनिशुभफलदाः शुभफलंददति वक्ष्यतिच शुभंवर्गोत्तमेजन्मइति तथाच

वर्गोत्तमाश्चरगृहादिषुपूर्वमध्यपर्यंततःशुभफलानवभागसंज्ञाः सिंहोवृषःप्रथमषष्ठहयांगतौलिकुंभास्त्रिकोणभवना
निभवंतिसूर्यात् १४ होरादयस्तनुकुटुंबसहोत्थबंधुपुत्रारिपत्निमरणानिशुभास्पदायाः

सत्यः चरभवनेष्वाद्यशाः स्थिरेषुमध्या
द्विमूर्तिषुतथांत्याः वर्गोत्तमाः प्रदिष्टास्तेष्विहजाताः कुलेमुख्याः वर्गोत्तमाख्यइति तथाचयवनेश्वरः स्वेस्वेगृहेषुस्वगृहांशकाग्रेवर्गोत्तमास्तेयवने
निरुक्ताइति प्रयोजनम् स्वतुंगवक्रोपगतेस्मिंसंगुणंद्विरुत्तमेस्वांशकभात्रिभागगेरिति सिंहोवृषइत्यादि सिंहादयोराशयः यथापाठक्रमेणसूर्या
दीनांग्रहाणांत्रिकोणाभवनानिमूलत्रिकोणभवनानिभवंति तद्यथा सिंहःसूर्यस्यादित्यस्यमूलत्रिकोणसंज्ञा वृषश्चंद्रस्यप्रथमोमेषोंगारकस्य
षष्ठःकन्याबुधस्य हयांगोधन्वीबृहस्पतेः तौलीतुलाशुक्रस्य कुंभोसौरस्येतिप्रयोजनम् उच्चस्वत्रिकोणगे र्बलस्थैस्त्र्याद्यैर्भूपतिवंशजानरें-
द्राइत्यादि १४ अथनालग्नादीनांद्वादशानांस्थानानांतन्वाद्याद्वादशसंज्ञास्तृतीयषष्ठदशमैकादशानांचोपचयसंज्ञावसंततिलकेनाह होरादयइति
होरादयोलग्नादयः तेषांयथाक्रमेणतन्वादीनिनामानिभवंतीत्यर्थः तत्रलग्नस्यतनुरित्याख्या द्वितीयस्यकुटुंबंतृतीयस्यसहोत्थः सहोत्थोभ्रा
ता चतुर्थस्यबंधुः बंधुशब्दोज्ञातिवाचीपंचमस्यपुत्राख्यः अरिःशत्रुस्तदाख्यः षष्ठःपत्न्याख्यः सप्तमः मरणाख्योऽष्टमः शुभाख्योनवमः आ ७

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्पदारव्योदशमः आयाख्यएकादशः रिःफारव्योद्वादशः इतिशब्दःमकारोर्थद्योनकः तेनहोरादा... ...कदाभवं अपिसंज्ञाभूताइत्यवगंतव्यम्
उपचयान्यरिकर्मलाभदुश्चिक्यसंज्ञितगृहाणीनि अरिःषष्ठं कर्मदशनम् लाभ एकादशंदुश्चिक्यसंज्ञंतृतीयं एता... ...हाणिस्थानानिउपचयसंज्ञा
नीति ननित्यमेकेइति एकेकेचिन्ननित्यमुपचयानीतिवर्णयंति कथयंति तेषामयमभिप्रायः यदिपापग्रहेणस्वस्वामिशत्रूणावादृष्टायुक्ताभवं
ति तदानोपचयास्ते तत्रचगर्गादिवाक्यम् अथोपचयसंज्ञास्यात्रिलाभरिपुकर्मणाम् नचेद्भवंतिदृष्टास्तेपापस्वस्वामिशत्रुभिः एतदाचार्य
वराहमिहिरस्यनाभिप्रेतम् यतोसोसर्वदैवोपचयारव्यैस्तैर्व्यवहरति सत्यादयोप्येवम् तथाचसत्यः दशमैकादशषष्ठतृतीयसंज्ञानिजन्मलग्ना-
भ्यांउपचयभवनानिस्फुःशेषाण्यृक्षाण्यपचयारव्यानि यवनेश्वरश्च षष्ठंतृतीयंदशमंचराशिमेकादशंचोपचयर्क्षमाहुः होराग्रहस्थानशशां
कभेभ्यः शेषाणिचैभ्योपचयात्मकानि प्रयोजनम् उपचयग्रहमित्रस्वोच्चगैःपुष्टमिष्टंत्वपचयगृहनीचाःशतिगैर्नैष्टसंपदित्यादि १५ पुनरपि-
होरादीनांसंज्ञांतराणिवसंततिलकेनाह कल्पेति एतेषामपिलग्नादीनांद्वादशानांयथाक्रमंकल्पाद्याःसंज्ञाभवंति तद्यथा लग्नंकल्पारव्यंकल्पश-

रिःफारव्यमित्यपचयान्यरिकर्मलाभदुश्चिक्यसंज्ञितगृहाणिननित्यमेके १५ कल्पस्वविक्रमगृहप्रतिभाक्षतानिचि
त्तोत्थरंध्रगुरुमानभवव्ययानि लग्नाच्चतुर्थनिधने चतुरस्रसंज्ञेद्यूनंचसप्तमगृहंदशमर्क्षमाज्ञा १६ कंटककेंद्रचतुष्टयसं
ज्ञाःसप्तमलग्नचतुर्थखभानाम्

ब्दः शक्तिवाची द्वितीयं स्वंतृतीयंविक्रमम् चतुर्थंगृहम् पंचमंप्रतिभा षष्ठंक्षतम् सप्तमंचित्तो-
त्थः अष्टमंरंध्रम् नवमंगुरुम् दशमंमानम् एकादशंभवम् द्वादशंव्ययम् लग्नाच्चतुर्थनिधनेइति लग्नाच्चतुर्थस्थानंनिधनमष्टमंचतेचतुर-
स्रसंज्ञेचतुरस्रारव्ये लग्नात्सप्तमंगृहं द्यूनं दशमर्क्षंदशमराशिमाज्ञारव्यं एताः संज्ञाव्यवहारार्थंज्ञेयाः १६ अथकेंद्राणांसंज्ञांतत्स्थराशिब
लंचत्रोटकेनाह कंटकेति सप्तमलग्नचतुर्थानिप्रसिद्धानिखभंदशमम् खमाकाशमध्येतत्कालंयद्भंराशिर्वर्ततेतस्यखभेतिसंज्ञा एतेषां सप्तम
लग्नचतुर्थखभानांराशीनांप्रत्येकस्यकंटककेंद्रचतुष्टयइतितिस्रः संज्ञाःतेषुस्थानेषुयथाभिहितेषुयथोक्तेषुकीटनरांबुचराःपशवश्चराशयो-
बलाढ्याबलिनोभवंति तद्यथा कीटोवृश्चिकःसप्तमेस्थानेबली नराः नृराशयः मिथुनतुलाकन्याकुंभधन्विपूर्वार्द्धनराः एतेलग्नेस्थिता
बलिनः अंबुचराः जलचरराशयः कर्कटमीनमकरपरार्द्धास्तेचतुर्थस्थानेबलिनः पशवश्चतुष्पदाः मेषवृषसिंहधन्विपरार्द्धमकरपूर्वा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

द्धिः एते दशमस्था बलिनो भवंतीत्यर्थः तथाच भगवान्गार्गिः नृपकुलतुलोधटः कन्या मृगाद्यं पूर्वमर्द्धंच धन्विनः लग्नस्था बलिनो ज्ञेया एते हि नरराशयः चतुर्थे कर्कटो मीनो मकरार्द्धंच पश्चिमम् विज्ञेया बलिनो नित्यमेते हि जलराशयः सप्तमे वृश्चिकः कीटो बलवान्परिकीर्तितः धन्व्यंत्यार्द्धो जगो सिंहो बलिनः खे चतुष्पदाः अत्रार्द्धशब्देन मकरपूर्वार्द्धमपि गृह्यत इति १७ अथ नापरिशिष्टस्थानानां संज्ञांतराणि वसंततिलकेनाह केंद्रादिति सर्वस्मात्केंद्राद्द्वितीयस्थानं पणफरम् तेन द्वितीयपंचमाष्टमैकादशस्थानानां पणफरसंज्ञा परतश्च सर्वमापोक्लिमम् सर्वस्मात्पणफरात्परं सर्वं स्थानमापोक्लिमं तेन तृतीयषष्ठनवमद्वादशस्थानानामापोक्लिमेति संज्ञा हिबुकमंबुसुखं च वेश्म वेश्मशब्दो गृहपर्यायः वेश्मेति चतुर्थस्य प्राक्संज्ञाभिहिता तस्यैव हिबुकसंज्ञा अंबुसंज्ञा सुखसंज्ञा च जामित्रमस्तभवनं अस्तभवनं सप्तमस्थानम् यतः सर्व एव ग्रहा उदयराशेः सप्तमराशावस्तं यांति न देवास्तभवनं जामित्रम् सुतभं त्रिकोणम् सुतभं पंचमस्थानं त्रिकोणसंज्ञम् मेषूरणं दशमं दशमस्थानं मेषूरणसंज्ञं च अत्रास्मिन्स्थाने कर्मेत्यपरां संज्ञाम् विंद्यात् जानीयात् १८ अथ होरादीनां बलं व्यवहारार्थं प्रमाणं च शार्दूलविक्रीडितेनाह होरेति होरा लग्नं स्वामिना तत्पतिना वीक्षिता दृ

तेषु यथाभिहितेषु बलाढ्याः कीटनरांबुचराः पशवश्च १७ केंद्रात्परं पणफरं परतस्तु सर्वमापोक्लिमं हिबुकमंबुसुखं च वेश्म जामित्रमस्तभवनं सुतभं त्रिकोणं मेषूरणं दशममत्र च कर्म विंद्यात् १८ होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा केंद्रस्था द्विपदादयो ह्निनिशि च प्राप्ते च संध्याद्वये

ष्टा वा वीर्योत्कटा बलवती भवति तेनैव पतिना संयुता बलवती भवति तथा गुरुणा जीवेन वीक्षिता पतिना च बलवती भवति ज्ञेन बुधेन वीक्षिता युता वा वीर्योत्कटा बलवती भवति यदि नान्यैरनुक्तैः युक्ता दृष्टा वा नान्यैश्चेति नान्यैर्ग्रहैः स्वामिगुरुज्ञवर्जितैः शेषैर्यदि युता दृष्टा न भवति तदा वीर्योत्कटा अथवा यद्युक्तानुक्तैर्मिश्रैर्युक्ता दृष्टा भवति तदा मध्यबला अथ यदि वस्वामिगुरुज्ञवर्जितान्यैर्युता दृष्टा बलहीना भवति तथाच बादरायणः जीवस्वनाथशशिजैर्युता दृष्टा बलवती भवति होरा शेषैर्बलहीना स्यादेवं मिश्रैस्तु मध्यबला बलहीना यदि सर्वैर्न वीक्षिता नैव युक्ता वा केंद्र इति वीर्योत्कटा इत्यनुवर्तते अत्रादिशब्दो लुप्तो द्रष्टव्यः केंद्रस्थाः सर्व एव राशयो बलिनो भवंति पणफरस्था मध्यबलाः आपोक्लिमस्था हीनबलाः अत्र केचित्तु केंद्रपणफरापोक्लिमानां द्विपदचतुष्पदकीटानां यथाक्रमं बलवत्त्वं व्याचक्षते तदयुक्तम् यस्माद्बादरायणः केंद्रस्था अतिबलाः स्युर्मध्यबलाः पणफराश्रिता ज्ञेयाः आपोक्लिमस्थाः सर्वे हीनबला राशयः कथिता इति द्विपदादयो ह्निनिशि च प्राप्ते च संध्याद्वये



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इति वीर्योत्कटाइत्यनुवर्तने द्विपदादयोद्विपदचतुष्पदकीटाः यथाक्रममन्हिनिशिप्रासेचसंध्याद्वयेवीर्योत्कटाभवंति अन्हिदिनेद्विपदाबलिनः नि
शिरात्रौचतुष्पदाःसंध्याद्वयेकीटाः अत्रनकेवलंवृश्चिकः कीटः यावदाप्याःकीटग्रहणेनज्ञेयाः अत्रचश्रीदेवकीर्तिः मिथुनतुलाकुंभकन्यादिवाब-
लाधन्विनश्चपूर्वार्द्धम् अजवृषसिंहारात्रौमृगहयर्योः पूर्वपश्चार्द्धे वृश्चिकमीनकुलीरामकरांत्यार्द्धंचसंध्यायामिति पूर्वार्द्धेविषयादयः कृतगुणा
इति विषयाणिइंद्रियाणितानिपंच तदादयःपंचषट्सप्ताष्टनवदशयावत् एतेसर्वकृतगुणाश्चतुर्गुणिताः पूर्वार्द्धमानंकस्यप्रकृतलाङ्कचक्रस्यपूर्वा
र्द्धेप्रथमराशिषट्के इत्यर्थः मेषादीनांषण्णांमानंप्रमाणं चक्रं पूर्वार्द्धेमेषादीनांराशीनांषण्णांप्रमाणंतदेवप्रतीपवत्प्रतीपंविपर्ययात्तुलादिषुषट्स्वनप्र
माणम् तद्यथा विषयादयः ५। ६। ७। ८। ९। १० एतेचतुर्गुणाजाताः २०। २४। २८। ३२। ३६। ४० एतेक्रमेणषण्णांमेषादीनांमानंव्यत्ययाच्चतुला
दीनांमानमिति तथाचसत्यः चतुरोत्तरोत्तराःस्फार्विंशतिभागाभवंति मेषाद्येषुभषट्केषुक्रमात्मानमिहार्द्धेपूर्वेषुभषट्केषुमीनाद्येपश्चाच्चोत्क्रमा
दर्द्धे भागाव्यवहाराश्चक्षेत्रेभागेनैकेनकालेदशप्राणाश्चषट्काभवंति यस्माद्याःकलाःक्षेत्रलिप्ताःसाकालेप्राणाइति यस्माद्धृद्धब्रह्मगुप्तेनोक्तम् लंका

पूर्वार्द्धेविषयादयःकृतगुणामानंप्रतीपंचतद्वृश्चिक्यंसहजंतपश्चनवमंत्र्याद्यंत्रिकोणंचतत् १९ श्रीःश्रीः

स्पपश्चिमगंप्राणेनकलांगमंडलंभ्रमतीति एवमेतेभागादशगुणिताश्च षट्काभवंति तत्रैनज्जातम् कालेयावद्घटिकास्ताः षष्ट्याधिकेनशतत्रयेणगुणिताः
भागाभवंति क्षेत्रेचतावंत्यएवलिप्तास्तासांषष्ट्याभागमपहृत्यषट्भागाःक्षेत्रेभवंति एवंमेषादीनांप्रमाणभागादशगुणिताश्चषट्काभवंति तेनचषट्क-
शतद्वयंमेषमीनयोः प्रमाणं एवंचत्वारिंशदधिकंशतद्वयंवृषकुंभयोः शतद्वयमशीत्यधिकंमिथुनमकरयोः शतत्रयंविंशत्यधिकंकर्कटधनुषोः शतत्रयं-
षष्ट्याधिकंसिंहवृश्चिकयोः शतचतुष्टयंकन्यातुलयोः एतएवषट्कादशविभक्ताभागत्वेनपरिकल्पिताः यतःक्षेत्रेदशभिश्चषट्कैर्भागोभवति ननुचरदलव
शात्प्रतिदशमन्यरूपेषुराश्युदयेषुगणितस्कंधसिद्धेषुकिमर्थमेकरूपंतदुदयप्रमाणंदर्शितमाचार्येण अत्रोच्यते नष्टचिंतादिषध्वपरिज्ञानायगुरुशा
णामवयवानांचिन्हेह्रस्वदीर्घत्वज्ञानयोरुपयुज्यते तथाचयवनेश्वरः आद्यंतराशेरुदयप्रमाणंद्वौद्वौसुहूर्त्तौनियतंप्रदिष्टौ क्रमोत्क्रमाभ्यामपिपं
चमस्याच्चक्रार्द्धयोर्विद्धिकदयप्रमाणम् एवंप्रमाणानिगृहाणिबुध्वान्हस्वानिमध्यानितथायतानि चक्रांगभेदैःसदृशीकृतानिमार्गप्रमाणानिविकल्प्य
यंति अंगभागकल्पनां वक्ष्यति कादिविलग्नविभक्तभगात्रइति यत्रयस्मिन्नंगेदीर्घराशिर्भवति दीर्घाधिपोवागृहस्तदंगमतीवदीर्घंभवति एवं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मध्यमयोर्मध्यमं ह्रस्वयोर्ह्रस्वमिति तथाच सारावल्याम् ह्रस्वास्तिमिगोजघटामिथुनधनुः कर्किमृगसुरवास्कसमाः वृश्चिककन्यामृगपतिव-
णिजोदीर्घाः समारव्याताः एभिर्लग्नादिगतैः शीर्षप्रभृतीनि सर्वजंतूनाम् सदृशानिच जायंतेगगनचरैश्चैवतुल्यानि तथाच सत्यः दीर्घाधिपतिर्दीर्घे-
गृहेस्थितोऽवयवदीर्घत्कृद्भवति एवमादिषु र्थैर्व्यतैर्विकल्पनाकार्या लग्नोदयनिरूपणागणितस्कंधसिद्धांतैरेवकार्येति दुश्चिक्यंसहजमिति सहज
स्यतृतीयस्थानस्यदुश्चिक्यसंज्ञा तपश्चनवममिति नवमस्यचतपःसंज्ञा त्र्याद्यंत्रिकोणंचतत् तदेवनवमंस्थानं त्र्याद्यंत्रिकोणं त्रिशब्दआद्योयस्य त्रिको
णस्यतत् त्र्याद्यंत्रिकोणमित्यर्थः त्रिकोणंचतदेवनवममिति १९ अधुनाराशिवर्णान्मंदाक्रांतयाह रक्तइति प्रथमभवनंमेषः तदाद्येषुमेषादिषुराशिषु-
यथाक्रमंतेवर्णाभवेयुः तत्रमेषोरक्तोलोहितवर्णः वृषः श्वेतः शुक्लः मिथुनः शुकतनुनिभः हरितइत्यर्थः कर्कटः पाटलोपुष्पवर्णः ईषत्कृष्णारक्तइत्यर्थः सिंहो
धूम्रपांडुरीषत् शुक्लः कन्याचित्रानानावर्णाइत्यर्थः तुलाकृष्णा वृश्चिकः कनकसदृशः सुवर्णवर्णः धन्वीपिंगलः पीतवर्णः मकरः कर्बुरः श्वेतरक्तः शुक्ल-
कपिलव्यामिश्रवर्णः कुंभोबभ्रुः नकुलवर्णसदृशः मीनः स्ववर्णोमत्स्यवर्णइति प्रयोजनम् वियोनिवर्णविज्ञानम् ऊनांशकादितिवक्ष्यति प्लुवत्वंस्वाम्या
शारव्यमिति स्वामिनः आशास्वाम्याशा आशादिकतत्र प्लुवत्वंप्लुवस्यभावः प्लुवत्वंसर्वस्यराशेःस्वाम्याशायां प्लुवत्वंनिम्नत्वमित्यर्थः यथामेषवृश्चिकयोर्भौ
मोधिपतिः तस्यदक्षिणाशादिक् तत्रतौप्लुवसंज्ञौ वृषतुलयोः शुक्रोधिपतिः तस्याग्नेयदिक् तत्रतौप्लुवसंज्ञौ मिथुनकन्ययोर्बुधोधिपतिस्तस्योत्तरदिक्तत्रतौ
प्लुवसंज्ञौ कर्कटस्यचंद्रोधिपतिस्तस्यवायवीदिकवायव्यांप्लुवत्वं सिंहस्यादित्योधिपतिस्तस्यपूर्वादिक् तस्यपूर्वस्यांप्लुवत्वम् धन्विमीनयोर्जीवोधिपतिः त
स्यैशानीदिक् तत्रतौप्लुवसंज्ञौ मकरकुंभयोः सौरोधिपतिस्तस्यपश्चिमादिक् तत्रतौप्लुवसंज्ञौ एवंराशिस्वामिनोयादिक् तस्यांतत्रप्लुवोज्ञेयः प्रयोजनम्
हृतनष्टादिषु तद्दिग्गमनंचोरादेः अन्यच्चयात्रायामुपयुज्यते तथाचसारावल्याम् भवनाधिपदिग्भागप्लुवइहयत्नैः प्रबंधतः कथितः तस्यांगोवि
निहन्यादचिरेणमहीपतिः शत्रुनिति दिनकरच्युताद्द्वितीयंचवेशिः दिनकरः सूर्यः तेनच्युतोयोराशिस्तस्माद्द्वितीयोवेशिसंज्ञः प्रयोजनम् यात्रायांव
क्ष्यति वेशिर्विलग्नोपगतोथियासोइति तथाच वेशिस्थानेचसद्ग्रहइत्यादि अत्रसंज्ञाध्यायेयासंज्ञाउक्तास्ताः द्विप्रकाराः तत्रकाश्चित्संज्ञामात्रप्रयो-
जनाः काश्चिन्निदर्शनप्रयोजनास्तत्रेमाः संज्ञामात्रप्रयोजनाः यथालग्नस्यहोरा तृतीयस्यदुश्चिक्यम् चतुर्थस्यहिबुकंपंचमस्यत्रिकोणम् सप्तमस्यद्यूनम् नवम
स्यत्रिकोणसंज्ञा दशमस्यमेषूरणम् द्वादशस्यरिःफम् चतुर्थाष्टमयोश्चतुरस्रसंज्ञा लग्नचतुर्थसप्तमदशमानांकंटककेंद्रसंज्ञा चतुष्टयसंज्ञाच तथा
द्वितीयपंचमाष्टमैकादशस्थानानांपणफरसंज्ञाः तृतीयषष्ठनवमद्वादशानामापोक्लिमसंज्ञाः एताः संज्ञामात्रप्रयोजनाः इमाश्चफलनिर्देशप्रयोजनाः तत्र



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

लग्नस्यतनुः संज्ञाकल्पसंज्ञाच तेनलग्नाच्छरीरस्वरूपान्वेषणमारोग्यान्वेषणंचकार्यम् द्वितीयस्यकुटुंबसंज्ञास्वसंज्ञाचतेनतस्मात्ज्ञातिधनान्वेषणंका
यम् तृतीयस्यसहजसंज्ञाविक्रमसंज्ञाचतेनतस्माद्भ्रातृणांपुरुषार्थस्यचान्वेषणंकार्यम् चतुर्थस्यबंधुसंज्ञावेश्मसंज्ञासुखसंज्ञाचतेनतस्मात्
बंधुसुखगृहाणांचान्वेषणंकार्यम् पंचमस्यबुद्धिसंज्ञापुत्रसंज्ञाचतेनतस्माद्बुद्धिपुत्रयोरन्वेषणंकार्यम् षष्ठस्यारिसंज्ञाक्षतसंज्ञाच अरिशब्दः श
त्रुवाचीक्षतशब्दोव्रणवाची तेनतस्मादरातिव्रणान्वेषणंकार्यम् सप्तमस्यदारचित्तोत्थयामित्रसंज्ञाचदारशब्दोभार्यावाची चित्तोत्थशब्दः कामवाची
यामित्रशब्दोविवाहवाची तेनतस्माद्भार्याकामविवाहान्वेषणंकार्यम् अष्टमस्यमरणरंध्रसंज्ञाच मरणंमृत्युः रंध्रशब्दः पापपर्यायः तेनतस्मान्मरणपा
पान्वेषणंकार्यम् नवमस्यशुभगुरुतपः संज्ञाचशुभशब्देनात्रधर्मोज्ञेयः गुरवोमातृपितृपूर्वकाः तपोव्रतम् तेनतस्माद्धर्ममातृपितृपूर्वकाणांगुरूणां-
तपसश्चान्वेषणंकार्यम् दशमस्यास्पदकर्मसंज्ञाच आस्पदशब्दःस्थानवाची कर्मास्पदसंज्ञेसुप्रसिद्धे तेनतस्मात्क्रियाभावान्वेषणंकार्यम् एका

रक्तः श्वेतः शुकतनुनिभः पाटलोधूम्रपांडुश्चित्रः कृष्णः कनकसदृशः पिंगलः कर्बुरश्च बभ्रुः
स्वच्छः प्रथमभवनाद्येषुवर्णाः प्लवत्वंस्वाम्याशाख्यंदिनकरयुताद्भाद्द्वितीयंचवेशिः २०

दशस्यभवायसंज्ञा-
भवशब्दोत्रविद्यागुणसंपत्प्राप्तिवाची आयशब्दोर्थवाची तेनतस्मात्तयोरन्वेषणंकार्यं व्ययइति द्वादशस्याख्यातेनतस्माद्व्ययान्वेषणंकार्यम् तृतीयषष्ठदशमे
कादशस्थानानांउपचयसंज्ञा उपचयकरत्वात् इदंचतेषांउपचयकरत्वं यदितत्रस्थाः पापाअपि शुभफलप्रदाभवंति तथाहि षष्ठस्थानंविनासौम्याः सर्व
त्रभावविवृद्धिकराः षष्ठस्थाः पापाः पुनः अरिहानिंतनुकुर्वंति क्षतहानिंच पापास्तूपचयस्थाः भावविवृद्धिंकुर्वाणा अपि अष्टमुपचयस्थानंप्राप्य त-
च्चिंत्यदुष्टभावयोररिक्षतयोरपिहानिंकुर्वंति यतस्तेषामुपचयकराइत्यन्वर्थसंज्ञा उपचयस्थाश्चपापाः भावहानिंकुर्वाणा अपि अष्टमद्वादशस्था-
नचिंत्यमनिष्टभावस्यानिष्टत्वात् स्थानस्योपचयात्मकत्वा द्वृद्धिंप्रापयंति तथाच श्रीदेवकीर्तिः सौम्याः षष्ठेपापाश्चान्वर्थसुखारिधर्मधीघ्नं
कुर्युर्भवविपत्तिंशेषोगताश्चतद्वृद्धिमिति एतद्विशेषवचनम् विनासर्वत्रोपतिष्ठतेति २० इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकटीकायांराशिभेदः
प्रथमोऽध्यायः १ अथातोग्रहयोनिप्रभेदाध्यायोव्याख्यायते तत्रचराचरंजगद्ब्रह्ममयमेवप्राक्कालाख्यस्यपुरुषस्यकालांगानीत्येवंमेषादिना

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

राशिनक्षत्रमयांगविभागः प्रदर्शितः तत्प्रदर्शनेनच ग्रहमयएवासौ प्रदर्शितो भवति यतो राशिस्वामिनो ग्रहाएव अधुनातस्यात्मादीन् भावान् ग्रहमयानेवजगत्पालकांस्तथाराजादीन् ग्रहमयानेवचशार्दूलविक्रीडितेनाह कालात्मादिनकृदिति कालस्यात्माकालात्मादिनकृत्सूर्यः अस्यैवतुहिनगुश्चंद्रोमनः तुहिनेनहिमेनसदृशाः शीतलाः गावोरश्मयोयस्यसतुहिनगुः सत्वंकुजोभौमः सत्वस्यलक्षणम् अधिकारकरंसत्वंव्यसनाभ्युदयागमे सत्वशब्दोऽत्रशौर्यपर्यायः यच्चसिंहादीनामस्ति तथाच एकाकिनिवनवासिनिराजलक्षणानीनि शास्त्रज्ञेसत्वेस्थितेनमृगपतौराजेतिगिरः परिणमंति उत्कृष्टनरसभावेनेत्यर्थः ज्ञोबुधोवचोगिरः जीवोबृहस्पतिः ज्ञानसुखेज्ञानंचसुखंचज्ञानसुखे सितः शुक्रोमदनः कामः दिनस्यईशोदिनेशः सूर्यः तस्यात्मजः पुत्रः शनैश्चरोदुःखम् अत्रकालग्रहणंकालस्यसर्वगतत्वप्रदर्शनार्थम् अत्रनकेवलंकालपुरुषस्यमेषाद्याराशयः शिरःप्रभृत्यंगविभागेनस्थितायावदादित्यादयश्चात्मविभागेनसर्वस्यजगतः स्थिताः प्रयोजनम् पीडितेग्रहेदेहवतोपि तदंगभावात्मगुणपीडनंवक्तव्यम् पुष्टेपुष्टीरिति नकेवलंयाव-

कालात्मादिनकृन्मनस्तुहिनगुःसत्वंकुजोज्ञोवचोजीवोज्ञानसुखेसितश्चमदनोदुःखंदिनेशात्मजः राजानौरवि-
शीतगूक्षितिसूनोनेताकुमारोबुधः सूरिर्दानवपूजितश्चसचिवौप्रेष्यःसहस्रांशुजः १ हेलिःसूर्यश्चंद्रमाःशीत
रश्मिर्हेम्नोविज्ज्ञोबोधनश्चेंदुपुत्रः आरोवक्रःक्रूरदृक्चावनेयःकोणोमंदःसूर्यपुत्रोसितश्च २ ज्जन्मनिबलवद्भिर्ग्रहैरेत

एवभावा आत्मादयः शुभाभवंति दुर्बलैर्दुर्बलाः किंतुसौरस्यविपरीतम् तथाचसारावल्याम् आत्मादयोगगनगैर्बलिभिर्बलवत्तराः दुर्बलैर्दुर्बलाज्ञेयाविपरीतंशनेःस्मृतमिति राजानावित्यादि रविरादित्यः शीतगुश्चंद्रः एतौराजानौनृपौ क्षितिर्भूमिरस्याःसूनुः पुत्रोंगारकः सनेतासेनापतिः कुमारोबुधः कुमारोयुवराजः राजपुत्रइतिकेचित् सूरिर्बृहस्पतिः दानवपूजितः शुक्रः एतौसचिवौमंत्रिणौ सहस्रांशुः सूर्यस्तस्माज्जातः शनैश्चरः सप्रेष्योदासः ननुजगत्पालनकरणेशनैश्चरःप्रेष्यः किमत्रोच्यते प्रेष्योपिस्वकर्मणापालकएव प्रयोजनम् जन्मनिप्रश्नकालेवाबलवानुपचयस्थोग्रहोभवति तदुक्तोराजादिकस्तस्यकार्यसाधकोभवति अन्यथाहानिकरः १ अधुनाव्यवहारार्थंसूर्यचंद्रांगारकशनैश्चराणांसंज्ञाःशालिन्याह हेलिरिति सूर्यआदित्योहेलिसंज्ञः चंद्रमाः शीतरश्मिसंज्ञः शीताः रश्मयः किरणाः यस्यसः इंदुपुत्रोबुधः सहेम्नोविनूज्ञोबोधनः एतास्तस्यसंज्ञाः अवनिर्भूस्तस्यापत्यं १० सचावनेयोभौमः सआरः वक्रः क्रूरदृक् एताः भौमस्यसंज्ञाः सूर्यपुत्रः सौरः कोणः मंदः असितः एताःशनैश्चरसंज्ञाः २ ७ ५

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथ नागुरुशुक्रराहुकेतूनां संज्ञा वसंततिलकेनाह जीवइति जीवोबृहस्पतिः सएवांगिरः सुरगुरुः सुराः देवाः तेषांगुरुः वचसांपतिः ईज्यः पूज्यः देवानां एताः बृहस्पतेः संज्ञाः शुक्रोभार्गवः सएवभृगुः भृगुसुतः सितः आस्फुजित् चशब्दः समुच्चयार्थः एताः शुक्रस्यसंज्ञाः राहुः स्वर्भानुः सएवतमः अगुः - नविद्यंतेगावोरश्मयोयस्यसः अरश्मिरित्यर्थः असुरोदैत्यः एताराहोः संज्ञाः शिखीतिकेतुः केतोः शिखीतिसंज्ञा शिखाविद्यतेयस्यसशिखी अन्यंप- र्यायंलोकादन्यशास्त्राद् उपलभ्यवदेत् ब्रूयात् यथारविस्तीक्ष्णांशुर्दिवाकरोभास्वांस्तीक्ष्णरश्मिर्भानुर्विवस्वानित्यादिकाः सूर्यस्य शशांकः तुहिन- शुर्मृगांकः शशीनिशाकरोनक्षत्रपतिरित्याद्याश्चंद्रस्य कुजः लोहितोभौमः क्ष्मातनयइत्याद्याभौमस्य सौम्योरौहिणेयश्चांद्रिमृगांकतनयइंदुजइ त्याद्याबुधस्य सूरिःसुरेंद्रपूज्योवाक्पतिर्देवपुरोहितइंद्रमंत्रीत्याद्यागुरोः भार्गवःउशनादैत्येज्यः असुरगुरुःदैत्यरित्विगित्याद्याशुक्रस्य यमःरवि जःपातंगिःछायासुतः इत्याद्याः सौरस्य सैंहिकेयःस्वर्भानुः दानवः अमृतचारः विधुंतुदइत्याद्याराहोरिति ३ अधुनाग्रहवर्णान्शालिन्याह रक्त

जीवोंगिराःसुरगुरुर्वचसांपतीज्योशुक्रोभृगुर्भृगुसुतःसितआस्फुजिच्च राहुस्तमोगुरसुरश्चशिखीतिकेतुःप र्यायमन्यमुपलभ्यवदेच्चलोकात् ३ रक्तःश्यामोभास्करोगौरइंदुर्नात्युच्चांगोरक्तगौरश्चवक्रः दूर्वाश्यामोज्ञोगुरुर्गौरगात्रःश्यामःशुक्रो भास्करिःकृष्णदेहः ४

श्यामइति रक्तश्चासौश्यामः पाटलपुष्पवर्णइत्यर्थः एवंविधोभास्करः आदित्यः इंदुश्चंद्रोगौरः श्वेतवर्णश्च यः वक्रोंगारकोनात्युच्चोनातिदीर्घः रक्तगौरः पद्मपत्राभः ज्ञोबुधः सदूर्वाश्यामः शाड्वलमृणालवर्णः गुरुर्बृहस्पतिः सगौरगात्रोगौरशरीरः शुक्रश्श्यामव र्णोनातिगौरोनातिकृष्णः भास्करिः सौरः सकृष्णदेहोसितशरीरः वर्णप्रयोजनम् सर्वग्रहेषुयोबलवान् तद्वर्णस्तत्कालजातोभवति प्रश्नकालेचौरादेरपि ४ अथ नाग्रहाणांवर्णस्वाम्यंग्रहदेवताश्चदिक्स्वाम्यंसौम्यपापत्वंच शार्दूलविक्रीडितेनाह वर्णाइति ताम्रादयोवर्णाःसूर्यादिग्रहनाथाः सूर्यादयोग्रहनाथाः स्वामिनोयेषांतेताम्रवर्णस्यादित्योनाथः स्वामी सितस्य श्वेतस्यचंद्रः अतिरक्तस्यातिलोहितस्यभौमः हरितस्यशुककवर्णस्यबुधः विशेषेण आसमंतात्पीत स्य हरिद्रासदृशस्यजीवः चित्रस्यनानावर्णस्यशुक्रः असितस्यकृष्णवर्णस्यसौरः प्रयोजनम् नष्टादिद्रव्यवर्णज्ञानम् जन्मनिप्रश्नकालेचोक्तद्रव्य लाभः अन्यथाहानिः ग्रहपूजायांतद्वर्णकुसुमपूजा तथाचयाज्ञवल्क्यः वर्णैर्मंडलकेषुचेति वन्ह्यात्यादिसूर्यादिनाथा इत्यनुवर्तते सूर्यादीनांनाथाः सू र्यादिनाथाः आदित्यस्यवन्हिरग्निर्नाथः स्वामी चंद्रमसोंबुजलम् भौमस्याग्निजःकुमारः स्वामिकार्तिकेयइत्यर्थः बुधस्यकेशवोविष्णुः गुरोरिंद्र

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शतक्रतुः शक्रस्य शचींद्राणि सौरस्यकः प्रजापतिः ब्रह्माइत्यर्थः प्रयोजनम् ग्रहपूजायां ग्रहोक्तदेवताः पूज्याः तथाच यवनेश्वरः देवाग्रहाणांजलव
न्हिविष्णुप्रजापतिस्कंदमहेंद्रदेवी चंद्रार्कचंड्यर्कजसोमजीवशक्राश्वयर्क्षेषुयजेतशश्वत् तथाचौरनामानयनेवचद्रुह्येक्तदेवतामार्यायनाम तथा
चयात्रायांग्रहदेवतांसंपूज्य तद्दिशंयायात् तथाचसारावल्याम् नाम्नसितारक्तहरितपीतविचित्रासिइनादीनाम् पावकजलगुहकेशवशक्रशची
वेधसः पतयः पूर्वादिग्रहदेवास्तन्मंत्रैः समभिपूज्यनामाशाम् धनकनकगजवाहनादीन्प्राप्नोतिनृपोरितः शीघ्रम् प्रागाद्याइति प्रागाद्याः पूर्वप्रथमा
दिशस्तासांपूर्वादीनांरव्यादयोनाथाः तत्रपूर्वस्यांदिशिरविराद्दित्योधिपतिः पूर्वदक्षिणस्यांशक्रः दक्षिणस्यांलोहितोंगारकः दक्षिणपश्चिमायांत
मोराहुः पश्चिमायांसौरः शनैश्चरः पश्चिमोत्तरस्यामिंदुश्चंद्रः उत्तरस्यांवित्बुधः उत्तरपूर्वस्यांसूरिर्बृहस्पतिः प्रयोजनम् केंद्रस्थैर्ग्रहैः सूतिकागृह-
द्वारज्ञानम् हृतनष्टादिषुचौरादेर्गमनंच क्षीणेंदुर्केतिक्षीणश्चासाविंदुश्चक्षीणेंदुः कृष्णाष्टम्यर्द्धाच्छुक्लाष्टम्यर्द्धंयावत् क्षीणश्चंद्रः परतः पूर्णः आ

वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासितावन्ह्यंबग्निजकेशवेंद्रशचिकाः सूर्यादिनाथाःक्रमात् प्रागाद्यारवि
शक्रलोहिततमः सौरेंदुवित्सूरयः क्षीणेंद्वर्कमहीसुतार्कतनयाः पापाबुधस्तैर्युतः ५. बुधसूर्यसुतौनपुंसकाख्योश
शिशक्रौयुवतीनराश्चशेषाः

युर्दायविधौहृष्णपक्षत्रयोदश्यांतावत्प्रभृतियावदमावास्यांतेसूर्यमंडलात्तोद्गतस्तावत् क्षीणइति
यस्माद्यवनेश्वरः चंद्रस्यपापत्वंनकदाचिदपीच्छति तद्वाक्यम् मासेतुशुक्लप्रतिपत्प्रवृत्तेः पूर्वेशशीमध्यबलोदशाहे श्रेष्ठोद्वितीयेल्पबलस्तृतीये
सौम्यैस्तुदृष्टोबलवान्सदैव तथाच क्रूरग्रहोर्कः कुजसूर्यजौचपापौशुभाः शुक्रशशांकजीवाः सौम्यश्चसौम्योव्यतिमिश्रितोन्यैर्वर्गैस्तुतुल्य-
प्रकृतित्वमेतीति तस्मादेतावत् क्षीणइति अर्कआदित्यः महीसुतोंगारकः अर्कतनयः सौरः एतेसदैवपापाः बुधस्तैर्युतस्तेषामेकतमेनयुक्तः पाप-
एव सौम्याः शेषाः शुक्लपक्षाष्टम्यर्द्धात् कृष्णपक्षाष्टम्यर्द्धंयावत्चंद्रः सौम्योबुधः पापवीक्षितयुतः पापएव जीवशुक्रौसदैवसौम्याविति प्रयो
जनम् पापसौम्यग्रहबलाज्ज्ञातः पापात्मकः सौम्यस्वभावश्चभवति ५ अधुनाग्रहाणांप्रकृतिविभागंमहाभूताधिपत्यंत्रोटकेनाह बुधसूर्यइति बुधश्चांद्रिः सू
र्यसुतः शनिः एतौनपुंसकाख्यौनपुंसकनामानौ शशीचंद्रः शुक्रोभार्गवः एतौद्वौयुवतिसंज्ञौ शेषारविजीवभौमानराः पुरुषसंज्ञाः पुरुषनामानः प्रयो ११
जनम् जन्मनिचिंतायांहृतनष्टादिषुबलवंतः स्वस्वरूपमेवकुर्वंति तेषामुपतापे तदाश्रितानामुपतापः शिखिभूखपयोमरुद्गणानामिति शिरस्था-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दीनांपंचानांमहाभूतानां पंचग्रहाभूमिसुतादयः क्रमेणवशिनः तद्यथा शिखिनोग्नेर्भूमिसुतोंगारकोवशीभौमोग्नेः स्वामीत्यर्थः एवंभूमेर्बुधः स्वस्य-स्याकाशस्यजीवः पयसोंभसः शुक्रः मरुतोवायोः शनैश्चरः गणग्रहणमत्रवृत्तपूरणार्थंनत्वादित्यचंद्रयोः कस्मान्नोक्तमित्यत्रोच्यते तयोः पूर्वमेवोक्तं वन्ह्यंबुविनितावेवप्रसिद्धौ प्रयोजनम् स्वदशायांमहाभूतकृतांछायांव्यंजयंति वक्ष्यतिच छायांमहाभूतकृतांचसर्वइति ६ अधुनाग्रहाणांब्राह्मणादि वर्णाधिपत्यंगुणविभागंचोपजातिकयाह विप्रादितोब्राह्मणादेर्वर्णचतुष्टयस्यस्वामिनोग्रहाधिपतयः शुक्रोभार्गवः गुरुर्बृहस्पतिरेतौद्वौब्राह्मणानामधिपती कुजोभौमः अर्कआदित्यएतौद्वौक्षत्रियाणां शशीचंद्रोवैश्यानां शूद्राणांबुधः असितः शनैश्चरः अंत्यजानांवर्णप्रतिलोमभवानांचांडालमागधनिशाचरादीनां प्रयोजनम् हृतनष्टादिषुग्रहबलाच्चौरादीनांग्रहोक्तवर्णप्रभावः एषासुपघातेतद्वर्णोपघातः तथाचसत्यः गुरुशुक्रौरविरक्तौचंद्रःसौम्यः शनैश्चरश्चेति विप्रक्षत्रियविट्शूद्रसंकराणांप्रफलकराः अजयेजयेयतुष्टान्वीतौ वित्तनाशनेलाभेनेष्यस्तेभ्यश्चकुर्फर्गुणांश्चदोषांश्चप-

शिखिभूखपयोमरुद्गणानांवशिनोभूमिसुतादयःक्रमेण ६ विप्रादितःशुक्रगुरू कुजार्कौशशीबुधश्चेत्यसितोंत्यजानाम् चंद्रार्कजीवाज्ञसितौकुजार्कीयथाक्रमंसत्वरजस्तमांसि ७ मधुपिंगलदिक्चतुरस्रतनुःपित्तप्रकृतिःसविताल्पकचः

स्वांत्वान् चंद्रार्कजीवाइत्यादि चंद्रःशशी अर्कआदित्यः जीवोबृहस्पतिः एतेसत्वसंज्ञाः ज्ञोबुधः सितः शुक्रः एतौद्वौरजःसंज्ञौ कुजोंगारकःआर्किःसौरः एतौद्वौतमःसंज्ञौ एतेयथाक्रमंसत्वादिगुणाधिपतयोग्रहाःप्रयोजनं सत्वंरजस्तमोवाविंशांशेयस्यभास्करस्तादृगिरिति स्वजातके अन्येपुनःग्रहबलाद्वर्णयंति तथाच श्रीदेवकीर्तिः बलवद्भिस्तद्गुणोभवेत्जातइति अत्राचार्यस्ययवनेश्वरेणसहमतभेदः तेनभौमःसात्विकउक्तः तथाचतद्वाक्यं सत्वाधिकाभास्करभौमजीवाभृग्वात्मकोराजसिकःशशीच शनैश्चरतामसि कोबुधस्तुसंयोगतोन्याह्वयमतेविशेषात् आचार्यस्यसत्यवचनमभिमतं तथाचसत्यः तामसिकौकुजसौरी राजसिकोभार्गवः शशिसुतश्च जीवशशिभास्कराः सात्विकाग्रहवत् प्रकृतयोनृणां एवंयत्रयत्राचार्यस्य यवनेश्वरेण सहमतभेदस्तत्रसत्यमतमपि अथपूर्वमतमभिहितं सत्वंकुजचंद्रार्कजीवाः पुनःकिमित्युक्तंउच्यते इहगुणवचनःसत्वशब्दस्तत्रशौर्यपर्यायः कार्याकार्यप्रवृत्तीनांसिंहादीनामप्यस्ति येनएकाकिनोपिवनवासिनः तथाच एकाकिनिवनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे सत्वोच्छ्रितेमृगपतौराजेतिगिरःपरिणमंति अथगुणस्वरूपम् यःसात्विकस्तस्यदयास्थिरत्वंसत्यार्जवंब्राह्मणदेवभक्तिः रजोधिकः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

काव्यकलाशतस्त्रीसंसक्तचित्तः पुरुषोतिशूरः नमोधिकोवंचयितापरेशंमूर्खोलसः क्रोधपरोतिनिद्रइति ७ अथचंद्रार्कयोः स्वरूपंत्रोटकेनाह मधुपिंग
लदृगिति मधुवत्पिंगलादृष्टिर्यस्यसः ईषत्कातराक्षः चतुरस्रतनुः प्रसारितभुजद्वयप्रमाणसमोच्छ्रायः पित्तप्रकृतिः पित्ताधिकः अल्पकचोविरलकेशः एवंवि
धः सविता आदित्यः तनुवृत्ततनुरित्यादि तन्वीचासौवृत्ताचतनुवृत्तातादृशीतनुर्यस्यसतनुवृत्ततनुः कृशावर्तुलांगइत्यर्थः अथबहुवातकफः प्रभूतमारुत-
श्लेष्मा प्राज्ञोमेधावी मृदुवाक्कोमलभाषी शुभदृक् दर्शनीयाक्षः एवंविधः शशीचंद्रः ८ अथअंगारकबुधयोःस्वरूपंस्वागतयाह क्रूरइति क्रूरादुष्टादृक्
दृष्टिर्यस्य सक्रूरदृगंगारकः सचतरुणमूर्त्तिः नित्यंयौवनोपेताकारविग्रहः उदारोदाता पैत्तिकः पित्तबहुलः सुचपलोतीवास्थिरचित्तः कृशमध्यस्तनूदरः
एवंविधोंगारकः भौमः श्लिष्टवाक् इत्यादि श्लिष्टवाक्गद्गदभाषी सततहास्यरुचिः नित्यंपरिहासशीलः पित्तमारुतकफप्रकृतिर्दोषत्रयोल्बणस्वभावः ९
एवंविधोबुधः अथजीवशुक्रयोः स्वरूपंवंशस्थेनाह बृहत्तनुरिति बृहत्तनुः स्थूलशरीरः मूर्द्धजाकेशाः ईक्षणेनयनेचकपिलपिंगलेचयस्यकपिलकेशव कातराक्षइत्य

तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्चशशीमृदुवाक्शुभदृक् ८ क्रूरदृक्तरुणमूर्तिरुदारः पैत्तिकः सुचपलः कृशमध्यः श्लिष्टवाक्स
ततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृतिश्च ९ बृहत्तनुः पिंगलमूर्धजेक्षणो बृहस्पतिः श्रेष्ठमतिः कफात्मकः भृगुः सुखीकांतवपुः
सुलोचनः कफानिलात्मासितवक्रमूर्द्धजः १० मंदोलसः कपिलदृक्कृशदीर्घगात्रः स्थूलद्विजः परुषरोमकचोनिलात्मा स्नाय्वस्थ्यसृक्त्व
गथशुक्रवसाः समज्जा मंदार्कचंद्रबुधशुक्रसुरेज्यभौमाः ११

र्थः श्रेष्ठमतिर्धर्मानुगप्रज्ञः कफात्मकः कफाधिकशरीरः श्लेष्मात्मा एवंविधोबृहस्पतिः
भृगुरित्यादि सुखीनित्यंसुखासक्तः कांतवपुर्दर्शनीयशरीरः सुलोचनः शोभनाक्षः कफानिलात्मा श्लेष्ममारुतप्रकृतिः असितवक्रमूर्धजः असिताः कृष्णाव
क्राः कुटिलाः मूर्द्धजाः केशाः यस्यकृष्णाकुटिलकेशाइत्यर्थः एवंविधोभृगुः शुक्रः १० अथशनैश्चरस्वरूपंस्नाय्वादिसारत्वंचग्रहाश्रयंवसंततिलकेनाह
मंदोलसइति अलसः क्रियास्वपटुः कपिलदृक्कातराक्षः कृशं दुर्बलं दीर्घम् उच्चतरंगात्रंयस्य गात्राणिवासः दुर्बलोच्चदेहः स्थूलद्विजोबृहद्दंतः परुषरोमकचः
रूक्षतनूरुहकेशः अनिलात्मा वातप्रकृतिः एवंविधोमंदः शनैश्चरः स्नाय्वस्थीत्यादि मंदादीनांग्रहाणांस्नाय्वादिसारत्वंस्नाय्वस्थिनीप्रसिद्धार्थेदेहवतांशनैश्चरादित्यो-
स्नायुर्मंदः शनैश्चरः शिरासारः अस्थिअर्कः आदित्यः अस्थिसारः असृग्रुधिरंतच्चंद्रमाः त्वक्चर्मतद्बुधः अथशब्दआनंतर्यार्थे शुक्रंरेतः तच्छुक्रः वसामेदस्तत्सुरे १२
ज्योगुरुः मज्जा अस्थ्यंतर्गतोधातुविशेषः सभौमः ग्रहाणांस्वरूपज्ञानप्रयोजनम् लग्ननवांशपतुल्यतनुःस्यादित्यत्रोपयुज्यते जन्मकालेयोग्रहोबलवान्तस्य-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ठितस्वरूपस्तत्कालजातोभवति तन्द्वानुसारश्च हृतनष्टादिप्रश्नकालेप्येवंविधधातुरूपाश्चौरादयः व्याधिप्रश्ने यल्लग्नंयच्चलग्नेनवांशकोवर्ततेतत्स्वामि-
नोबलवशादभिहितदोषभवापीडा ॥ अधुनाग्रहाणांस्थानवस्त्रद्रव्यंतत्रप्रभुत्वंशार्दूलविक्रीडितेनाह देवाग्नीति अर्कात्प्रभृतिनदादीनांग्रहाणांक्रमात्-
देवादीनिस्थानानि तत्रदेवस्थानमादित्यस्य अंबुस्थानंचंद्रमसः अग्निस्थानंभौमस्यविहारभूमिः क्रीडास्थानंबुधस्य कोशोभांडारागारंतत्स्थानंबृहस्प-
तेः शयनस्थानंशुक्रस्य क्षित्युत्करः अवकरराशिस्तत्स्थानंशनैश्चरस्य एतेषांस्थानानांएतेस्वामिनः प्रयोजनं बलवतिगृहेग्रहोक्तस्थानेप्रसवज्ञानं
हृतनष्टादेश्चौरादेः तदेवस्थानं द्रव्यस्यचवस्त्रमित्यादि अर्कादितिसर्वत्रानुवृत्तिः तत्स्थूलतंतुकृतमादित्यस्यवस्त्रं अभुक्तंनवंचंद्रस्य अग्निनाहतंएक
देशदग्धंभौमस्य केनांबुनाहतंक्लिन्नंबुधस्य मध्यंनातिनवंनातिजीर्णंबृहस्पतेः दृढंकालांतरस्थायिशुक्रस्य स्फाटितंजीर्णंशनैश्चरस्य प्रयोजनम् सूति
कावस्त्रज्ञानम् हृतनष्टादिचिंतायांचौरादेर्बलवद्ग्रहवशाद्वस्त्रज्ञानम् ताम्रंस्यादित्यादि ताम्रमादित्यस्य चंद्रस्यमणयः भौमस्यहेमसुवर्णंबुधस्यशुक्ति-
सुज्यत इतिशुक्तिः रीतिकांस्यादि रजतंरौप्यंबृहस्पतेः मुक्ताशुक्रस्य अयःकृष्णलोहंसीसत्रपुणीचशनैश्चरस्य तथाचानेनैवसूक्ष्मजातकेउक्तम् अर्कादितः

देवांब्वग्निविहारकोशशयनक्षित्युत्करेशाःक्रमाद्वस्त्रंस्थूलमभुक्तमग्निकहतंमध्यंदृढंस्फाटितम् ताम्रंस्यान्मणिहेमयु-
क्तिरजतान्यर्काच्चमुक्तायसीद्रेष्काणेःशिशिरादयःशशुरुचजग्वादिषूद्यत्सुवा ॥१२॥

ताम्रमणिहेमयुक्तिरजतानिमौक्तिकंलोहं वक्तव्यं
बलवद्भिःस्वस्थानेहेमजीवेपि तथाचबादरायणः अर्कस्यताम्रंमणयोहिमांशोर्भौमस्यहेमंदुस्तनस्यशुक्तिः जीवस्यरौप्यंस्वगृहेस्थितस्यतस्यैवहेमोशनसश्च
मुक्ता तीक्ष्णांशुदेहप्रभवस्यसीसंकृष्णायसंचप्रवदंतितज्ज्ञाः प्रयोजनम् सूतिकागृहेबलवद्ग्रहेद्रव्यकर्तृहितनष्टादिचिंतायांचतद्द्रव्यनाशादिपरिज्ञानम्
तच्छुभदशायांतस्मिन्नुपचयस्थेतदाप्तिःउक्तविपरीतेहानिः द्रेष्काणेरित्यादि अत्रशकारादिभिर्गुर्पर्यंतैर्वर्णैः संज्ञाधैः शनैश्चरप्रभृतीनांगुर्वतानांदृष्टांतानुरो
धान्निर्देशःकृतः शनैश्चरशुक्ररुधिरचंद्रबुधगुरुसूर्यलक्षलग्नगतेषुशिशिरादयः षडृतवोज्ञेयाः तत्रशकारोपलक्षितः शनैश्चरः तस्मिन्नुदयेलग्नस्थेशि
शिरऋतुर्विज्ञेयः शुकारोपलक्षितः शुक्रः तस्मिन्नुदयेवसंतः रुकारोपलक्षितोरुधिरोभौमस्तस्मिन्नुदयेग्रीष्मः चकारोपलक्षितश्चंद्रस्तस्मिन्नुदयेव
र्षाज्ञेयः ज्ञोबुधस्तस्मिन्नुदयेशरत् गुकारोपलक्षितोगुरुस्तस्मिन्नुदयेहेमंतः आदित्येप्युदयेग्रीष्मः तथाचबादरायणःग्रीष्ममथप्रवदंतिकुजार्कावि
ति द्रेष्काणैरित्यस्यवाइत्यनेनव्यवहितेनसंबंधः द्रेष्काणैर्वोदियद्भिः शनैश्चरादिसंबंधिभिः शिशिरादयोज्ञेयाः एतदुक्तंभवति लग्नेग्रहासंभवेशनैश्चरे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

द्रेष्काणे लग्नगते शिशिरः एवं शुक्रद्रेष्काणे वसंतः भौमद्रेष्काणे ग्रीष्मः रविद्रेष्काणे ग्रीष्मः एवं चंद्रद्रेष्काणे वर्षाः बुधद्रेष्काणे शरत् जीवद्रेष्काणे हेमंतः अत्र च सुरव्यो ग्रहोदयेनर्तुनिर्देशः कर्तव्यः तदभावे द्रेष्काणेनेति ज्ञातव्यम् बन्हीनासुदयोपि द्रेष्काणेनैव केचिद्बन्हीनासुदये बलवद्ग्रहेणेति व्याचक्षते तथा च मणित्यः द्व्याद्यैर्लग्नोपगतैर्योबलवान् तद्गृहर्तुनिर्देश इति तत्रेन ज्ञानम् लग्ने यो ग्रहस्थितस्तदुक्तऋतुर्वाच्यः बहुषु लग्नगतेषु यो बलवान् ग्रहाभावे द्रेष्काणपतेः ऋतुनिर्देशः प्रयोजनं नष्टजातके ऋतुनिर्देशः इति हि नष्टादिचिंतायां चेति अत्राचार्येण ग्रहाणां शाखाधिपत्यं नोक्तम् उक्तं च स्वल्पजातके ऋगथर्वसामयजुषामधिपा गुरुसौम्यभौमसिताः ऋग्वेदाधिपतिर्गुरुः अथर्ववेदाधिपतिः सौम्यो बुधः सामवेदाधिपतिर्भौमः यजुर्वेदाधिपतिः शुक्रः प्रयोजनम् बलवति शाखाधिपे ब्राह्मणादिस्तच्छाखापाठको भवति ब्राह्मणे चौरे ज्ञाते शाखाविज्ञानम् अनिष्टस्थानस्थे ग्रहे तन्मंत्रैः शांतिरिति १२ अथ ग्रहाणां दृष्टिस्थानानि निसर्गदृष्टिफलानि च महर्षिण्याह त्रिदशेति यस्मिन्स्थाने ग्रहाः स्थितास्तस्मात्रिदशादीनि स्थानानि चरणाभिवृद्धितः पादवृध्या ऽवलोकयंति ग्रहा यस्मिन्राशौ स्थितः तस्मात्तृतीयदशमराशी यौ तौ चरणपादेन चतुर्थभागदृष्ट्या ऽवलोकयंति एवं त्रिकोणस्थौ नवपंचमस्थानगता

त्रिदशत्रिकोणचतुरस्त्रसप्तमान्यवलोकयंति चरणाभिवृद्धितः रविजामरेज्यरुधिराः परे च ये क्रमशो भवंति किल वीक्षणेधिकाः १३

वर्धदृष्ट्या चतुरस्त्रे ऽष्टमचतुर्थे अष्टमचतुर्थस्थानस्थौ पादहीनदृष्ट्या सप्तमगं गृहं परिपूर्णदृष्ट्या चरणाभिवृद्धित इत्यत्राभिशब्दो वीप्सां द्योतयति चरणदृष्ट्या पादवृध्येत्यर्थः यावत्सा दृष्ट्या पश्यन्ति तावत्फलं प्रयच्छंति तथा च स्वल्पजातके दशमतृतीये नवपंचमे चतुर्थाष्टमे कलत्रं च पश्यंति पादवृध्या फलानि चैवं प्रयच्छंति अर्थादेव ग्रहो नुक्तस्थानानि न पश्यंतीति तथा च सारावल्याम् सद्ध्यं पश्यंति सदा ग्रहाश्चरणवृद्धितः सर्वे त्रिदशत्रिकोणचतुरस्त्रसप्तगतान्फलं क्रमेणैव पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः चतुरस्त्रं भूमिसुतः सितार्कबुधाहिमकराः कलत्रं च तथा च यवनेश्वरः द्वौ पञ्चिमौ षष्ठमथ द्वितीयं संस्थानराशेः परिहृत्य राशिं शेषान्ग्रहः पश्यति सर्वकालमिष्टेषु चैषां विहिता दृगिष्टा यामित्रसंदृष्टिफलं समग्रं स्वपादहीनं चतुरस्त्रयोश्च त्रिकोणयोर्दृष्टिफलार्धमाहुर्दुश्चिक्यसंज्ञे दशमे च पादम् रविजामरेज्यरुधिरा इति किलेत्यागमसूचने चरणाभिवृद्धित इत्यनुवर्तते एते रविजादयश्चरणाभिवृद्धितः पादोपचयाद्वीक्षणे दर्शने क्रमशो ऽधिकफलप्रदा भवंति रविजः सौरः सद्दर्शने पादफलप्रदः अमरेज्यो बृहस्पतिरर्धफलप्रदः रुधिरोंगारकः सः पादहीनफलप्रदः अपरेर्कचंद्रबुधशुक्रास्ते वीक्षणे समग्रफलप्रदाः एतन्नैसर्गिकं ग्रहाणां दृष्टिफलम् स्थानवशाद्दे- १३

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यांयथास्वं दृष्टिफलमूलम् एवमेके व्याचक्षते अपरेतुआहुः स्थानफलमेतत् तेनत्रिदशादिस्थानगतान्ग्रहराशीन्पश्यंति रविजाद्योदर्शनेधिकफलप्रदा-
भवंति तद्यथातृतीयदशमस्थानग्रहान्राशीन्वाशनैश्चरः पश्यन्नन्येभ्योग्रहेभ्योधिकफलप्रदोभवति परिपूर्णपश्यतीत्यर्थः एवंत्रिकोणस्थान्जीवः चतुर
स्रगान्भौमः सप्तमस्थान्सूर्यचंद्रबुधशुक्राः एतच्चबहुनराणांआचार्याणांमतं तथाचभगवान्गार्गिः दुश्चिक्यस्वगतान् सौरस्त्रिकोणस्थान्बृहस्पतिः
चतुर्थाष्टमगान्भौमः शेषाः सप्तमसंस्थितान् भवंतिवीक्षणोनित्यमुक्ताधिकफलायग्रहाइति १३ अथग्रहाणांकालनिर्देशंचवैतालीयेनाह अयनइति -
भास्करादादित्यात्प्रभृत्ययनादिकालनिर्देशः तत्रायननिर्देशोभास्करात्सूर्यात् क्षणोमुहूर्तस्तन्निर्देशःश्चंद्रात् वासरोदिवसस्तन्निर्देशोभौमात् ऋतु-
र्मासद्वयात्मकस्तन्निर्देशोबुधात् मासनिर्देशोजीवात् मासार्द्धपक्षस्तन्निर्देशः शुक्रात् समःसंवत्सरस्तन्निर्देशःसौरात् प्रयोजनम् प्रश्नलग्नेयस्यग्रह
स्यनवांशकोदयः सःग्रहस्तस्मान्नवांशकाद्यावत्संख्येनवांशकेभवतितावत्संख्योऽयनादिकोग्रहोपलक्षितः कालशुभाशुभफलपंक्तौवाच्यः अन्येत्वेवंव्या
चक्षते लग्नेयावत्संख्यानवांशकउदितस्तावत्संख्योऽयनादिकालोंशपतिवशादूह्यः तथाचमणित्थः लग्नांशकगतितुल्यः कालोलग्नोदितांशसमतुल्यः

अयनक्षणवासरर्तवोमासोऽर्द्धंचसमाश्चभास्करात् कटुकलवणतिक्तमिश्रितामधुराम्लौकषायइत्यपि १४ श्रीः

वक्तव्योरिपुविजयेगर्भाधानेथकार्यसंयोगेवक्तव्यः कटुकलवणेत्यादि भास्करादादित्यात् कटुकादिरसनिर्देशः तत्रादित्यात्सूर्यात्कटुकस्यरसस्यनिर्देशः कटु
कंमरीचादिचंद्रात्लवणस्य भौमात्तिक्तस्य तिक्तंलिंबादिबुधान्मिश्रस्य षड्रसस्य जीवान्मधुरस्यमिष्टस्य शुक्रादाम्लस्य सौरात्कषायस्य प्रयोजनम् आधान
कालयोबलवान् तदुक्तरसस्यदोहददोगर्भिण्याभवति तथाचसारावल्याम् मासतृतीयेस्त्रीणांदोहदकोजायतेवश्यम् मासाधिपस्यभावैर्लग्नपयोगादिभि
श्चिन्त्यम् भोजनाश्रयेचप्रश्नेग्रहोदयेनन्नवांशेवा तदुक्तरसान्वितभोजनज्ञानमिति १४ अथग्रहाणांमित्रामित्रविधिंशार्दूलविक्रीडितेनाह जीवइति सूर्यादीनांग्रहाणां
क्रमाज्जीवादयः सुहृदः तत्रादित्यस्य सूर्यस्यजीवोबृहस्पतिः सुहृन्मित्रम् जीवबुधौगुरुसौम्यौचंद्रस्य शुक्रबुधौभौमस्य विगतोर्कः सूर्योयेभ्योग्रहेभ्यो-
तेसूर्यवर्जिताः सर्वएवबुधस्यविकुजाविगतांगारकाः सर्वएवबृहस्पतेः वींदूर्काविगतोचंद्रार्कौयेभ्यस्तेसर्वग्रहाःशुक्रस्य विकुजेंदुहीनाःकुजोभौमइंदुश्चंद्रः
इनःसूर्यः एतेविकुजेंदुहीनाः सर्वएवसौरस्य शनैश्चरस्य एवंकेषांचिन्मतंनबहूनाम् अत्रचतेषांशत्रुमित्रव्यवहारएवेष्टोनोदासीनव्यवहारस्तस्मान्मि
त्रेभ्योन्येन्यमित्राणीति केचिद्यवनेश्वरादयः तथाच रवेर्गुरुर्मित्रमतोन्यथान्येगुरोस्तुभौमंपरित्यज्यसर्वे चांद्रेस्तुनर्कोभृगुनंदनस्यव्यर्केंदवोये

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

बृ·टी· फलदः प्रविष्टाः १ भौमस्य शुक्रकोशाशिजश्चामित्रमितं दोर्बुधं देवगुरुं च विद्यात् सौरस्य मित्राण्यकुजेंदुसूर्याः शेषान् रिपून् विद्धि नृणां च तद्वत् २ सत्योक्त इति सत्यो ग्र·यो·
१४ क्ते होराशास्त्रे स्वत्रिकोणभवनादात्मीयमूलत्रिकोणराशेः स्वांत्यधीधर्मपाः स्वोच्चात् फलस्वपाश्च ते ग्रहाः फलदो भवंति तत्र त्रिकोणं मूलत्रिकोणं तस्मात्
स्वपो द्वितीयराश्याधिपः तस्मादेवांत्यपो द्वादशस्थानाधिपः धीस्थानपः पंचमस्याधिपः धर्मपो नवमाधिपः स्वोच्चपो यद्गृहमुच्चस्तस्य स्वामी आयुषोष्टमस्था-
नस्याधिपः सुखपश्चतुर्थस्थानाधिपतिः ग्रहो मित्रं भवति स्वलक्षणविधेर्विरोधादन्यैः अग्निमस्थानाधिपतिभिर्ग्रहैः सहतायं मित्रामित्रविभागः कल्पनी
यः विरोधादसकृद्दोद्भवं स्वे च तल्लक्षणं च स्वलक्षणं स्वलक्षणोविधिः तेन विरोधस्तस्मात् एतदुक्तं भवति यः स्वविधिः मित्रलक्षणविभागः प्रदर्शितः अतोन्य-
स्थानाधिपा ये ग्रहास्ते ग्रहस्य फलदो न भवंति तथा च सत्यः फलदस्त्रिकोणभवनात्सुहृत्स्वफलं मे व्ययेयधनभवने स्वजनेनिधने धर्मे स्वोच्चे च भवंति नोशो
षाः स्वजनसंज्ञं चतुर्थस्थानं ततो द्विराश्यधिपो मित्रसंज्ञः एकराश्यधिपो मध्यमः अनुक्तराश्यधिपः शत्रुवस्यातिच द्वोकात्तुक्तभूपात् फलदस्समारिभू-
त्संचिंत्य नैसर्गिकानि नि एकराश्यधिपो मध्यस्थ इति यदुक्तं तथा च चंद्रार्कावेकराश्यधिपौ वपि मित्रसंज्ञौ भवतः तयोर्हि राशिद्वयस्याधिपत्याभावा
त् राशिद्वयस्य योधिपतिर्ग्रहः स एव यश्चैकराश्यधिपत्वात्त्रिभपत्वं प्राप्नोति तथापि द्विपत्व एवं ज्ञातव्यः तस्य स्वराशिव्यतिरेकात् एतन्मंदबु
द्धिव्युत्पादनार्थं स्पष्टतरं व्याख्यायते तद्यथादित्यस्य सिंहस्त्रिकोणः तस्माद्द्वादशस्थानस्य कर्कटस्य चंद्रमा अधिपतिः स एकराश्यधिपोपि सन् द्विती
यस्य राश्याधिपत्यस्याभावादादित्यस्य मित्रम् सिंहाच्चतुर्थो वृश्चिकः नवमो मेषः तयोर्भौमोधिपतिः आदित्यस्य स्वोच्चमेषः तस्याधिपो भौमः मेषस्य
सिंहनवमत्वादादित्यस्य स्वोच्चत्वादेकराशित्वं मेषस्यैकत्वाद्वृश्चिकस्य द्वितीयत्वाद्भौमः द्विराश्यधिपो जातः तेनादित्यस्य मित्रं सिंहात्पंचमाष्टमौ धन्विमीनौ तयो
रधिपतिर्जीवः स चोक्तस्थानद्वयस्याधिपतित्वादादित्यस्य मित्रं गुरुः सिंहाद्द्वितीयैकादशौ कन्यामिथुनौ तयोर्बुधः स्वामी तत्र द्वितीयस्थानस्योक्तत्वादेकाद
शस्यानुक्तत्वात् पठितैकराश्यधिपत्वाद्बुधो रवेर्मध्यमः सिंहात्सप्तसप्तमस्थाने मकरकुंभौ नोक्तौ तयोराधिपत्यादादित्यस्य शनैश्चरः शत्रुः सिंहात् दशमतृती
ये वृषतुले तयोरनुक्तयोः स्थानयोः राश्यधिपत्वाच्छुक्र आदित्यस्य शत्रुः एवं रवेः अथ चंद्रस्य तथा चंद्रस्य वृषस्त्रिकोणस्तस्माच्चतुर्थस्थानं सिं-
हस्तस्याधिपः सूर्यः स एकराश्यधिपोपि सद्द्वितीयस्य राशेरधिपत्यस्याभावाच्चंद्रस्य मित्रम् वृषाद्द्वितीयो मिथुनः पंचमः कन्या तयोर्बुधः अधिपतिः स चोक्तस्थानद्वय
स्याधिपत्वाच्चंद्रस्य मित्रम् वृषात्सप्तमद्वादशौ वृश्चिकमेषौ तयोर्भौमः स्वामी तत्र द्वादशस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाद्भौमश्चंद्रस्य मध्य १४
मः वृषादष्टमैकादशौ धन्विमीनौ तयोः गुरुः स्वामी तत्रैकादशस्थानस्यानुक्तत्वात् अष्टमस्योक्तत्वात् पठितैकराश्यधिपत्वाज्जीवश्चंद्रस्य मध्यमः चंद्रस्य

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वृषउच्चः वृषात्सप्तषष्ठस्थानयोः शुक्रोधिपतिस्तत्रवृषस्योच्चत्वेनोक्तत्वात् षष्ठस्यानुक्तत्वात्पठितैकराश्यधिपत्वाच्चंद्रस्यशुक्रोमध्यमः वृषान्नवमदश
मौमकरकुंभौतयोः स्वामीशनिः तत्रनवमस्योक्तत्वादशमस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरः चंद्रस्यमध्यमः एवंचंद्रस्य अथभौमस्य तद्यथा
भौमस्यमेषस्त्रिकोणंमेषाच्चतुर्थस्थानस्यकर्कटस्याधिपश्चंद्रः सएकराश्यधिपोपिसन्द्वितीयराशेरधिपत्याभावाद्भौमस्यमित्रंमेषात्पंचमस्यसिंहस्याधिपः
सूर्यः सएकराश्यधिपोपिसन्द्वितीयराशेरधिपत्याभावाद्भौमस्यमित्रंमेषान्नवमद्वादशौधन्विमीनौतयोर्जीवोधिपतिः सचोक्तस्थानद्वयस्याधिपत्याद्भौम
स्यमित्रंमेषात्तृतीयषष्ठौमिथुनकन्येतयोरपठितत्वात् तयोर्बुधस्याधिपत्वाद्भौमस्यबुधः शत्रुः मेषाद्द्वितीयसप्तमौवृषतुलेतयोःशुक्रः स्वामी तत्रद्वि
यस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकराश्यधिपत्वाच्छुक्रोभौमस्यमध्यमः मेषाद्दशमैकादशौमकरकुंभौतयोः सौरोधिपतिः भौमस्यमकरउच्चः त-
स्योक्तत्वादेकादशस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरोभौमस्यमध्यमः एवंभौमस्य अथबुधस्यकन्यामूलत्रिकोणंतस्माद्द्वादशस्थानस्यसिंहस्या
धिपतिः सूर्यः सएकराश्यधिपोपिसन्द्वितीयराशेरधिपत्याभावात् बुधस्यमित्रंसूर्यः कन्यायाः द्वितीयनवमौतुलवृषौतयोः शुक्रोधिपतिः सचोक्तस्था

जीवोजीवबुधौसितेंदुतनयौव्यर्कविभौमाः क्रमाद्वींद्वर्काविकुजेंद्विनाश्वसुहृदः केषांचिदेवंमतम् सत्योक्तेसुहृदस्त्रि
कोणभवनात्स्वात्स्वांत्यधीधर्मपाः स्वोच्चायुःसुखपाः स्वलक्षणविधेर्नान्यैर्विरोधादिति १५

नद्वयस्याधिपत्वाद्बुधस्यमित्रंकन्या-
याः एकादशस्थानस्यकर्कटस्याधिपतिश्चंद्रः तस्यानुक्तत्वाद्बुधस्यशत्रुः कन्यायाः तृतीयाष्टमौवृश्चिकमेषौतयोर्भौमोधिपतिः तत्राष्टमस्योक्तत्वात्तृतीयस्यानु-
क्तत्वात्पठितैकराश्यधिपत्वाद्भौमोबुधस्यमध्यमः कन्यायाश्चतुर्थसप्तमौधन्विमीनौतयोर्जीवोधिपतिस्तत्रचतुर्थस्योक्तत्वात्सप्तमस्यानुक्तत्वात्पठितैकरा-
श्यधिपत्वाज्जीवोबुधस्यमध्यमः कन्यायाः पंचमषष्ठौमकरकुंभौतयोः सौरोधिपतिस्तत्रपंचमस्योक्तत्वात्षष्ठस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरो-
बुधस्यमध्यमः एवंबुधस्य अथगुरोः जीवस्यधन्वीत्रिकोणंतस्मादष्टमस्थानस्यकर्कटस्याधिपतिश्चंद्रः सएकराश्यधिपोपिसन्द्वितीयराशेराधिपत्याभा
वाज्जीवस्यमित्रम् धनुषः पंचमद्वादशौमेषवृश्चिकौतयोः भौमोधिपतिः सचोक्तस्थानद्वयस्याधिपतित्वाज्जीवस्यमित्रम् धनुषोनवमस्यसिंहस्याधि
पतिः सूर्यः सएकराश्यधिपोपिसन्द्वितीयस्यराशेरधिपत्याभावाज्जीवस्यमित्रम् धनुषः पंचमद्वादशौमेषवृश्चिकौतयोर्भौमोधिपतिः सचोक्तस्थानस्या
धिपत्याज्जीवस्यमित्रम् धनुषोद्वितीयतृतीयौमकरकुंभौतयोः सौरोधिपतिः तत्रद्वितीयस्योक्तत्वात्तृतीयस्यानुक्तत्वात्पठितैकराश्यधिपत्वात्सौरोजी-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नस्यमध्यस्थः धनुषः सप्तमदशमौमिथुनकन्येतयोर्बुधोधिपतिःस्थानद्वयस्यानुक्तत्वाद्गुरोर्बुधः शत्रुः धनुषः षष्ठैकादशस्थानेवृषतुलेतयोः शुक्रो
धिपतिःस्थानद्वयस्यानुक्तत्वाच्छुक्रोगुरोः शत्रुः एवंजीवस्य अथशुक्रस्य शुक्रस्यतुलत्रिकोणंतस्मान्नवमद्वादशस्थानेमिथुनकन्येतयोर्बुधोधि
पतिः सचोक्तस्थानद्वयस्याधिपतित्वाच्छुक्रस्यमित्रम् तुलायाः चतुर्थपंचमौमकरकुंभौतयोरधिपतिः सौरः सचोक्तस्थानद्वयस्याधिपत्वाच्छुक्रस्य-
सौरः मित्रम् तुलाद्वितीयसप्तमौवृश्चिकमेषौतयोर्भौमोधिपतिः तत्रद्वितीयस्योक्तत्वात्सप्तमस्यानुक्तत्वात्सठितैकराश्यधिपत्वाद्भौमः शुक्रस्यमध्यस्थः
तुलातृतीयषष्ठौधन्विमीनौतयोर्जीवोधिपतिः तत्रमीनः शुक्रस्योच्चस्योक्तत्वाद्धनुषोनुक्तत्वात्सठितैकराश्यधिपत्वाज्जीवः शुक्रस्यमध्यस्थः तुला
दशमः कर्कटस्यानुक्तत्वाच्छुक्रस्यचंद्रः शत्रुः तुलादेकादशः सिंहस्तस्याधिपः सूर्यः एकराश्यधिपोपिसन्द्वितीयराशेराधिपत्याभावात् स्तस्यस्थानस्या
नुक्तत्वाच्छुक्रस्यार्कः शत्रुः एवंशुक्रस्य अथसौरस्य सौरस्यकुंभस्त्रिकोणं तस्मात्पंचमाष्टमौमिथुनकन्येतयोर्बुधोधिपतिः सचोक्तस्थानस्याधिपतित्वा
त्सौरस्यबुधोमित्रं सौरस्योच्चस्तुलाकुंभाच्चतुर्थनवमौवृषतुलौतयोरधिपतिः शुक्रः सचोक्तस्थानद्वयस्याधिपतित्वात्सौरस्यशुक्रोमित्रं कुंभाद्वितीयैका

शत्रूमंदसितौसमश्चशशिजोमित्राणिशेषारवेस्तीक्ष्णांशुर्हिमरश्मिजश्चसुहृदौशेषाःसमाःशीतगोः जीवेंदूष्णकराःकुजस्य
सुहृदोज्ञोरिःसितार्कीसमौमित्रेसूर्यसितौबुधस्यहिमगुःशत्रुःसमाश्चापरे १६ दशौमीनधन्विनौतयोर्जीवोधिपतिः तत्रद्वितीयस्योक्त
त्वादेकादशस्यानुक्तत्वात्सठितैकराश्यधिपत्वात्तस्यजीवोमध्यस्थः कुंभात्सप्तमः कर्कस्तस्याधिपतिश्चंद्रस्तस्यानुक्तत्वात्सौरस्यचंद्रः शत्रुः कुंभात्सप्तमः
सिंहस्तस्याधिपतिः सूर्यस्तस्यानुक्तत्वात्सौरस्यसूर्यः शत्रुः कुंभात्तृतीयदशमौमेषवृश्चिकौतयोर्भौमोधिपतिस्तयोरनुक्तत्वाद्भौमः सौरस्यशत्रुरिति १५
अथतात्सत्योक्तेनैकश्लोकानुक्रमपानग्रहस्यसुहृन्मध्यस्थशत्रून्शार्दूलविक्रीडितद्वयेनाह शत्रूमंदसितावितिरवेरादित्यस्यमंदः सौरः सितः शुक्रः
एतौद्वौशत्रूरिपू शशिजोबुधः समोमध्यस्थः नशत्रुर्नमित्रमुदासीनइत्यर्थः शेषाग्रहाश्चंद्रांगारकगुरवोमित्राणीति तीक्ष्णांशुरित्यादिशीतगोश्चंद्रस्य
सा तीक्ष्णांशुः सूर्यः हिमरश्मिजोबुधः एतौद्वौसुहृदौमित्रे शेषाः सर्वएवभौमजीवशुक्रसौराः समामध्यस्थाउदासीनाः जीवेंदूष्णकराइति कुजस्यभौम
स्यजीवोबृहस्पतिः इंदुश्चंद्रः उष्णकरः सूर्यः एतेसुहृदोमित्राणि ज्ञोबुधः अरिः शत्रुः सितार्कीशुक्रसौरौसमौमध्यस्थाविति मित्रेसूर्यसितावितिसू- १५
र्योरविः सितः शुक्रः एतौद्वौबुधस्यमित्रेसुहृदौहिमगुश्चंद्रमाः शत्रुररिः अपरेन्येभौमगुरुसौराः समामध्यस्थाइति १६ ७ ७

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

श्मिः सूर्यः एतयोः लग्नाद्व्यारिगतयोः एकोव्ययेद्वादशेस्थाने द्वितीयोरिस्थाने षष्ठे पत्न्या सहैकनयनस्य एकाक्षस्य जन्म वदंति कथयंति जातः काणो भवति नकेवलं यावत् तद्भार्या काणी भवतीत्यर्थः द्यूनस्थयोरिति शुक्रसूर्ययोर्द्यूनस्थयोः लग्नाद्योगपि सप्तमस्थयोः नवमयोः पंचमयोर्वा जातं विकलदारसुशंति कथयंति भार्याहीनांगा भवतीत्यर्थः अत्र द्यूनस्थयोः नवमपंचमसंस्थयोर्वा सुक्रार्कयोः केचिद्व्याख्यांसंभवमेतयोर्व्याख्यातः तच्चायुक्तं यस्माद्भगवान् गार्गिः पंचमे नवमे द्यूने समेतौ सितभास्करौ यस्य स्यात्तां भार्यां ह्यायंति स्थैकांगविवर्जिता ३ अथास्कृतकलत्रवंध्यापतिजन्मज्ञानं मालिन्याह कोणोदयइति कोणोशनैश्चरस्तस्मिलुदयेलग्नगते भृगुतनये शुक्रे अस्तचक्रसंधौ वृश्चिककर्कटमीनानामन्यतमांत्यनवांशकस्थे नकेवलं यावदस्ते लग्नात्सप्तमस्थानस्थे एवमस्तस्थश्चक्रसंधौ यदि भवति तदा जातो वंध्यापतिर्भवति वंध्या निःफलस्त्रीवा एतन्मकरवृषकन्यालग्नेषु संभवति अपुत्रदाति वक्तव्ये वंध्यापतिग्रहणेनैतज्ज्ञापयति यथा कौमारेभ्यो दारेभ्यः पुत्रोत्पत्तिर्भवत्यविरुद्धकामेभ्यो

लग्नाद्व्यारिगतयोः शशितिग्मरश्म्योः पत्न्या सहैकनयनस्य वदंति जन्म द्यूनस्थयोर्नवमपंचमसंस्थयोर्वा शुक्रार्कयोर्विकलदारमुशंति जातम् ३ कोणोदये भृगुतनयेस्तचक्रसंधौ वंध्यापतिर्यदि नकृतर्क्षमिष्टमुक्तम् पापग्रहैर्व्ययमदलग्नराशिसंस्थैः क्षीणे शशिन्यस्कृतकलत्रजन्म धीस्थे ४ असितकुजयोर्वर्गेस्तस्थे सितेनतदवेक्षिते परयुवतिगस्तौ चेत्सेंदु स्त्रिया सह पुंश्चलः ॥ १ ॥ भवति पापग्रहैरिति पापग्रहैः व्ययस्थानं द्वादशं मदस्थानं सप्तमं लग्नराशिरुदयः एतेषु त्रयोरेकस्मिन्वा पापग्रहैः यथासंभवं स्थितैः शशिनि चंद्रे क्षीणे धीस्थे लग्नपंचमगे अस्कृतस्याऽपुत्रस्याकलत्रस्य च स्त्रीवर्जितस्य पुत्रभार्यावर्जितस्य जन्म भवति जातस्य न भार्या न पुत्रो भवतीत्यर्थः ४ अथपरयुवतिगजन्मज्ञानं हरिण्याह असितेति असितकुजयोः सौरभौमयोः अन्यतमस्य वर्गे सिते शुक्रे स्थिते तस्मिंश्चास्तस्थे लग्नात्सप्तमगे तदवेक्षिते तयोरेव सौरारयोरन्यतमेनावेक्षिते दृष्टे जातः परयुवतिगः परदारगामी भवति तौ चेदित्यादि तौ सौरारावस्तेसप्तमे स्थाने एकराशिस्थितौ सेंदू चंद्रसहितौ भवतः सितकुजयोः वर्गः तत्स्थः सितः तदवेक्षितः तदा जातः स्त्रिया सह पुंश्चलो भवति सपुरुषः परदारेषु गच्छति तद्भार्या परपुरुषेषु गच्छति भृगुजशशिनोरित्यादि भृगुजः शुक्रः शशी चंद्रः तयोः भृगुजशशिनोः एकराशिगतयोः यत्रतत्रावस्थितयोः तावेव सितकुजावस्थे सप्तमे स्थाने भवतः तदा जातो नरः अभार्यो भवति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विरक्तोवा वाशब्दोऽत्राचार्यैर्नविकल्पने अभार्योभवत्यपुत्रश्च परिणततनूइति नाचस्त्रीवनृस्त्रियौ नरस्त्रीग्रहयोरेकराशिगयोरस्तेसप्त
मेतावेवासितकुजौभवतः नौचनोशुभग्रहदृष्टौसौम्यग्रहेणकेनचिन्नोदृश्येनेतदापरिणततनूप्रमदापतीभवतः परिणतेनतनूययोः एतदुक्तंभवति
तस्यवृद्धत्वेवृद्धभार्योपतिष्ठतइति ५ अथान्यानप्यनिष्टयोगान्मंदाक्रांतयाह वंशच्छेत्तेति चंद्रः शशीदैत्येज्यः शुक्रः पापाः क्रूरग्रहाः आ
दित्यभौमसौराः एतैः खमदसुखगैः खसंज्ञंदशमं मदस्थानंसप्तमं सुखसंज्ञंचतुर्थंएतेषुस्थानेषुचंद्रदैत्येत्यपापैः गतैः समवस्थितैः जातो
वंशच्छेत्ताभवति एतदुक्तंभवति यस्यजन्मनिचंद्रमादशमः शुक्रःसप्तमः पापाश्चतुर्थस्थाः सवंशच्छेत्ता तत्कृतोवंशउच्छिद्यते कुलविच्छि
त्तिर्भवति दुर्योधनवत्‌ शिल्पीत्र्यंशइति शशिसुतेनबुधेनयुक्तोयः त्र्यंशोद्रेष्काणः सयस्यराशेः संबंधीतस्मिन्त्सराशिः लग्नकेंद्रस्थेना
र्किणासौरेणदृष्टेजातः शिल्पीभवति चित्रकर्मादिकर्मणाजीवतीत्यर्थः अत्रकेचिद्बुधयुक्तराशेः शनैश्चरदृष्टिंवर्णयंति यथाराशौदृष्टेद्रेष्का

भृगुजशशिनोरस्ते भार्याहीनोविरक्तोपिवापरिणततनूनृस्त्र्योर्दृष्टेशुभैः प्रमदापती ५ वंशच्छेत्ताखमदसु-
खगैश्चंद्रदैत्येज्यपापैः शिल्पीत्र्यंशेशशिसुतयुतेकेंद्रसंस्थार्किदृष्टे दास्यांजातोद्युतिसुतगुरौरिःफगेसौरभागेनी
चोर्केंद्वोर्मदनगतयोर्दृष्टयोःसूर्यजेन ५ पापालोकितयोःसितावनिजयोरस्तस्थयोर्वाध्यरुक्कर्केंदौकर्कटवृश्चिकांशक
गतेपापैर्युतेगुह्यरुक् ॥ १ ॥ णोपिदृष्टःस्यात्‌ यद्येषःपक्षः आचार्याभिमतःस्यात्‌ तदाबुधकेंद्रस्थेनसौरेणदृष्टेशिल्पीभवत्येत
देवाचार्योवक्ष्यत्‌ त्र्यंशग्रहणंनाकरिष्यत्‌ कृतवांश्चातोवसीयतेनैतदाचार्यस्याभिप्रेतमिति तेनत्र्यंशग्रहणंकृतं तस्माद्द्रेष्काणराशेर्दृष्टि
विचारः नकेवलंयावद्विलग्नांशः स्वनाथेनेत्सत्रैवोदाहार्यम्‌ दास्यांजातइत्यादि द्युतिसुतगुरौशुक्रेरिःफगेलग्नाद्द्वादशस्थेनकेवलंयावत्सौर
भागेशनैश्चरनवांशकव्यवस्थितेदास्यांजातः दासीपुत्रोजातइतिवक्तव्यम्‌ नीचेर्केंद्वोरिति अर्केंद्वोः रविशशिनोःद्वयोरपिलग्नान्मदनगत
योःसप्तमस्थानस्थयोःसूर्यजेनसौरेणदृष्टयोरवलोकितयोः जातोनीचोभवति स्वकुलानुचिताधमकर्मकृदित्यर्थः ५ अथान्यानप्य
निष्टयोगान्शार्दूलविक्रीडितेनाह पापालोकितयोरिति सितः शुक्रः अवनिजोंगारकः एतयोरस्तयोः लग्नात्सप्तमगतयोरपि पापालोकित-
योः पापग्रहदृष्टयोर्जातस्यवाध्यरुक्भवति सचप्रसिद्धः यत्रतत्रराशौचंद्रेशशिनि कर्कटवृश्चिकांशकयोरन्यतमस्थेतत्रचान्येनपापेन १०२

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

फले जातो गुल्मरुग्भवति गुल्मरुक्‌ उरुव्याधिः श्वित्रीत्यादि अशुभयोः सौरारयोः रिःफधनस्थयोः द्वादशद्वितीयगतयोः चंद्रे लग्ने उदय
स्थे रवावादित्ये स्ते सप्तमस्थे जातः श्वित्री श्वेतकुष्ठयुक्तो भवति चंद्रे खे दशमस्थे ऽवनिजे भौमे ऽस्तगे सप्तमस्थे अस्मिन्योगे यद्यर्कजः सौरो वे-
शिस्थानस्थो भवति तदा जातो विकलांगहीनो भवति ७ अथान्यानप्यनिष्टयोगान्वसंततिलकेनाह अंतरिति अत्र तत्रस्थे शशिनि चंद्रे
अशुभयोः सौरभौमयोरंतर्मध्ये स्थिते पतंगे सूर्ये च मृगगते मकरस्थे जाताः श्वासक्षयप्लीहकविद्रधिगुल्मभाजो भवंति श्वासः प्रसिद्धः क्ष
यः शरीरक्षयः प्लीहः प्रसिद्धः वामकुक्षिसंस्थो मांसखंडः कविद्रधिगुल्मौ रोगौ प्रसिद्धौ एषामन्यतमेन रोगेणार्दिता भवंतीत्यर्थः केचिदत्रैक
वचनं पठंति श्वासक्षयप्लीहकविद्रधिगुल्मभाक्स्यादिति शोषीति रवींद्वोश्चंद्रार्कयोः परस्परमन्योन्यगृहांशगयोः आदित्यः कर्कटे सिंहे च चं
द्रोथवा यत्र तत्र राशौ सिंहांशके चंद्रः कर्कटांशे सूर्यः तदा जातः शोषी भवति अत्र केचित्परस्परगृहांशगयोर्वींद्वोरिति सिंहे सिंहांशके स्थिते

श्वित्री रिःफधनस्थयोरशुभयोश्चंद्रोदयेस्ते रवौ चंद्रे खे वनिजे स्तगे च विकलो यद्यर्कजो वेशिगः ७ अंतः
शशिन्यशुभयोर्मृगगे पतंगे श्वासक्षयप्लिहकविद्रधिगुल्मभाजः शोषी परस्परगृहांशगयोर्वींद्वोः क्षे
त्रेथवा युगपदेकगयोः कृशो वा ८ चंद्रेश्विमध्यझषकर्किमृगाजभागे कुष्ठी समंदरुधिरे तदवेक्षिते वा

चंद्रे कर्कटे कर्कटांशस्थे सूर्ये च जातः शोषी क्षयी भवतीति विवर्णयंति तच्चायुक्तम् यस्माद्भगवान्गार्गिः परस्परगृहे यातौ यदि वापि तदंशगौ-
भवेतामर्कशीतांशू तदा शोषी प्रजायते १ क्षेत्रेथवेति युगपत्तुल्यकालं तयोरेव परस्परक्षेत्रे यदा द्वावपि भवतः सिंहे यदा भावपि अर्कचंद्रौ
स्थितौ कर्कटे वा भवतः तदा जातः शोषी भवति कृशो वा कृशो दुर्बलः ८ अथान्यानप्यनिष्टयोगान्वसंततिलकेनाह चंद्र इति अश्विमध्ये
धन्विपंचमनवांशके चंद्रे स्थिते तत्र च समंदरुधिरे मंदेन सौरेण रुधिरेणांगारकेण युक्ते यथासंभवमन्यतमेन तदवेक्षिते वा ताभ्यामन्यत
मेन दृग्जातः कुष्ठी भवति अथवा यत्र तत्र राशौ झषकर्किमृगाजभागे झषो मीनः कर्की कुलीरः मृगो मकरः अजो मेषः एषामन्यतमे-
नवांशकस्थे चंद्रे तत्र मंदरुधिरयोरन्यतमेन फलते दृष्टे वा जातः कुष्ठी भवति अत्र चंद्रो यदा शुभग्रहदृष्टो भवति तदा कंडूविकारी भवति
न कुष्ठी यस्माद्यवनेश्वरः मीनांशके मेषमृगांशके वा चंद्रस्थितो नैव हि पापदृष्टः किलासकुष्ठादिविनष्टदेहमिष्टेक्षितः कंडूविकारिणं च १

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यानेस्त्रिकोणमिति अलिकर्किवृषैः वृश्चिककुलीरवृषभैः मृगेचमकरेएतैस्त्रिकोणयातेः भौमैः तथाविधोलग्नोभवति यस्यैषामन्यतमे
नवमेपंचमेवास्थानेभवति सचपापानामन्यतमेनयुक्तोदृष्टोवाभवति तदाजातः कुष्ठीभवति ९ अथान्यान्यप्यनिष्टयोगान्वसंतति-
लकेनाह निधनेति रविरादित्यः चंद्रःशशी आरःअंगारकः यमःसौरः एतेरविचंद्रारयमाः यथातथायेनतेनप्रकारेणनिधनारिधनव्यय-
स्थिताः अष्टमषष्ठद्वितीयद्वादशगास्तदाजातानांमनुजानांमनुष्याणामनेत्रतामांध्यंजनयंत्युत्पादयंति यथातथेतिक्रमनिवारणार्थः तांचा
नेत्रतांबलवद्ग्रहदोषकारणैः तेषांचतुर्णांग्रहाणांमध्याद्योबलवांस्तस्ययोवातपित्तश्लेष्मणांमध्याद्दोषउक्तः तेनदोषकारणेनतत्प्रकोपेनतस्या
क्षिविनाशोभवति १० अथान्यानप्यनिष्टयोगान्वैतालीयेनाह नवेति अशुभाः पापाः नवमायतृतीयधीयुताः नवमेएकादशेतृतीयेधी
स्थानेपंचमे एतेषुयथासंभवंयुताःसमवस्थिताः नचसौम्यैः शुभग्रहैरनिरीक्षितानदृष्टाः तदाबलवद्ग्रहदोषकारणैनैवपुरुषस्यनियमा

यातेस्त्रिकोणमलिकर्किवृषैर्मृगेचकुष्ठीचपापसहितैरवलोकितैर्वा ९ निधनारिधनव्ययस्थितारविचं
द्रारयमायथातथा बलवद्ग्रहदोषकारणैर्मनुजानांजनयंत्यनेत्रताम् १० नवमायतृतीयधीयुतानचसौ
म्यैरशुभानिरीक्षिताः नियमाच्छ्रवणोपघातदारदवैकृत्यकराश्चसप्तमे ११ उदयत्युडुपेसुरास्यगेसपि
शाचोऽशुभयोस्त्रिकोणयोः सोपप्लवमंडलेरवावुदयस्थेनयनापवर्जितः १२ ॥ ॥ ॥

च्छ्रवणोपघातदाः श्रोत्रयोः कर्णयोःउपघातदाबाधिर्यकराः अत्राशुभग्रहणेनार्कचंद्रारसौराः माग्रुक्ताएवज्ञेयाः दरवैकृत्यकरा
श्चसप्तमेइति तएवार्कचंद्रारसौराः लग्नात्सप्तमेस्थानेस्थिताः सौम्यैरदृष्टारदानांदंतानांवैकृत्यकराःस्युः ११ अथान्यानप्यनिष्टयोगा
न्वैतालीयेनाह उदयतीति उडुपेचंद्रेउदयति लग्नगतेतस्मिंश्चासुरास्यगेराहुग्रस्ते तस्माच्चलग्नादशुभयोःसौरभौमयोःत्रिकोणयोः
नवमपंचमस्थयोःजातः सपिशाचोभवति पिशाचाधिष्ठितोभवतीत्यर्थः एवंरवावादित्येमंडलेसोपप्लवेअसुरास्यगेअर्केराहुग्रस्तेतस्मिंश्चो-
दयस्थेलग्नेवालग्नादशुभयोःसौरभौमयोः त्रिकोणगतयोः जातोनयनापवर्जितोभवति अंधइत्यर्थः १२ अथान्यानप्यनिष्टयोगान्शार्दूल-
विक्रीडितेनाह संस्पृष्टइति यस्यजन्मनिमंदगः सौरोद्यूनेसप्तमेपृतः स्थितोभवति विलग्नेचगुरुःबृहस्पतिः सपवनेनवायुनासंस्पृष्टोभव १०३

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नि वातरोगी भवतीत्यर्थः अवनिः भूः तस्याः जातोवनिजः तस्मिन्नस्तभवने सप्तमेस्थानेस्थितेविलग्नाश्रिते प्राग्लग्नगेचजीवेगुरौजा
तः सोन्मादोभवतिविचित्तइति तद्वदिति सूर्यस्तनः सौरः तस्मिन्नुदयेलग्नेस्थितेअवनिसुतेभौमेधर्मात्मजद्यूनगे नवमपंचमसप्तमस्था
नानामन्यतमस्थानस्थेजातस्तद्वत्सोन्मादएवभवति केचित्तद्वदाहुः यमोदयइतिपठंति अथवाक्षीणेशीतगौचंद्रेसहस्त्ररश्मितनये
नशनैश्चरेणसंयुक्ते व्ययंद्वादशस्थानंयातेप्राप्तेवाग्रहणात्सोन्मादएवभवति १३ अथान्यानप्यनिष्टयोगान्वसंततिलकेनाह राश्यंश
पेति यस्मिन्नवांशकेचंद्रोवर्तते सराश्यंशकः तस्यपः पतिः राश्यंशपः उष्णाकरः सूर्यः शीतकरश्चंद्रः अमरेज्योजीवः एतैः राश्यंशप
पोष्णकरशीतकरामरेज्यैः आत्मीयादुच्चात्सप्तमराश्यधिपोनीचाधिपस्तदीयेनीचाधिपतिनवांशकेव्यवस्थितैः अरिभागगैः शत्रुनवां
शगतैर्वाजातादासाभवंति एभ्योऽल्पमध्यबहुभिरिति एभ्योग्रहेभ्यः एकोल्पः द्वौमध्यमौ यत्रचत्वारोवाबहवः एभ्यः प्रसूताः क्रमशो

संस्पृष्टः पवनेनमंदगयुतेद्यूनेविलग्नेगुरौ सोन्मादोवनिजेस्थितेऽस्तभवनेजीवेविलग्नाश्रिते तद्वत्सूर्यसु
तोदयेऽवनिसुतेधर्मात्मजद्यूनगेजातेवासहस्त्ररश्मितनयेक्षीणेव्ययेशीतगौ १३ राश्यंशपोष्णकरशीतक
रामरेज्यैर्नीचाधिपांशकगतैररिभागगैर्वा एभ्योल्पमध्यबहुभिः क्रमशः प्रसूता ज्ञेयाः स्युरभ्युपगमक्रयग
र्भदासाः १४ विकृतदशनः पापैर्दृष्टेवृषाजहयोदये खलतिरशुभक्षेत्रेलग्नेहयेवृषभेपिवा ॥ १ ॥ ७. ७.

दासाभवंति यस्यैकोनीचाधिपांशकेशत्रुनवांशकेवागततोभवति सोभ्युपगमेनात्मनाजीवितार्थीदासत्वमुपपद्यते यस्यद्वौसोन्येनक्री
तोविक्रीतः येनक्रीतस्तस्यदासोभवति यस्यत्रयश्चत्वारोवासगर्भदासोदासस्यपुत्रोदास्यांवापुत्रोलोकेगृहदासइतिप्रसिद्धः १४ अथान्ये-
षामनिष्टयोगानांज्ञानार्थंहरिण्याह विकृतेति वृषः प्रसिद्धः अजोमेषः हयोधन्वीएषामुदयेऽन्यतमेलग्नेपापैर्दृष्टेऽवलोकितेविकृतदश
नोविरूपदंतोभवति अशुभक्षेत्राणि पापग्रहराशयः मेषसिंहवृश्चिकमकरकुंभाः एषामन्यतमेलग्नेहयेधन्विनिवावृषभेपिवालग्नेपाप
दृष्टेजातः खलइत खल्वाटोभवति खावादित्येनवमस्कंतगेलग्नान्नवमपंचमयोरन्यतमस्थानस्थेपापग्रहदृष्टेजातः अदढेक्षणोभवत्य-
सारनयनः एवंदिनकरसुतेसौरेलग्नान्नवमपंचमस्थेपापैः दृष्टेनैकव्याधिः बहुरोगोभवति एवंमेवकुजेभौमेलग्नान्नवमपंचमस्थेपाप

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दृष्टेपुमान्पुरुषोजातोविकलोंगहीनोभवति १५ अथान्यानप्यानिष्टयोगान्सुषितामयाह व्ययस्ततेति असौम्यैः पापैः व्ययस्तनधनधर्मगैः द्वा-
दशपंचमद्वितीयनवमस्थानानांयथासंभवमन्यतमस्थानस्थैः जातस्यनिबंधनंभवति सबध्यतइत्यत : तच्चनिबंधनंभवनसमानंराशिसदृशंस
माणीयेनप्रकारेणसराशिः बध्यतेतेनप्रकारेणेत्यर्थः तद्यथा मेषवृषधनुर्धराणामन्यतमेलग्नेतस्यरज्वादिनाबंधनंभवति मिथुनकन्यातुलाकुं
भानामन्यतमेलग्नेनिगडैः बध्यते कर्कटमकरमीनानामन्यतमेलग्ने बंधनंविनादुर्गेस्थितोरक्ष्यते वृश्चिकलग्ने भूगृहे बध्यते भुजगनिगडपा
शभृगिदिति यस्मिन्द्रेष्काणेपुरुषोजातः सचेद्भुजगपाशभृद्भवति सर्पद्रेष्काणोनिगडपाशभृद्वाद्रेष्काणः सचप्रथमपंचमनवमानामित्यनपागण
नयायस्सराशेःसंबंधीभवति सचेद्राशिः बलवताव्यवस्थितः असौम्येनपापग्रहेणान्यतमेनदृश्यतेतथाजातस्यतद्भवनसमानंनिबंधनंतद्वतेनैव
प्रकारेणविकल्प्यंभुजगद्रेष्काणः कर्कटाद्यः वृश्चिकाद्यः वृश्चिकद्वितीयः मीनांत्यश्चनिगडस्यद्रेष्काणेमकराद्यः भुजगनिगडपाशभृदितिकेचि



नवमस्ततगेपापैर्दृष्टेरवावढेक्षणादिनकरस्तनेऽनेकव्याधिःकुजेविकलःपुमान् १५ व्ययस्तनधनधर्मगैरसौम्यै
र्भवनसमाननिबंधनंविकल्प्यम् भुजगनिगडपाशभृद्दृक्काणेर्बलवद्सौम्यनिरीक्षितैश्चतद्वत् १६ परुषवचनो॰
पस्मारार्तःक्षयीचनिशापतौसरवितनयेवक्रालोकंगतेपरिवेषगे रवियमकुजेःसौम्यादृष्टेर्नभस्थलमाश्रितैर्भृतक
मनुजः पूर्वोद्दिष्टेवराधममध्यमाः १७ ॥ इतिबृहज्जातकविवृत्तावनिष्टाऽध्यायः समाप्तः २३ ॥ ७ ॥ ७

ख्यातं तत्रपाशभृदनेन द्रेष्काणोनपठितः तस्माद्भुजगनिगडपाशभृन्निगडपाशभृदितिव्याख्यायं भुजगपाशभृन्निगडसाशभृद्भुजंगा
दिभागेर्बलवद्सौम्यनिरीक्षितैश्चतद्वत् इतिस्पष्टोभवेदित्यर्थः अस्मिन्श्लोकेपठितइति १६ अथान्यानप्यनिष्टयोगानहरिण्याह परुषवच-
नइति निशापतौचंद्रेसरवितनयेसौरसहिते वक्रालोकगते भौमेनदृष्टेपरिवेषगेतत्कालंपरिवेषयुक्तेजातः पुरुषः परुषवचनः सदाप्रियाभिधा
यी अपस्मारार्तः क्षयीचभवति अत्रचंद्रमसस्त्रयः प्रकाराव्याख्याताः त्रयश्चदोषाः यस्यैकप्रकारश्चंद्रस्यभवति तस्यैकोदोषोभवति
यस्यप्रकारद्वयं तेनचंद्रेसौरेणयुक्तेपरुषवचनः सदैवाप्रियाभिधायीभवति सरवितनयेभौमदृष्टेअपस्मारार्तोऽपस्मारः मृत्कः सरवितनये
भौमदृष्टेतत्कालंपरिवेषगेक्षयीभवति रवियमकुजेरिति रविरादित्यः यमःसौरः कुजोंगारकः एतैः नभस्थलमाश्रितैः दशमस्थानस्थैः सौ १०४

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

न्यादृष्टैः शुभग्रहाणांमध्यान्न केनचिद्दृष्टैरवलोकितैः जातोमनुजोमनुष्योभृतकोभवति तैःपूर्वोद्दिष्टैर्ग्रहैः रवियमकुजैः वराधममध्यमो भृतकोभवति तेषांग्रहाणामेवंविधैनैकेनभृतकोपिवरः श्रेष्ठोभवति अजुगुप्सितांभृतिंकरोति द्वाभ्यांमध्यमोभवति मध्यमांभृतिंकरोति त्रिभिरधमोजुगुप्सितांभृतिंकरोति १७ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृत्तौजनिष्टाध्यायस्त्रयोविंशतिःसमाप्तः२३

अथातःस्त्रीजातकाध्यायोव्याख्यायते तत्रादावेववपुरुषजन्मोक्तफलातिदेशंतदधिकंवसंततिलकेनाह यद्यत्फलमिति नरभवेपुंजन्मनियद्यत्फलमंगनानांस्त्रीणामक्षममसंभाव्यंतत्पतिषुतद्भर्तृषुवदेद्ब्रूयात् पुंजन्मोक्तंफलंयद्वृत्तातान्मद्रगित्यादि तत्रयत्स्त्रीणांक्षमंयोग्यम् ततासामेववक्तव्यं यच्चाक्षमंनसंभवति राज्यादितत्पतिषुतज्जातककालेदृष्ट्वावक्तव्यम् यच्चसंभवति कनफादियोगानांफलतदखिलंसकलमुभयोरेववक्तव्यम् तानिचत्रिविधानिफलानिकानिचित्स्त्रीणांवक्तव्यानि कानिचित्पतिषुकानिचिद्द्वयोरपि वृत्तातान्मद्रगित्साकारमदर्शनानिस्त्रीणामेववक्तव्यानि राजयोगादिफलानितत्पतिषुतंस्त्रीनांकनफादियोगफलानिसुखदुःखप्रदर्शकानिउभयोरपि अथवास्या

अथस्त्रीजातकमारभ्यः यद्यत्फलंनरभवेक्षममंगनानांतत्तद्वदेत्पतिषुवासकलंविधेयम् तासांतुभर्तृमरणंनिधनेवपुरुक्तलग्नेंदुगंसुभगतास्तमयेपतिश्च १ युग्मेषुलग्नशशिनोःप्रकृतिस्थितास्त्रीसच्छीलभूषणयुताशुभदृष्टयोश्च ओजस्थयोश्चमनुजाकृतिशीलयुक्तापापाचपापयुतवीक्षितयोर्गुणोना २ फलंसमग्रंस्त्रीजातकफलंतत्पतिषु विधेयंवक्तव्यं तासामित्यादि तासांस्त्रीणांनिधनेऽष्टमेस्थानेभर्तृमरणंयथावक्तव्यंतथोपरिष्टाद्वक्ष्यति वपुरुक्तशरीरंलग्नेंदुगंलग्नचंद्रयोर्गतं तच्चापितासांयथावक्तव्यं तथावक्ष्यति तासांसुभगतांसौभाग्यंयादृग्भाविपतिर्वातादृगस्तमयेसप्तमस्थानाद्वक्तव्यं तदपिवक्ष्यति यदुक्तं वपुरुक्तलग्नेंदुगंतत् १ पतिदर्शनंवसंततिलकेनाह युग्मेत्यादि लग्नशशिनोरुदयचंद्रयोरपि युग्मेषुसमराशिषुस्थितयोः स्त्रीयोषित्प्रकृतिस्थितास्त्रीस्वभावाभवति प्रकृतौस्वभावेतिष्ठति तयोरेवलग्नेंद्वोः शुभदृष्टयोःसौम्यग्रहावलोकितयोः सच्छीलभूषणयुताभवति सच्छीलशोभनचारित्रंतदेवभूषणमलंकरणंतेनयुता अथवाशोभनेनशीलेनभूषणैश्चयुता ओजस्थयोरिति तयोरेवलग्नेंद्वोरोजस्थयोर्विषमराशिगतयोः मनुजाकृतिःस्थूलसुस्फापुरुषाकारापुरुषशीलाचभवति तयोःलग्नेंद्वोःपापयुतवीक्षितयोःपापसंयुतयोःअवलोकितयोर्वापापा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पापशीलागुणोनासर्वगुणरहिताचभवति अर्थादेवैकस्मिन्समराशिगेअन्यस्मिन्विषमराशिगेपुंस्त्रियोर्मध्यस्वरूपाकाराभवति एवमे कस्मिन्शुभग्रहयुतेअन्यस्मिन्पापयुतेसच्छीलाभवति असच्छीलानमिश्रेत्यर्थः एवमेकस्मिन्शुभग्रहदृष्टेअन्यस्मिन्पापदृष्टेपि एवमु भयोरपिसौम्यासौम्यकृतदृष्टयोश्च अनयादिशाशेषकल्पनाकार्या २ अथभौमर्क्षेलग्नगेचंद्रगेवाभौमादित्रिंशांशकजातायाः स्वरूपमिंद्रव ज्याह कन्यैवेति भूम्यात्मजर्क्षेभौमक्षेत्रेमेषवृश्चिकयोरन्यतमेलग्नगतेचंद्रगतेवा तत्रच वक्रार्किजीवेंदुजभार्गवाणांकुजयमजीवज्ञसितानामं शकेषुत्रिंशद्भागेषुक्रमेणफलनिर्देशोवक्तव्यः तद्यथा भौमलग्नेभौमत्रिंशांशकेलग्नगतेचंद्रगतेवाजाताकन्यैवदुष्टाभवत्यनूढापि सापुरु षसंप्रयोगेचव्रजतिगच्छतीत्यर्थः सौरत्रिंशांशकजाताकन्यैवदास्यंदासभावंव्रजतिजनयति इहास्मिन्भौमक्षेत्रेजीवत्रिंशांशकेसाध्वीसच्छी लाभवति बुधत्रिंशांशकेजातासामायायुक्ताभवति शुक्रत्रिंशांशकेजाताकुचरित्रयुक्ताभवति दुर्वृत्ताइति एवंत्रिंशांशकफलंसर्वदागुणनयापरिक्ष्य

कन्यैवदुष्टाव्रजतीहदास्यंसाध्वीसमायाकुचरित्रयुक्ता भूम्यात्मजर्क्षेक्रमशोंशकेषुवक्रार्किजीवेंदुजभार्ग वाणाम् ३ दुष्टापुनर्भूःसगुणाकलाज्ञाख्यातागुणैश्चासुरपूजितर्क्षे स्यात्कापटीक्लीबसमासतीचबौधेगुणा पयाप्रविकीर्णकामा ४ स्वच्छंदापतिघातिनीबहुगुणाशिल्पिन्यसाध्वींदुभेन्राचाराकुलटार्कभेनृपवधूःपुंचेष्टि तागम्यगा ॥१॥ तद्यम् ३ अथबुधशुक्रक्षेत्रयोरन्यतमेलग्नगेचंद्रगेवाभौमादित्रिंशांशकजातायाः स्वरूपमिंद्रवज्रयाह दुष्टेति अंशकेषुवक्रार्किजीवेंदुजभार्गवाणामितिसर्वत्रानुवर्त्तते असुरपूजितः शुक्रस्तस्यर्क्षेवृषतुलयोरन्यतमेलग्नगेचंद्रगेवा भौमत्रिंशांशकेजातादुष्टा दुष्टशीलाभवति शनित्रिंशांशकेजातापुनर्भूः पाणिग्रहणादनंतरंअन्यस्यभार्याभवति जीवत्रिंशांशकेजातासगुणागुणवतीभवति बुधत्रिंशां शकेजाताकलाज्ञाभवति गीतवाद्यनृत्यचित्रादिषुकुशला शुक्रत्रिंशांशकेजातागुणैः शीलादिभिः ख्याताभवति स्यात्कापटीत्यादिबौधे मिथु नकन्ययोरन्यतमेलग्नगेचंद्रगेवाभौमत्रिंशांशकेजाताकापटीकपटासक्ताभवति सौरत्रिंशांशकेजाताक्लीबसमानपुंसकतुल्याभवति गुरुः बृहस्पतित्रिंशांशकजातासाध्वीभवति बुधत्रिंशांशकजातागुणाढ्यागुणबहुलाभवति शुक्रत्रिंशांशकजाताप्रविकीर्णकामाविक्षिप्तमन्मथा सर्वपुरुषगामिनीभवतीति ४ अथचंद्रार्कजीवसौरक्षेत्राणामन्यतमेलग्नगेचंद्रगेवाभौमत्रिंशांशकजातायाः स्वरूपंशार्दूलविक्रीडितेनाह १०५

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्वच्छंदेति इंदुभे कर्कटे लग्ने तद्गते वा चंद्रे भौमत्रिंशांशकजाता स्वच्छंदा स्वैरिणी यथेष्टव्यवहारिणी भवति सौरत्रिंशांशकजाता पतिघातिनी
भवति जीवत्रिंशांशकजाता बहुगुणा भवति बुधत्रिंशांशकजाता शिल्पिनी शिल्पकर्मनिरता भवति शुक्रत्रिंशांशकजाता असाध्वी दुःशीला भ
वति निराचारेति अर्कभे सिंहे लग्ने तद्गते वा चंद्रे भौमत्रिंशांशके जाता नराचारा पुरुषाचारा भवति नृविचाराये स्याः केचिद्वाचाटा इति पठंति
बहुभाषिणी सौरत्रिंशांशके जाता कुलटा असाध्वी भवति जीवत्रिंशांशके जाता नृपवधू राजभार्या भवति बुधत्रिंशांशके जाता पुंचेष्टिता पुरु
षस्वभावा भवति शुक्रत्रिंशांशके जाता अगम्यगा गम्यपुरुषगामिनी भवति जीवक्षेत्रे धन्विमीनयोरन्यतमे लग्नगते तद्गते वा चंद्रे भौमत्रिंशांश
कजाता नैकगुणा बहुगुणा भवति सौरत्रिंशांशकजाता अल्परती शीघ्रवेगा भवति वृहस्पतित्रिंशांशकजाता अतिगुणा बहुगुणवती भवति
बुधत्रिंशांशके जाता विज्ञानयुक्ता आश्चर्ययुक्ता भवति शुक्रत्रिंशांशके जाता असती असाध्वी भवति दासीति आर्किभे सौरक्षेत्रे मकरकुं
भयोरन्यतमे लग्नगे चंद्रगे वा भौमत्रिंशांशकजाता दासी भवति सौरत्रिंशांशकजाता नीचरता नीचपुरुषसक्ता भवति जीवत्रिंशांशकजा-

जैवे नैकगुणाल्परत्यतिगुणा विज्ञानयुक्ता सती दासी नीचरतार्किभे पतिरता दुष्टाप्रजा स्वांशकैः ५ शशिलग्न-
समायुक्तैः फलं त्रिंशांशकैरिदम् बलाबलविकल्पेन तयोरुक्तं विचिंतयेत् ६ दृक्संस्थावसितसितौ परस्परांशेशौक्रे
वा यदि घटराशिसंभवोंशः ॥ ७ ॥

ता पतिरता भर्तृभक्ता भवति बुधत्रिंशांशके जाता दुष्टा भवति शुक्रत्रिंशांशके जाता ऽप्रजा भवति
वंध्या ५ एतदंशकैरिति तदर्थमनुष्टुभाह शशीति राशिं राशिमधिकृत्य यदेतत्त्रिंशांशके उक्तं फलं तच्छशीलग्नसमायुक्तैश्चंद्रलग्न
युक्तैस्त्रिंशांशकैः यस्मिन्राशौ यद्ग्रहः त्रिंशांशके चंद्रमा भवति तद्भूतफलं वाच्यम् यो वा लग्ने भवति तस्य यस्त्रिंशांशः तद्वशाद्वा कथमु
च्यते बलाबलविकल्पेन त्वादि चंद्रलग्नयोः यो बलवान्स यत्र स शौ यत्र त्रिंशांशके भवति व्यवस्थितः तस्य यदुक्तं फलं तदेवं फलं विचिंतयेत्
एतदुक्तं भवति अन्यस्मिन्राशावन्यस्मिन्त्रिंशांशके चंद्रमा भवति अन्यस्मिन्राशौ अन्यस्मिन्त्रिंशांशके लग्नं तदा तयोर्यो बलवान् स यस्मि
न्त्रिंशांशके भवति तस्यैव फलं वदेत् यो बलरहितस्तस्य फलं न भवतीति ६ अथ यस्मिन्योगे जाताः स्त्रीभिः पुरुषाकारसंस्थाभिः सह म
दनं शमयति तद्योगद्वयज्ञानं प्रहर्षिण्याह दृक्संस्थाविति असितः सौरः सितः शुक्रः एतावसितसितौ परस्परांशे अन्योन्यांशगतौ

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सौरः शुक्रांशगतः शुक्रः सौरांशगतस्तौ च परस्परं दृष्टवंतस्थौ अन्योन्यं पश्यतः एको योगः अथवा शौक्रे राशौ वृषतुलयोरन्यतमे लग्नगते तत्कालं यदि घटराशिसंभवांशः कुंभनवांशकोदयो भवति तदा द्वितीयो योगः अस्मिन्योगद्वये जाता स्त्री अन्याभिरपराभिः स्त्रीभिः योषिद्भिः नराकृतिस्थिताभिः पुरुषसंस्थानाभिः पुरुषाकारकृताभिः मदनविषानलं प्रदीप्तं कामविषाग्निं प्रज्वालितं शांतिं नयति शमयति एतदुक्तं भवति अन्या स्त्री स्वजघनेन पुरुषरूपेण चर्ममयं लिंगं बध्वा पुंवत् तस्या रतिमभिजनयति यतोतिकामार्त्तत्वात् पुरुषयोगं गंतुं न शक्नोति

७ अथ लग्नमये पतिश्चेति यदुक्तं तद्विज्ञानं शार्दूलविक्रीडितेनाह शून्येति लग्नाच्चंद्राद्वाद्यः सप्तमो राशिः स यदि शून्यः सर्वग्रहविमुक्तो भवति अबले बलहीनश्च तस्मिन्नस्तभवने शून्ये अबले च बलरहिते तथा सौम्यैः शुभग्रहैरनिरीक्षिते न केनचिच्छुभग्रहेण दृश्यमाने न केनचित्सौम्यग्रहेण युते जातायाः भर्त्ता कापुरुषः कुत्सितपुरुषो भवति अथवा लग्नाच्चंद्राद्वाद्यः सप्तमो राशिस्तत्र बुधमंदयोर्ज्ञसौरयोरन्यत

स्त्रीभिः स्त्रीमदनविषानलं प्रदीप्तं संशांतिं नयति नराकृतिस्थिताभिः ७ शून्ये कापुरुषो बलेस्तभवने सौम्यग्रहावीक्षिते क्लीबोस्ते बुधमंदयोश्चरगृहे नित्यं प्रवासान्वितः उत्सृष्टा रविणा कुजेन विधवा बाल्येऽस्तराशिस्थिते कन्यैवाशुभवीक्षितेर्कतनये द्यूने जरां गच्छति ८

मे स्थिते जातायाः भर्त्ता क्लीबः पुरुषाकारहीनो भवति यस्याश्चरगृहं चरराशिः सप्तमे भवति तस्याः नित्यं सर्वकालं भर्त्ता प्रवासान्वितः प्रवासशीलो भवति अर्थादेवं स्थिरे सप्तमे नित्यं गृहे स्थितो भवति द्विःस्वभावे किंचित्प्रवासे किंचिद्गृहे स्थितो भवति उत्सृष्टा रविणा कुजेन विधवेति तरणौ रवावस्तस्थिते सप्तमगे जाता पतिनोत्सृष्टा भर्त्रा त्यक्ता भवति एवं कुजे सप्तमगते तस्मिंश्चाशुभैः पापैः वीक्षिते बाल्ये विधवा रंडा विगतभर्तृका भवति अर्कतनये सौरे द्यूने सप्तमगे तस्मिंश्चाशुभैः पापैर्वीक्षिते दृष्टे कन्यैव जरामुपगच्छति कुमार्येव वृद्धा भवति छंदत्वं प्राप्नोतीति विवाहं न करोतीत्यर्थः अत्र चंद्रलग्नयोर्बलवशादेवं तद्वक्तव्यम् ८

ननु चंद्रात्सप्तमस्थानादप्येतत्फलं कथमवगम्यते उच्यते सप्तमे स्थाने चंद्रमसः फलदर्शनाभावात् पुनरपि जाता कीदृशी भविष्यतीति तद्विज्ञानं शार्दूलविक्रीडितेनाह आग्नेयैरिति एकैकस्मिन्पापग्रहे सप्तमे फलमुक्तं यदि बहवः आग्नेयाः क्रूराः सप्तमस्था भवंति तदाग्निग्रहोक्तं फलं त्यक्ता तैराग्नेयैरस्तराशिसहितैः विधवैव भवति मिश्रैः क्रूरैः सौम्यैश्च सप्तमस्थैः पुनर्भूर्भवेत् स्वपाणिग्राहिं त्यक्त्वा अन्य १०६

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्य भार्या भवतीत्यर्थः द्विसंस्कृता तथा च ग्रंथांतरे पुनर्भूलक्षणमुक्तं स्वैरिणी स्वपतिं हित्वा सवर्णं कामतः श्रयेत् अक्षतं च प्रजाद्वारं पुनर्भूः संस्कृता पुनः क्रूर इति क्रूर आदिर्येषां गारकशनैश्चराणामन्यतमे अस्तगे लग्नात्सप्तमस्थे तस्मिंश्च हीनबले सर्वबलरहिते तथाभूते सौम्येक्षिते शुभग्रहाणां बुधगुरुसितानामन्यतमेन दृष्टे जाता स्वपतिना आत्मीयेनैव भर्त्रा प्रोज्झिता त्यक्ता भवति अन्योन्यांशगयोरि-
ति सितः शुक्रः अवनिजोंगारकः एतयोः सितावनिजयोः अन्योन्यांशगयोः परस्परनवांशकस्थितयोः यत्र तत्र राशौ सिते नवांशके भौ
मो भौमनवांशके शुक्रः तदा सांगना स्त्री अन्यप्रसक्ता परपुरुषरता भवति अथवा द्यूने लग्नात्सप्तमे स्थाने ताववेव यद्यंगारकशुक्रौ शीतर
श्मिसहितौ चंद्रसहितौ भवतस्तदा अन्यपुरुषासक्ता भवति किंतु भर्तुरनुज्ञया पत्युराज्ञयेति न तु स्वातंत्र्येणेति ९ अथ येन योगेन जाता
मात्रा सह बंधकी भवति येन च रुगार्दितयोनिर्येन च सुभगा तद्योगत्रयं मालिन्याह सौरारर्क्षे इति सौरः शनैश्चरः तदृक्षे मकरकुंभौ आरो-

आग्नेयौ वृश्चिकमेषौ तत्र राशिसहितौ भिश्रैः पुनर्भूर्भवेत्क्रूरे हीनबलेऽस्तगे स्वपतिना सौम्येक्षिते प्रोज्झिता अन्योन्यांशगयोः
सितावनिजयोरन्यप्रसक्तांगना द्यूने वा यदि शीतरश्मिसहितौ भर्तुस्तदानुज्ञया ९ सौरारर्क्षे लग्नगे सेंदुशुक्रे मात्रा-
सार्द्धं बंधकी पापदृष्टे कौजेऽस्तांशे सौरिणा व्याधियोनिश्चारुश्रोणी वल्लभा सद्ग्रहांशे १० श्रीसांबसदाशिवप्रसन्न ४

भौमर्क्षे मेषवृश्चिकौ एषामन्यतमे लग्नगते तस्मिंश्च सेंदुशुक्रे इंदुना चंद्रेण शुक्रेण च संयुक्ते तथाभूते पापदृष्टे पापग्रहावलोकिते जाता
बंधकी परपुरुषगामिनी भवति न केवलं यावन्मात्रा सार्द्धं जनन्या सह बंधकी जाता तन्माता अपि बंधकी परपुरुषगामिनी भवति अस्तांशे
लग्नात्सप्तमे स्थाने यो राशिस्तत्कालं कौजो भौमनवांशको भवति तस्मिंश्च कौजेऽस्तांशे सौरिणा रविजेन दृष्टे जाता व्याधियोनिः सरो
गभगा भवति यदुक्तं सुभगता तमयेतदर्थमाह चारुश्रोणी वल्लभा सद्ग्रहांश इति यदा लग्नात्सप्तमे स्थाने सद्ग्रहस्य शुभग्रहस्य नवांशकोद
यो भवति तदा चारुश्रोणी शोभनभगा वल्लभा पत्युः प्रिया च भवति १० अथ यस्याः सप्तमं स्थानं शून्यं भवति तस्याः शनैश्चरांगारकशुक्र
क्षेत्रे तदंशे वा सप्तमे यादृशी भवति तन्निर्दिशानं मालिन्याह द्यूने इति यस्या जन्मनि लग्नात्सप्तमे स्थाने सूर्यजस्य सौरस्यर्क्षं मकरकुंभयोरन्य

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तमसंबंधीनवांशकोवासप्तमेभवति तस्याः वृद्धः मूर्खश्च भर्त्ताभवति यस्याः आवनेयस्यांगारकस्यर्क्षेमेषवृश्चिकयोरन्यतमस्तदंशको वासप्तमेभवति तस्याः स्त्रीलोलः स्त्रीषुस्पृहयालुः क्रोधनः क्रोधशीलश्च भर्त्ताभवति एवंशौक्रेराशौवृषतुलयोरन्यतमेनदंशकेवासप्तम स्थेकांतोतीवदर्शनीयोऽतीवसौभाग्ययुक्तोवल्लभश्च भर्त्ताभवति बौधेमिथुनकन्ययोरन्यतमेतदंशकेवासप्तमस्थेजातायाः भर्त्तावि द्वान्पंडितोनैपुणज्ञश्चसर्वत्रसूक्ष्मदृष्टिर्भवति ११ अथचंद्रराशौसप्तमेतन्नवांशकेजीवराशौवादित्यराशौचतन्नवांशकेवातद्धृत्वा नपुष्पितायमाह मदनेति यस्याःजातायाः सप्तमेस्थानेचांद्रोराशिः कर्कटस्तदंशकोवाभवति तस्याः भर्त्ता मदनवशगतः कामातुरोमृ दुश्चाकठिनश्चभवति त्रिदशगुरोःजीवस्यराशौधन्विमीनयोरन्यतमेसप्तमस्थेतदंशकेवाजातायाः भर्त्तागुणवान् शौर्यादिभिर्गुणैर्युक्तो जितेंद्रियोदांतश्चभवति सौर्येसाशौसिंहेतदंशकेवासप्तमस्थेजातायाः भर्त्ताऽतिमृदुरतीवाकठिनः अतिकर्मकृदतीव व्यापारकृद्भवति

वृद्धोमूर्खः सूर्यजर्क्षेंशकेवास्त्रीलोलःस्यात्क्रोधनश्चावनेये शौक्रेकांतोतीवसौभाग्ययुक्तोविद्वान्भर्त्तानैपुणज्ञश्चबौ धे ११ मदनवशगतोमृदुश्चचांद्रेत्रिदशगुरौगुणवान्जितेंद्रियश्च अतिमृदुरतिकर्मकृच्चसौर्येभवतिगृहेस्तमयास्थितेंशकेवा १२ ईर्ष्यान्विता सुखपराशशिशुक्रलग्नेज्ञेंद्वोःकलासुनिपुणासुखितागुणाढ्या शुक्रज्ञयोस्तुरुचिरासुभगा- कलाज्ञात्रिष्वप्यनेकवसुसौख्यगुणाशुभेषु १३

व्यापारकरणशीलः केचिदतिकर्मकृदतिकामातुरोकामासक्तोभवति एवमस्त मयास्थितेसप्तमस्थानस्थेगृहेराशावंशकेवा फलमभिहितंयत्रान्यसंबंधीराशिः सप्तमेभवति अन्यसंबंधीनवांशश्चतत्रराश्यंशपयो: योबलवांस्तदीयंफलंवाच्यमिति १२ अथचंद्रशुक्रबुधानांद्वौत्रयोवालग्नगतायस्याभवंतितस्याःस्वरूपंवसंततिलकेनाह ईर्ष्येति यस्याः जन्मलग्नेशशिशुक्रौचंद्रसितौसमेतौभवतः साईर्ष्यान्विनामात्सर्ययुक्ता सुखपरासुखासक्ताचभवति ज्ञेंद्वोः बुधचंद्रयोः लग्नगतयोः कलासुनिपुणाज्ञासुखितासंजातसुखाभवति गुणाढ्यागुणबहुलाचशुक्रज्ञयोः सितबुधयोर्लग्नगतयोरुचिरादर्शनीया सुकांतासुभगाभर्तृवल्लभाकलाज्ञाचभवतित्रिष्वपीती यस्यास्त्रयोपिचंद्रबुधशुक्रालग्नगताभवंतिसाऽनेकवसुसौख्यगुणाअनेकैर्वसुभिः धनैःसौख्यैर्नेकैर्बहुभिश्चगुणैर्युक्ताभवति अपिशब्दाल्लिषुशुभेषुबुधगुरुसितेषुलग्नगतेषुजाता अनेकवसुसौख्यगुणाभवति १३



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अत्रपूर्वंतासांभर्तृमरणमितियदुक्तंतद्विज्ञानंवसंततिलकेनाह क्रूरेष्टमइति यस्याःक्रूरग्रहोष्टमेस्थानेभवति तस्याविधवताभवति क
स्मिन्कालइतिह निधनेश्वरोयस्येति निधनेश्वरोष्टमस्थानाधिपतिर्यस्यग्रहस्यनवांशकेभवति तस्ययद्वयस्तस्मिन्वयसिविवाहात्पर
तस्तस्याः वैधव्यंवक्तव्यं एकंद्वौनवविंशतिरित्यादिग्रहवयः एवंकेचिद्वदंति वयंपुनः दशांतर्दशाकालंवयः शब्देनब्रूमः यत्रनिधने
श्वरस्त्वंद्रभौमयोरन्यतमेंशेभवति तत्रचंद्रभौमयोर्वयःप्रमाणंवर्षत्रितयं तत्रप्रायःकुमारीणांविवाहासंभवस्तस्मादष्टमस्थानाधिप
तिर्यस्यांशकेव्यवस्थितस्तस्यांतर्दशाधिपतिस्तस्याविवाहात्परंविधवताप्रदिष्टोक्ता सत्स्विति यस्याजन्मनिक्रूरग्रहोष्टमगोभवति सक्रूरः
शत्रुग्रहःकश्चिदर्थगोद्वितीयस्थानगतोभवति तस्याः भर्तुः पुरस्तात् स्वस्यैवमरणंभवति यस्याजन्मनिकन्यायामलिनिवृश्चिकेगाविवृ
षेहरौसिंहेवाइंदुःस्थितोभवति तस्याअल्पसुतत्वंस्वल्पपुत्रत्वंवक्तव्यं कन्यालिगोहरीणामन्यतमश्चंद्रराशिर्यस्यास्तस्याः अस्याः पु

क्रूरेष्टमेविधवतानिधनेश्वरोंशेयस्यस्थितोवयसितस्यसमेप्रदिष्टा सत्स्वर्थगेषुमरणंस्वयमेवतस्याःकन्यालिगो
हरिषुचाल्पसुतत्वमिंदौ १४ सौरेमध्यबलेबलेनरहितैःशीतांशुशुक्रेंदुजैःशेषैर्वीर्यसमन्वितैःपुरुषिणीयद्योज
राश्युद्गमः जीवारास्फुजिदिंदवेषुबलिषुप्राग्लग्नराशौसमेविख्याताप्रथितानेकशास्त्रनिपुणास्त्रीब्रह्मवादिन्यपि १५ न्य3

त्राभवंतीति १४ अथयस्मिन्योगेजातापुरुषिणीभवति यस्मिंश्चब्रह्मवादिनीभवति तद्योगद्वयंशार्दूलविक्रीडितेनाह सौरेइति सौरे
शनैश्चरेमध्यबलेनातिबलवति नचातिबलहीने तथाशीतांशुशुक्रेंदुजैः शशिसितबुधैः बलेनवीर्येणरहितैः विवर्जितैः शेषैरादित्यभौ
मजीवैर्वीर्यसमन्वितैः सबलैर्यत्रतत्रावस्थितैर्यद्योजराशिः विषमराशिरुद्गमः उद्गमेउदयेलग्नेभवति विषमराशिः लग्नेजाताभवती
त्यर्थः तदाजातामेषमिथुनसिंहतुलाधन्विकुंभानामन्यतमेसापुरुषिणीभवति बहुपुरुषेत्यर्थः जीवारास्फुजिदेंदवेष्विति जीवोवृह
स्पतिः आरोभौमः आस्फुजिच्छुक्रः ऐंदवोबुधः एतेषुयत्रतत्रावस्थितेषुबलिषुवीर्यवत्सुतथाप्राग्लग्नेयदिसमराशिर्भवति तदाजाता
स्त्रीप्रथिताविख्याताप्रसर्वत्रप्रथिताअनेकशास्त्रकुशला अनेकेषुबहुषुशास्त्रेषुकुशलातज्ज्ञाब्रह्मवादिन्यपिमोक्षशास्त्रेकुशलाभव
ति १५ अथयद्योगजाताप्रव्रज्यामाश्रयतितद्विज्ञानंमहर्षिण्याह पापेति पूर्वंसमस्तस्यग्रहस्यपृथक्पृथक्फलमुक्तम् तत्रलग्नात्स

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पेकूरग्रहेऽस्तेसमसस्थेयद्यन्यः कश्चिद्ग्रहोलग्नान्नवमगतोभवति तदासास्त्रीप्रागुक्तंफलंनप्राप्नोति नवमगतस्यग्रहस्यतुल्यांतत्कथितांप्रव्रज्यां सुवतिःस्त्रीअसंशयेननिःसंशयोनोपैतिप्राप्नोति एवंस्त्रीजातकंव्याख्यातं उद्वाहेइति अत्रयेयोगाव्याख्यातास्तेचेदुद्वाहेविवाहकालेभवंति तदा योगोक्तफलंवाच्यं तथातस्यावरणविधौकन्यामार्गणकालेप्रदानकालेकन्यादानकालेचचिंतायांप्रश्नकालेप्येवंसकलंसर्वविधेयंवक्तव्यम् स्त्रीजा तकेषुयेशुभाशुभयोगाउक्तास्तेऽत्रापिशुभाःशुभावक्तव्याः नसकलजातकोक्ताः तेचयथाप्रदर्शितकालेनैवज्ञेयाः येषांचवक्ष्यमाणविवाह पटलोक्तयोगैर्बाधोभविष्यति तेत्रनवक्तव्याःयुक्त्येनद्विवाहपटलसुक्तमिति १६ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौ-स्त्रीजातकाध्यायश्चतुर्विंशतिः २४ अथातोनैर्याणिकाध्यायोव्याख्यायते तत्रादावेवाष्टमेस्थानेग्रहदृष्टेवियुक्तेयुतेवायथाम्रियते तद्विज्ञानंशार्दूलविक्रीडितेनाह मृत्युरिति बलिभिर्ग्रहैर्मृत्युगृहेक्षणेनमृत्युर्भवति यस्यजन्मलग्नान्मृत्युगृहमष्टमंस्थानंमूर्त्यंयोग्रहोबलवान्-

पापेस्तेनवमगतग्रहस्यतुल्यंप्रव्रज्यांसुवतिरुपैत्यसंशयेन उद्वाहेवरणविधौप्रदानकालेचिंतायामपिसकलंविधेयमेतत् १६ इतिश्रीबृह॰ सत्लविरचितायांबृहज्जातकविवृतौस्त्रीजातकाध्यायश्चतुर्विंशतिः २४ अथनैर्याणिकाध्याय प्रारंभः मृत्युर्मृत्युगृहेक्षणेनबलिभिस्तद्धातुकोपोद्भवस्तत्संयुक्तभगात्रजोबहुभवोवीर्यान्वितैर्भूरिभिः अग्न्यंबा युधजोज्वरामयकृतस्तृट्क्षुत्कृतश्चाष्टमेसूर्याद्यैर्निधनेचरादिषुपरस्वाध्वदेशोद्भवेति १ श्रीगोपालकृष्णाभ्यान्नमः

पश्यंतितस्यग्रहस्ययोधातुरुक्तस्तद्धातुकोपोद्भवस्तेनधातुनाप्रकुपितेनसम्म्रियते तद्यथाऽर्कस्यपित्तंचंद्रस्यवातकफौ भौमस्यपित्तं बुधस्य त्रयोपिवातपित्तश्लेष्माणः बृहस्पतेः कफः शुक्रस्यवातकफौ सौरस्यवातइति तत्संयुक्तभगात्रजइति तदित्यनेनलग्नादष्टमस्थानस्यपराम-र्शः तेनाष्टमेनयुक्तंयदङ्गगात्रंतत्संयुक्तभगात्रं तज्जातस्तत्संभूतः लग्नादष्टमोराशिः यस्मिन्नंगेकालाख्यपुरुषस्यवर्ततेतस्मिन्नंगेदृष्टग्रहोक्तदो षकोपान्म्रियते भूरिभिर्बहुभिः वीर्यान्वितैः सबलैः बहुभवोमृत्युः यदाबहवोपिवीर्यान्वितास्तच्छून्यमष्टमस्थानंपश्यंतितदायावंतः पश्यंति-तावतांग्रहणामुक्तदोषप्रकोपेनतेचबहवोदोषायस्मिन्कालेपुरुषांगलग्नादष्टमराशिर्वर्ततेतस्मिन्नंगेप्रकुप्यनिधनंकुर्वंतीति अग्न्यंबुशस्त्रजइ ति सूर्यादिभिरष्टमेस्थानेस्थितैरग्न्यादिभिर्मृत्युर्भवति तद्यथा यस्यलग्नादष्टमेस्थानेऽर्कोभवति तस्याग्निहेतुकोमृत्युर्भवति एवंचंद्रेष्टमेबु १०८

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

हेतुकः भौमे आयुधहेतुकः बुधे ज्वरहेतुकः जीवे आमयकृतः अविज्ञातव्याधिहेतुकः शुक्रे क्षुत्तृड्हेतुकः सौरे क्षुत्हेतुक इति एतैर्ग्रहैर्बलिभि-
र्यथोक्त एव मृत्युः शुभेन कर्मणा भवति बलहीनैरशुभेन मध्यबलैर्मध्यमेनेति विज्ञातमरणप्रकारस्य मरणदेशज्ञानार्थमाह निधने चरादि-
ष्विति यस्य निधनेऽष्टमे स्थाने चरराशिर्भवति स परदेशे म्रियते यस्य स्थिरः स स्वदेशे यस्य द्विस्वभावः सोऽध्वप्रदेशे पथि म्रियत इति १ अथ-
शैलाग्राभिघातेषु येयोगैर्म्रियते तानू शार्दूलविक्रीडितेनाह शैलाग्राभिहतस्येति सूर्यकुजयोः रविभौमयोः युगपत्तुल्यकालं स्वबंधुस्थयो-
र्दशमयोश्चतुर्थयोर्वा जातस्य शैलाग्राभिहतस्य शिलाप्रहारेण हतस्य मृत्युर्भवति कूप इति मंदशशांकभूमितनयैः सौरेंदुभौमैः यथासंख्यं
बंधुखक्षकर्मास्थितैश्चतुर्थसप्तमदशमस्थैः तद्यथा सौरे चतुर्थगे चंद्रे सप्तमगे भौमे दशमगे जातः कूपे पतितो म्रियते कन्यायामिति द्विमो-
ष्णकरयोश्चंद्रार्कयोः कन्यायां स्थितयोश्च पापग्रहदृष्टयोर्जातः स्वजनेन म्रियते स्वजनेन व्यापाद्यते उभयोदयोर्द्विस्वभावराशावुदये लग्ने

शैलाग्राभिहतस्य सूर्यकुजयोर्मृत्युः स्वबंधुस्थयोः कूपे मंदशशांकभूमितनयैर्बंधुक्षकर्मस्थितैः कन्यायां स्वज-
नाद्धिमोष्णकरयोः पापग्रहैर्दृष्टयोः स्यातां यद्युभयोदये र्कशशिनौ तोये तदा मज्जितः २ मंदे कर्कटगे जलोदरकृतो
मृत्युर्मृगांके मृगे शस्त्राग्निप्रभवः शशिन्यशुभयोर्मध्ये कुजर्क्षे स्थिते कन्यायां रुधिरोत्थशोषजनितस्तद्वत्स्थिते
शीतगौ सौरर्क्षे यदि तद्वदेव हिमगौ रज्ज्वग्निपातैः कृतः ३ नगते तत्र त्वार्कशशिनौ रविचंद्रौ यदा स्यातां भवेतां तदा तोये जले
मज्जितो मग्नो म्रियते २ अथान्यानपि मृत्युयोगान् शार्दूलविक्रीडितेनाह मंद इति मंदे शनैश्चरे कर्कटगे कुलीरस्थे मृगांके चंद्रे मृगे मकर-
स्थिते जातस्य जलोदरकृतो जलोदरेण मृत्युर्भवति शस्त्राग्निप्रभव इति शशिनि चंद्रे कुजर्क्षे मेषवृश्चिकयोरन्यतमस्थे तत्र चाशुभ-
योर्द्वयोः पापयोर्मध्यस्थे जातस्य शस्त्राग्निप्रभवः शस्त्रेणाग्निना वा प्रभवति तत्कृतो मृत्युः कन्यायामिति शीतगौ चंद्रे कन्यायां तद्वत्
स्थिते पापद्वयमध्यगते जातस्य रुधिरोत्थशोषजनितो मृत्युर्मरणं भवति दुष्टेन रक्तेन शोषेण वा उत्थितो जनितः उत्पन्नः सौरर्क्ष इति हि-
मगौ चंद्रे सौरर्क्षे मकरकुंभयोरन्यतमस्थे तद्वत्तस्मिंश्च पापद्वयमध्यगते यदि जातस्तदा रज्ज्वाग्निपातैः रज्ज्वाग्निना पाताद्वा म्रियत इति
३ अथान्यानपि मृत्युयोगान् शार्दूलविक्रीडितेनाह बंधात्स्थीनवमस्थयोरिति अशुभयोर्द्वयोः पापयोर्धीनवमस्थयोः पंचमनव-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मस्थानस्थयोस्तयोश्च सौम्यग्रहैरदृष्टयोरनवलोकितयोर्जातः बंधाद्बंधनेन म्रियते द्रेष्काणैरिति येन लग्नेन पुमान्जातस्तस्मादष्टमेस्थाने यो राशिस्तत्कालं वर्तते तत्र यदि सपाशसर्पो द्रेष्काणो भवति सनिगडो वा तदा जातः बंधनेन म्रियते तत्र भुजगपाशभृद्द्रेष्काणः कर्कटाद्यः वृश्चिकद्वितीयः कन्यांतिमश्च कन्यायामिति मीनलग्नजातः कन्यायामस्तगे सप्तमस्थे चंद्रे तस्मिंश्च पापग्रहान्विते केनचित्पापेन सहिते सिते शुक्रे मेषगे सूर्ये रवौ लग्नगते जातस्य मरणं मंदिरे गृहे स्त्रीहेतुकं स्त्रीनिमित्तं विद्धि जानीहि ४ अथान्यानपि मृत्युयोगान्शार्दूलविक्रीडितेनाह शूलोद्भिन्नतनुरिति क्रूरखे चतुर्थस्थाने ऽवनिसुते भौमे स्थिते सूर्येपि वा इति रवौ चतुर्थस्थे खे दशमे स्थाने यदि यमः सौरो भवति तदा जातः शूलोद्भिन्नतनुर्म्रियते शूलेनोद्भिन्ना तनुर्यस्य शूलप्रोतस्य तस्य मरणं भवति सप्रक्षीणेति पापैः रविभौमसौरैः सप्रक्षीणहिमांशुभिरिति क्षीणचंद्रसंयुक्तैश्च युगपत्तुल्यकालं त्रिकोणाद्यगैः पंचमनवमलग्नस्थैः एतदुक्तं भवति सक्षीणचंद्राणां पापानामेतत्स्थानत्रयंसुत्काऽ

बंधाद्दीनवमस्थयोरशुभयोः सौम्यग्रहादृष्टयोर्द्रेष्काणैश्च ससर्पपाशनिगडैः छिद्रस्थितैर्बंधनः कन्यायामशुभा-
न्विते स्तमयगे चंद्रे सिते मेषगे सूर्ये लग्नगते च विद्धि मरणं स्त्रीहेतुकं मंदिरे ४ शूलोद्भिन्नतनुः क्रूरखेवनिसुते सूर्ये-
पि वा रवेर्यमे सप्रक्षीणहिमांशुभिश्च युगपत्पापैस्त्रिकोणाद्यगैः बंधुस्थे च रवौ वियत्यवनिजे क्षीणेंदुसंवीक्षिते का-
ष्ठेनाभिहतः प्रयाति मरणं सूर्यात्मजेनेक्षिते ५ रंध्रास्पदांगहिबुकैर्लगुडाहतांगः प्रक्षीणचंद्ररुधिरार्किदिनेशयुक्तैः॥

न्यत्रावस्थितिर्न भवति तदा चकाराच्छूलोद्भिन्नतनुर्म्रियते बंधुस्थे चेति रवौ सूर्ये बंधुस्थे लग्नाच्चतुर्थगे वियति दशमे ऽवनिसुते भौमे स्थिते तस्मिंश्च क्षीणेंदुना क्षीणचंद्रेण संवीक्षिते तदा जातश्चकाराच्छूलोद्भिन्नतनुर्म्रियते अस्मिन्नेव योगे चतुर्थगे रवौ दशमस्थे भौमे तस्मिंश्च सूर्यात्मजेन शनैश्चरेणेक्षिते दृष्टे जातः काष्ठेनाभिहतः काष्ठघातेन ताडितो मरणं प्रयाति प्राप्नोतीत्यर्थः ५ अथान्यानपि मृत्युयोगान्वसंततिलकेनाह रंध्रास्पदेति रंध्रमष्टमं स्थानं आस्पदं दशमं अंगं लग्नं हिबुकस्थानं चतुर्थं एतै रंध्रास्पदांगहिबुकैर्यथासंख्यं प्रक्षीणचंद्र-
रुधिरार्किदिनेशयुक्तैः एतदुक्तं भवति अतिक्षीणचंद्रोष्टमे रुधिरो भौमः दशमे आर्किः सौरो गे लग्ने दिनेशो रविश्चतुर्थे एवंविधे योगे जातो ल- १०९
गुडहतांगो लगुडताडितावयवो म्रियते केचित्पठंति लगुडाहतांत इति लगुडाहतो भवति नैरेवेति नैरेव ग्रहैः प्रक्षीणचंद्ररुधिरार्किदिनेशैः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यथासंख्यं कर्मनवमोदयपुत्रसंस्थैः दशमनवमलग्नपंचमस्थैः क्षीणचंद्रमादशमे भौमोनवमे सौरोलग्ने अर्कः पंचमे यदि भवंतितदाजा
तस्य धूमेनाग्निनाबंधनेनशरीरनिकुट्टनेनकाष्ठादिनाप्रहरणेनवा तस्यमृत्युर्भवति ६ अथान्यानपिमृत्युयोगान्संततिलकेनाह बंध
स्तकर्मसहितैरिति कुजोंगारकः सूर्योरविः मंदः सौरः एतैर्यथासंख्यंबंधस्त कर्मसहितैः चतुर्थसप्तमदशमस्थैः चतुर्थे भौमः सप्तमे सूर्यः
दशमे सौरः यस्यजन्मनिभवंतितस्याक्षधनखड्गादिनाशिखिनाग्निनाक्षितिपालकोपेननृपक्रोधेनवाएषामन्यतमेननिर्याणंमृत्युर्भवति सौरेंदु
भूमितनयैः शनिशशिभौमैः यथासंख्यंस्वरूखास्पदस्थैर्द्वितीयचतुर्थदशमस्थैर्द्वितीयेसौरः चतुर्थेचंद्रः दशमेभौमः यस्यजन्मनिभवंति
तस्यक्षतकृमिकृतः क्षतेच्छिद्रेकृमयः कीटाउत्पद्यंतेतत्कृतश्चशरीरपातोभवति क्षतकृमिभिः पतितैर्मृत्युर्भवति ७ अथान्यानपिमृत्युयो
गान्शार्दूलविक्रीडितेनाह खस्थइति अर्केरवौखस्थेदशमस्थानंगतेकुजेरसातलगते चतुर्थेजातस्ययानप्रपातान्वाहनासतितस्यवधोमृ

तैरेवकर्मनवमोदयपुत्रसंस्थैर्धूमाग्निबंधनशरीरनिकुट्टनांतः ६ बंधस्तकर्मसहितैःकुजसूर्यमंदैर्निर्याण
मायुधशिखिक्षितिपालकोपात् सौरेंदुभूमितनयैः स्वरूखास्पदस्थैर्ज्ञेयःक्षतकृमिकृतश्चशरीरघातः ७ ख
स्थेर्केवनिजेरसातलगतेयानप्रपाताद्वधोयंत्रोत्पीडनजःकुजेस्तमयगेसौरेंदुनाम्ब्भक्रमे विण्मध्येरुधिरार्किशीत
किरणेजूकाजसौरर्क्षगेयातैर्वागलितेंदुसूर्यरुधिरैर्व्योमास्तबंधाह्वयान् ८ त्युर्भवति यंत्रोत्पीडनजइति कुजेंगारके
स्तमयगेसप्तमस्थेसौरेंदुनाम्ब्भक्रमेसौरश्चेंदुश्चेनश्चतेसौरेंदुनाः शनिचंद्ररविभिरम्बक्रमेलग्नेस्थितैः जातस्ययंत्रोत्पीडनजोवधः
यंत्रपीडितोम्रियते केचित्क्षीणेंदुनाम्बुक्रमेइतिपठंति क्षीणेंदुः क्षीणचंद्रमाइनआदित्यः आर्किः सौरः एतैः लग्नेस्थितैः जातस्य
यंत्रोत्पीडनजोवधः विण्मध्यइति रुधिरोंगारकः आर्किः सौरः शीतकिरणश्चंद्रः एतैः यथासंख्यंजूकाजसौरर्क्षगैः जूकस्तुलः अजोमेष
सौरर्क्षेमकरकुंभौ तेनतुलेकुजोभौमः मेषेसौरः मकरकुंभयोरन्यतमेचंद्रः एवंयस्यजन्मनिभवंति सविण्मध्येमध्यमध्येम्रियते यातै
र्वेति गलितेंदुः क्षीणचंद्रः सूर्यआदित्यः रुधिरोंगारकः एतैर्यथासंख्यंव्योमास्तबंधाह्वयान्यातैः प्राप्तैः व्योम्निदशमेक्षीणचंद्रः अस्त
मयेसप्तमेसूर्यः बंधाह्वयेबंधकसंज्ञिकेचतुर्थेभेबंधित्याह्वयंसंज्ञायस्य एवंयस्यजन्मनिभवंतिसवायहणात्विण्मध्येम्रियते ८ ६ ६

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथान्यानप्यनिष्टयोगान्वैतालीयेनाह वीर्यान्वितेति क्षीणेंदोक्षीणचंद्रे वीर्यान्वितेनसबलेनवक्रेणभौमेनदृष्टेवीक्षितेऽर्कजेसौरेनिधनं स्थितेऽष्टमेजातस्यगुह्योद्भवरोगपीडयागुदेयऽद्भूतउत्पन्नरोगोगदस्तत्पीडया ऽर्शोभगंदरादयोक्रमेशस्त्रदाहजः कृमिजः शस्त्रजः दाहजः अर्शोभगंदरादिरोगदोषात् कृमिपातेनशस्त्रकर्मणावादाहेनवाक्रियमाणेनतस्यमृत्युर्भवति ९ अथान्यानपिमृत्युयोगान्वसंततिलके नाह अस्तेरवाविति अस्तेसप्तमेरवावादित्येसरुधिरेणभौमेनसंयुक्तेस्थितेऽर्कपुत्रेसौरेनिधनेऽष्टमेक्षीणेहिमगौचंद्रेरसातलगतेचतुर्थस्थानस्थेजातः खगांतोभवति खगः पक्षीतत्कृतोमृत्युर्भवति तस्यमृतस्याग्निसंस्कारोनभवतीत्यर्थः लग्नात्मजाष्टमेति इनः सूर्यः भौमःकुजः मंदः सौरः चंद्रः शशांकः एतैर्यथासंख्यंलग्नात्मजाष्टमतपःस्थितैः लग्नपंचमाष्टमनवमस्थैः तेनलग्नेऽर्कः पंचमेभौमः अष्टमेसौरः नवमेचंद्रोयस्यजन्मनिभवति तस्यशैलशिखरात् पर्वतमस्तकात् पतितस्याशनिपातेनचोल्कयावज्रपातेनकुड्यपातनभित्तिपातेनवामृत्युर्भव

वीर्यान्वितवक्रवीक्षितेक्षीणेंदौनिधनस्थितेऽर्कजे गुह्योद्भवरोगपीडयामृत्युः स्यात्कृमिशस्त्रदाहजः ९ अस्ते
रवौसरुधिरेनिधनेऽर्कपुत्रेक्षीणेरसातलगतेहिमगौखगांतः लग्नात्मजाष्टमतपस्विनभौमसमंदचंद्रैस्तुशैलशिखरा
शनिकुड्यपातैः १० द्वाविंशःकथितस्तुकारणंद्रेष्काणोनिधनस्यसूरिभिः तस्याधिपतिर्भवोपिवानिर्याणंस्वगुणैःप्रयच्छ
ति ११

ति १० अथयस्यजन्मन्येतेषांयोगानांमध्यादन्यतमोयोगोनभवति नचाष्टमेस्थानेकश्चिद्ग्रहोभवति नचाष्टमंस्थानंकश्चिद्ग्रहः पश्यति तन्मृत्युकारणंवैतालीयेनाह द्वाविंशइति येनद्रेष्काणेनपुमानजातस्तस्माद्योद्वाविंशोद्रेष्काणोभवति ससूरिभिः पंडितैः निधनस्यमृत्योः कारणंनिमित्तंकथितः कथमित्याह तस्याधिपतिरित्यादि तस्यद्वाविंशस्यद्रेष्काणस्ययोधिपतिर्ग्रहस्तस्याग्न्यंबाद्युधजइत्यादि स्वगुणेर्योहेतुः पठितस्तेननिर्याणंमरणंप्रयच्छतिददाति अथवायस्मिन्राशौसद्वाविंशोद्रेष्काणोभवति तस्यराशेर्यःस्वामीतस्मात्भवोभवति सवास्वगुणैरात्मीयहेतुभिः निर्याणंमरणंप्रयाति सचद्वाविंशोद्रेष्काणोलग्नादष्टमराशौभवति सकथंज्ञायतेउच्यते यदिलग्नस्यप्रथमोद्रेष्काणस्तदाष्टमस्यापि प्रथमोथलग्नस्यद्वितीयस्तदाऽष्टमस्यापिद्वितीयोऽथलग्नस्यतृतीयस्तदाऽष्टमस्यापितृतीयः नकेवलंयावत्सर्वराशीनामेषैवव्यवस्था अनेनक्रमेणप्रकारेणयोऽष्टमराशिःद्रेष्काणः सएवद्वाविंशोद्रेष्काणइति तत्रैतज्ज्ञानं यस्यो



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

क्तयोगानामन्यतमोयोगोनभवति नचाष्टमंस्थानंग्रहकनवीक्षितंतस्यद्वाविंशद्रेष्काणाधिपाष्टमराश्यधिपयोर्योबलवांस्तदुक्तदोषेण
मृत्युरिति ११ अथयादृग्भूमौम्रियतेनेनद्विज्ञानंयत्सूत्रलिलकेनाह होरानवांशेति पुरुषस्यजन्मसमयेहोरायांलग्नेयोनवांशकोभव
ति तस्ययोधिपतिः ग्रहस्तेनयोक्तोराशिः सराशिर्यत्रास्थितइत्यर्थः तस्यराशेर्यायोग्याभूमिस्तस्यांभूमौसम्रियते तद्यथा सचेद्राशिद्वये-
भवति तदाअधिकसंचारभूमौसचेद्राशिः मेषोभवति तदाजाविकल्पसंज्ञभूमौ वृषभश्चेत्तदावृषभप्रचारभूमौमिथुनश्चेत्तदागृहे कर्क
टश्चेत्तदाकूपेसिंहश्चेत्तदारण्ये कन्याचेत्तदाकूपे तुलाचेत्तदापणगृहे वृश्चिकश्चेत्तदाश्वभ्रे धन्वाचेत्तदा श्वभ्रजारभूमौ मकरश्चेत्तदा
नूपे कुंभश्चेत्तदागृहे मीनश्चेत्तदानूपइति येषांतुपुनर्मृत्युयोगेजलादौमरणमुक्तंतेषांतत्रैव नकेवलंदर्शितराशिवशेनभूप्रदेशोवक्तव्यः
अपितुयोगेक्षणादिभिरिति सलग्ननवांशकाधिपतिर्यस्मिन्राशौव्यवस्थितः तत्रयेनग्रहेणतस्ययोगोभवति तदातस्यचयाभूमिः
ईक्षणादिर्योवातस्यपश्यति आदिग्रहणाद्यस्यनवांशकेस्थितस्तस्यापियाभूमिरुक्तातस्यांसम्रियतइति अत्रचबहुभूमिसंभवेग्रहब

होरानवांशकप्रयुक्तसमानभूमौयोगेक्षणादिभिरतःपरिकल्प्यमेतत् मोहस्तुमृत्युसमयेऽनुदितांशतुल्यः
स्वेशेक्षितेद्विगुणितस्त्रिगुणःशुभैश्च १२ लाढुक्तव्याः ननुचग्रहस्यकाभूमिः उच्यते ग्रहस्यात्मीयराशेर्याभूमिःसैवे-
ति ननुयस्यराशिद्वयंतस्यकाभूमिरित्युच्यते तत्रत्रिकोणराशेः संबंधिनीभूमिः तद्यथा आदित्यस्यसिंहभूमिः अरण्यम् चंद्रमसः
कर्कटभूमिरनूपंभौमस्यमेषभूमिरजाविकसंचारप्रदेशः बुधस्यकन्याभूमिरनूपः जीवस्यधनुर्भूमिरश्वप्रचारः शुक्रस्यतुलाभूमिः
विपणि शनैश्चरस्यकुंभभूमिः गृहमिति केचिदत्रदेवालयेअग्निविहारकोशशयनक्षितिरुत्कराः स्युरित्यादिकस्थानमिच्छंति एतच्च
शोभनं यतः एतेषुस्थानेषुम्रियमाणादृश्यंतइति एवमेतस्मादन्यत् परिकल्प्यंचिंत्यम् मोहस्त्विति यावंतोलग्नस्यनवांशकाअनु
दिताः शेषास्तेषामंशानांसंपीडितानांयावत्कालोभवति एतदुक्तंभवति यावत्कालोलग्नादवशिष्टःपुरुषस्यजन्मविषयेभवति तावंत-
स्तावत्कालमिति सचेल्लग्नराशिः यदिस्वेशेनस्वपतिनेक्षितोदृष्टस्तदासएवकालोद्विगुणोवक्तव्यः अर्थादेवस्वामिनासौम्यग्रहैश्चदृष्ट
स्तदाषड्गुणकालोवक्तव्यः १२ अथमृतस्यशरीरपरिणामज्ञानंयालिन्याह दहनेति निधनभवनेष्टमेस्थानेयोद्रेष्काणोव्यवस्थि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तः तद्वशाच्छवपरिणामश्चिंतनीयः सत्त्वगणनयाद्यविंशोद्रेष्काणोभवति सतयदि दहनद्रेष्काणोऽग्निद्रेष्काणोभवति तदाभस्मलेनपरिणा-
मत्यग्निनादह्यते पापद्रेष्काणोग्निद्रेष्काणः अथजलद्रेष्काणोभवतितदासक्लिद्यते जलमध्येक्षिप्यते सौम्यग्रहद्रेष्काणोजलद्रेष्काणः अ-
थमिश्रद्रेष्काणोभवति तदाशुष्यति तदह्यतेनचापिजलमध्येक्षिप्यते सौम्यग्रहद्रेष्काणः पापयुक्तोभवति पापग्रहद्रेष्काणोवासौम्ययुक्त-
स्तदामिश्रद्रेष्काणः तथानिधनभवनसंस्थैरष्टमराश्याश्रितैः व्यालवर्गैः सर्पद्रेष्काणैः विडंबितोभवति तदाश्वसृगालकाकादिभिर्भु-
ज्यते भक्ष्यतइत्यर्थः अत्रव्यालद्रेष्काणाः कर्कटाद्यः कर्कटद्वितीयः वृश्चिकाद्यः वृश्चिकद्वितीयः मीनांत्यश्च उक्तंच शशिगृहपूर्वापरगो
वृश्चिकस्यचमीनपश्चिमोपगतः निधनेयस्यभवतिद्रेष्काणस्तस्यचमृतस्य भुंजंतिवायसाद्याः प्राणिसमूहानचास्तिसंदेहः पापग्रहद्रेष्का-
णोयस्याष्टमराशिसंस्थितोभवति दहनंप्राप्नोतिनरोमृतमात्रोनिश्चयात्प्रवदेत् एवंसौम्यद्रेष्काणोजलमध्येक्षिप्यतेनरोत्रमृतः सौम्यद्रे-
ष्काणः पापैः पापद्रेष्काणोपिसौम्ययुक्तः यस्याष्टमभवनगतः शोषंप्राप्नोतिसोपिमृतइति एवंप्रकारः शवानांमृतानांपरिणामोविपत्ति-

दहनजलविमिश्रैर्भस्मसंक्लेदशोषैर्निधनभवनसंस्थैर्व्यालवर्गैर्विडंबः इतिशवपरिणामश्चिंतनीयोयथोक्तःपृथुवि
रचितशास्त्राद्गत्यनूकादिचिंत्यम् १३ गुरुरुडुपतिशुक्रौसूर्यभौमौयमज्ञौविबुधपितृतिरश्चोनारकीयांश्चकुर्युः॥

श्चिंतनीयोविचार्यः पृथुविरचितशास्त्राद्विस्तीर्णाच्छास्त्रात् गत्यर्थकादिमरणादिचिंत्यम् मृतस्यकागतिर्भविष्यति कस्माच्चलोकादयमा-
गतः आदिग्रहणात्तत्रकीदृगासीदिति अनूकशब्देनेहातीतजन्मोच्यते १३ अथयोयंजातोजंतुःसकस्माल्लोकादागतइतियदुक्तंतद्विज्ञानं-
माल्लिन्याह गुरुरिति गुरुर्जीवः उडुपतिशुक्रौ चंद्रसितौ सूर्यभौमौरविकुजौ यमज्ञौसौरबुधौ एतेविबुधपितृतिरश्चोनारकीयांश्चजा-
तान्कुर्युः विबुधलोकोदेवलोकः पितृलोकः प्रसिद्धः तिरश्चांतिर्यग्लोकः नरकः नरकलोकःप्रसिद्धः एभ्यः आगतान् वदेत् कथमितितद-
र्थमाह दिनकरशशिवीर्याधिष्ठितात्त्र्यंशनाथादिति दिनकरः सूर्यःशशीचंद्रः अनयोः दिनकरशशिनोः मध्याद्योबलीवीर्यवान् तेना-
धिष्ठितोयुक्तोयस्त्र्यंशोद्रेष्काणः तस्ययोनाथः स्वामीतस्ययोलोकस्तस्मादागतइतिवक्तव्यम् तत्रसयदिद्रेष्काणोगुरोः जीवस्यसंबंधी
भवति तदाविबुधलोकादागतइतिवक्तव्यम् अथचंद्रशुक्रयोरन्यतमसंबंधीभवति तदापितृलोकादागतइतिवक्तव्यम् अथसूर्यभौम



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

योरन्यतमसंबंधी भवति तदा तिर्यग्लोकादागत इति वक्तव्यं अथ शनैश्चरबुधयोरन्यतमसंबंधी भवति तदा नरलोकादागत इति वक्तव्यम्
यस्माल्लोकादागतस्तत्रापि श्रेष्ठमध्यमहीनत्वज्ञानमाह प्रवरेत्यादि यस्य ग्रहस्य प्रदर्शितलोकात्तस्य जन्मज्ञानमाह ग्रहस्तुंगस्थः स्वोच्चरा-
शिगतो भवति तदा तत्र प्रवरः प्रधान मासीदिति विज्ञेयं अथोच्चराशिच्युतो नीचमप्राप्य तदा तत्रासौ मध्यम आसीदिति विज्ञेयं नीचस्थः
निकृष्टः हीनः एतदनूके प्राग्जन्मनि ज्ञेयं १४ अथ मृतस्य क्व गतिर्भविष्यति स्यति तद्विज्ञानं मालिन्याह गतिरिति यस्य जन्मनि लग्नात्सष्ठसप्त
माष्टमस्थानानि शून्यानि भवंति तस्य तत्कालं रिपुस्थाने त्र्यंशो द्रेष्काणो वर्तते तयोर्यावधिपती तयोर्मध्ये यो बलवांस्तस्य यो लोको भिहितः स ए
व गतिः एवं रिपुरंध्रत्र्यंशपइति तत्र तेन मृतेन गंतव्यमिति अस्तस्थितो वा अथ लग्नात्सष्ठसप्तमाष्टमस्थानानामन्यतमे स्थाने कश्चिद्ग्रहो
भवति तदा तस्य दर्शितलोके तेन गंतव्यं अथ लग्नात्सष्ठसप्तमाष्टमस्थानानां द्वस्थाने त्रिणि वा सग्रहाणि भवंति सोष्ट्येकस्मिन्नपि द्व्यादयो ग्र

दिनकरशशिवीर्याधिष्ठितास्त्र्यंशनाथात्प्रवरसमनिकृष्टास्तुंगह्रासादनूके १४ गतिरपि रिपुरंध्रत्र्यंशपोऽस्त
स्थितो वा गुरुरथ रिपुकेंद्रछिद्रगः स्वोच्चसंस्थः उदयति भवनेंत्ये सौम्यभागे च मोक्षो भवति यदि बलेन प्रोज्झितास्त
त्र शेषाः १५ इति बृहज्जातकविवृत्तौ नैर्याणिकाऽध्यायः पंचविंशतिः समाप्तः २५

हा भवंति तदा तेषां ग्रहाणां यो बल
वांस्तस्य यः प्रदर्शितो लोकस्तेन गंतव्यमिति नन्वस्तस्थितो वेति कैश्चिद्बलयुक्तं तत्र सप्तमस्य ग्रहणं कृतं तत्सष्ठाष्टमस्योपि स्तांगतिं नयती-
ति किं व्याख्यातं उच्यते अस्तस्थितो वेति वा शद्वश्च शद्वार्थे ज्ञेयः नेकेवलमस्तस्थितस्त्वकारात् रिपुरंध्रगश्चेति केचिदस्तस्थितश्चेति पठंति त
था च स्वल्पजातके उक्तं क्रूरपितृतिर्यङ्नरकान् गुरुरुडुपसितावसृष्टमवो ज्ञयमो रिपुरंध्रत्र्यंशकपा नयंति चास्तारिनिधनस्थाः गुरुरथेति
अथ शद्वः पादपूरणार्थे यस्य जन्मनि गुरुर्बृहस्पतिर्लग्नादिषु स्थानेषु षष्ठे भवति केंद्रेषु वा छिद्रेष्टमे वा स च स्वोच्चस्थः कर्कटे भवति तदेको यो
गः जयवांत्ये भवने मीनराशावुदयति विलग्नगते तत्र च गुरुवर्ज्यशेषा ग्रहा अन्ये ग्रहा बलेन वीर्येण प्रोज्झिता वर्जिता भवंति तदा द्वितीयो योगः
अस्मिन्योगद्वये जातस्य मोक्षो भविष्यतीति वक्तव्यं उदयति भवनेंत्ये सौम्यभागे च मोक्ष इत्यत्र चकारो वा शब्दस्यार्थे यथा गुरुप स्य जन्मकाल ग्रह
वशात् गतिरुक्ता तथा मरणकाललग्नवशादपि गतिर्वक्तव्या यस्मात्स्वल्पजातके उक्तं षष्ठाष्टमकंटकगो गुरुश्चेद्गतिर्मानलग्ने वा शेषैः स्वगे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

र्जन्मानि मरणे वा मोक्षगतिमाहुरिति १५ इति श्रीभट्टोत्पलविरचितायां बृहज्जातकविवृत्तौ नैर्याणिकोऽध्यायः पंचविंशतितमः समाप्तः २५
अथ नष्टजातकाध्यायो व्याख्यायते तत्रादावेव प्रसूतिकालज्ञानमिंद्रवज्रयाह आधानेति यस्याधानकालो ज्ञायते तस्याधानकालाद् पूर्व-
मेव जन्मव्याख्यानम् तत्कालमिंदुसहितं इत्यादिना जन्मकालश्च व्याख्यात एव एवमाधानजन्मकालयोरपरिबोधे अज्ञाने सति संपृच्छतः प्रष्टुः विल-
ग्नात् प्रश्नलग्नात् जन्म वदेद् ब्रूयात् येन लग्नेन प्रष्टा पृच्छति तस्य यदि पूर्वार्द्धं प्रथममहोरात्रं भवति तदा प्रष्टुः भानावादित्ये उदग्गते उत्तरायणस्थे जन्म वक्त-
व्यम् मकरादिराशिषट्कस्थे जात इत्यर्थः अथ लग्नस्यापरार्द्धं द्वितीयाहोरा भवति तदा भानौ दक्षिणगते दक्षिणायनस्थे जन्म वक्तव्यं कर्कटादिरा-
शिषट्कस्थे जात इत्यर्थः तथा च आधानजन्मनी यस्य न विज्ञायेते देहिनः जन्म संपृच्छतस्तस्य प्रश्नलग्नाद्विनिर्दिशेत् १ अथ वर्षर्तुज्ञानमुपजाति-
याह लग्नत्रिकोणेष्विति त्रिभागैर्द्रेष्काणैः लग्नत्रिकोणेषु प्रथमपंचमनवमस्थानेषु गुरुर्जीवो ज्ञेयः तद्यथा प्रश्नलग्नस्य यदि प्रथमद्रेष्काणो भव-

अथ नष्टजातकाध्यायप्रारंभः आधानजन्मापरिबोधकाले संपृच्छतो जन्म वदेद्विलग्नात् पूर्वापरार्द्धे भवनस्य
विंद्याद्भानावुदग्दक्षिणगे प्रसूतिम् १ लग्नत्रिकोणेषु गुरुस्त्रिभागैर्विकल्प्य वर्षाणि वयोऽनुमानात् ७ ७

ति तदा य एव लग्नराशिस्तत्रस्थे गुरौ जन्म वक्तव्यं अथ लग्नस्य द्वितीयो द्रेष्काणः तदा लग्नाद्यः पंचमो राशिस्तत्रस्थे गुरौ जन्म वक्तव्यम् अथ लग्नस्य तृती-
यो द्रेष्काणस्तदा लग्नाद्यो नवमो राशिस्तत्रस्थे गुरौ जन्म वक्तव्यम् एवं केषांचिन्मतं अथान्येषां मतम् यथा प्रश्नलग्नस्य यदा प्रथमो द्रेष्काणोदयो भवति
तदा लग्नराशितो यावत्संख्ये राशौ बृहस्पतिस्तिष्ठति तावत्संख्यानि प्रष्टुर्वर्षाणि वक्तव्यानि अथ लग्ने द्वितीयो द्रेष्काणस्तदा लग्नात्पंचमराशितो या-
वत्संख्ये राशौ बृहस्पतिर्भवति तावत्संख्यानि प्रष्टुर्वर्षाणि वक्तव्यानि यदा लग्नस्य तृतीयो द्रेष्काणो भवति तदा लग्नान्नवमराशितो यावत्संख्ये रा-
शौ बृहस्पतिर्भवति तावत्संख्यानि प्रष्टुः वर्षाणि वक्तव्यानि एतद्व्याख्यानं न शोभनं पूर्वव्याख्यानमेव श्रेयः यस्माद्यवनेश्वरः द्रेष्काणलग्ने क्रम-
स्तु कराशौ गुरुर्विलग्नादित्रिकोणगो भूत् संस्पृक्ष्य तद्वनक्रमेण स्वाच्चारभाद्वृद्गतिं प्रगणय्यात् यद्यप्यत्र सामान्येनोक्तं बृहस्पतेरवस्थानं तथा च द्वादशभाग-
क्रमेण प्रतिराशौ संचार्यः तद्यथा यदि प्रश्नलग्नस्य प्रथमद्वादशभागोदयो भवति तदा लग्नस्थे जीवे जातः द्वितीयद्वादशभागश्चेत्तदा लग्नाद्द्वितीये गुरौ जातः ११२
एवं तृतीयादिद्वादशभागोदये तृतीयादिषु स्थानेषु ऊह्यम् विकल्प्य वर्षाणि वयोऽनुमानादेवं बृहस्पतेरवस्थानं ज्ञात्वा तस्य एव वयोऽनुमानात्तस्याकृतिं शरीर

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मवेक्ष्य वर्षाणि विकल्प्य वयःप्रमाणं बुध्वा द्वादशसु द्वादशकवर्षेषु विकल्पना कार्या किमस्मिन्नेव भगणपरिवर्त्ते ज्ञातराशौ बृहस्पतेरवस्थानमभूदुत द्वितीय उत तृतीयादिषु एवं तस्याकृतिमवेक्ष्य वयोनुमानवक्तव्यम् यत्र द्वादशकवर्षेषु भ्रान्तिर्भवति तत्र उरुषलक्षणोक्तेन दशाविभागेन द्वादशवार्षिकीं दशांक्षेत्रे-षु परिकल्प्य यत्तत्क्षेत्राङ्गसंस्पर्शाद्वर्षज्ञानं तथा च उरुषलक्षणे पठ्यते पादौ सगुल्फौ प्रथमं प्रदिष्टं जंघे द्वितीयं तु सजानुचक्रे मेढ्रोरुमुष्काश्च ततस्तृतीयं नाभिं कटिं चेति चतुर्थमाहुः उदरं कथयन्ति पञ्चमं हृदयं षष्ठमथ स्तनान्वितं अथ सप्तममंशजत्रुणी कथयंत्यष्टममोष्ठकंधरे नवमं नयने च सभ्रूणी सललाटं दशमं शिरस्तथा अशुभेष्वशुभं दशाफलं चरणाद्येषु शुभेषु शोभनमिति किंत्वत्र विंशत्यधिकं वर्षशतं यस्य जन्मनोऽतीतं तस्य नष्टजातकवर्षज्ञानोपाय एव नास्ति एवं वर्षेषु ज्ञातेषु ऋतुज्ञानमाह ग्रीष्मोर्कलग्नइति येन लग्नेन प्रष्टा पृच्छति तत्र चेदर्कः सूर्यः स्थितस्तद्द्रेष्काणो वा लग्ने तदा ग्रीष्मे जात इति वक्तव्यम् कथितास्तु शेषैरिति शेषैरन्यैश्चंद्रादिभिर्ग्रहैर्लग्नस्थैः ऋतुः पूर्वमेव कथित उक्तः द्रेष्काणैः शिशिरादय इत्यादिना ग्रंथेनोक्तः तत्र यदा शनैश्चरो लग्ने भवति तद्द्रेष्काणो वा तदा शिशिरे जात इति वक्तव्य एवं शुक्रे लग्नगते वा तद्द्रेष्काणे तदा वसंते जातः एवं भौमे ग्रीष्मे एवमेव रवावपि चंद्रे लग्नगते तद्द्रेष्काणे वा

ग्रीष्मोर्कलग्ने कथितास्तु शेषैरन्यायनर्त्तावृतुरर्कचारात् २ चंद्रज्ञजीवाः परिवर्तनीयाः शुक्रारमंदैरयने विलोमे ॥

वर्षासु बुधे शरदि जीवे हेमंत इति यदा बहवो लग्नगताः भवंति तदा तेषां मध्ये यो बलवान् तदुक्तर्तौ जात इति वक्तव्यं अथ न कश्चिद्ग्रहो लग्नगतो भवति तदा तस्य संबंधी द्रेष्काणोदयो भवति तदा तदुक्तर्तौ जात इत्येवं वक्तव्यं अन्यायनर्त्तावृतुरर्कचारादिति अन्यस्मिन्नयने ऽन्यस्मिन्नृतावर्कचाराद्दतुः अन्यस्मिन्नयने तदयनासंभवश्चेदृतुरन्यो भवति तदर्तुरर्कचारवशेन वक्तव्यं एतदुक्तं भवति सौरेण मानेन ऋतुर्वक्तव्यः न तु चांद्रेण यथा शिशिरे ज्ञाते मकरकुंभयोरन्यत मे राशौ सूर्यस्यावस्थानं ज्ञेयं एवं शेषराशिष्वप्यूह्यम् अनेन लौकिकश्चांद्रमासो निराकृतो भवतीति २ अथायने विलोमे ग्रहपरिज्ञानाद्दतुपरिज्ञानं मा-सपरिज्ञानं चेंद्रवज्रयाह चंद्रज्ञेति अयने विलोमे सति चंद्रज्ञजीवाः शुक्रारमंदैः परिवर्त्तनीयाः शशिबुधगुरवः सितभौमशनैश्चरैः अयनव्यत्यये प्राप्ते स-ति परिवर्त्तनीयाः व्यत्ययेन व्यवस्थाप्याः एतदुक्तं भवति यद्युत्तरायणे ज्ञाते प्रावृट्काले ज्ञातस्तदा वसंते जात इति वक्तव्यम् चंद्राच्छुक्रेणात्र परिवर्तितः अथो-त्तरायणे शरदि माघायां ग्रीष्मे जातः दक्षिणायने ग्रीष्मे ज्ञाते शरदि जातः अथ बुधो रविभौमयोरपवर्त्तिनौ रविभौमौ बुधेन च उत्तरायणे हेमंते ज्ञाते शिशिरे-जातः दक्षिणायने शिशिरे माघे हेमंते जातः इति वक्तव्यं अत्र जीवमंदौ परस्परमपवर्त्तिनौ एवमृतौ ज्ञाते मासज्ञानमाह द्रेष्काणभाग इति प्रथमस्तु लग्ने यो द्रे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

क्काणोवर्त्ततेतस्यचद्रेक्काणस्ययदिप्रथमभागोवर्त्ततेतदाज्ञातव्योंप्रथमेमासिजातः इतिवक्तव्यम् अथलग्नेद्रेक्काणस्यद्वितीयोभागोवर्त्तते त
दाज्ञातव्योंद्वितीयेमासिजातः तृतीयद्रेक्काणेद्वौविभागौपूर्वपरावत्रापि अर्कावस्थानतएवमासज्ञानं अथएवंमाससंज्ञात्वातिथिज्ञानार्थमाह अनु
पाताच्चतिथिर्विकल्प्यः अनुपातात्त्रैराशिकात्तिथिर्विकल्प्योविकल्पनीयः लग्नस्यषट्लिप्ताशतानिद्रेक्काणः द्रेक्काणेनचज्ञाततुंरुतुज्ञानंतदर्ध
लिप्ताशतत्रयं लिप्ताशतत्रयेणमासज्ञानं अत्रानुपातात्तिथिर्लिप्तादशकेनैकैकोज्ञेयः एषश्चतिथिरादित्यभागः एवमादित्यस्यराशयोभागाज्ञे
याः मासाराशयस्तिथयोभागाः यस्मिंश्चतिथौज्ञातवर्षेयथाप्रदर्शितादित्योभवति तस्मिन्तिथौतस्यजन्मइतिवक्तव्यम् ३ अथचंद्रमा
नतिथिज्ञानोपायमिंद्रवज्रयाह अत्रापीति अत्रास्मिंस्तिथिज्ञानेद्विजेंद्रामुनयोहोराशास्त्रज्ञाः सूर्यांशतुल्याम् अंशस्थानेस्फुटार्कभागस
मांतिथिसुद्दिशंतिकथयंति प्रश्नकालेतात्कालिकेनादित्येनयावंतोभागाभुक्तास्तावंतः शुक्लप्रतिपत्प्रभृतिज्ञातमासस्यतिथयोव्यतीताः अत्रचांद्रमानेमक

द्रेक्काणभागेप्रथमेतुपूर्वोमासोनुपाताच्चतिथिर्विकल्प्यः ३ अत्रापिहोरापटवोद्विजेंद्राः सूर्यांशतुल्यांतिथिसुद्दि
शंति रात्रिकसंज्ञेषुविलोमजन्मभागैश्चवेलाःक्रमशोविकल्प्याः ४

रमासेजातेमाघमासोज्ञेयः एवमन्येष्वपिमासकल्पनाका
र्या तथाचमणित्थः पृच्छाकालेरविणायावंतोंशाः स्फुटेनसंभुक्ताः राशेस्तास्तिथयःस्युः शुक्लादावर्कमासस्यएवंदिनेज्ञातेकिमयंरात्रौजातोदिवा
वेति तदर्थमाह रात्रिकसंज्ञेष्विति रात्रिकसंज्ञापूर्वंव्याख्याताः गोजाश्विकर्किमिथुनाइत्यादिनातत्रप्रश्नकालेयदिरात्रिसंज्ञोलग्नोभवति तदा
तस्यविलोमतादिवाजन्मवक्तव्यं अथदिवसंज्ञोलग्नोभवतितदारात्रौजन्मवक्तव्यं एवंदिनरात्रिविभागेज्ञानेवेलाज्ञानमाह भागैश्चवेलाःक्रमशोविक
ल्प्याः यस्मिन्दिनेपुरुषस्यजन्मज्ञानंतस्मिन्दिने अंशादित्योपिज्ञातः ततस्तस्यपुरुषस्ययदिदिवाजन्मतदातस्मादादित्याद्दिनप्रमाणंकार्यम् अथरात्रौ
जन्मतदारात्रिप्रमाणंतत्रप्रश्नलग्नस्यतस्मिन्कालेयावंतश्चषकाभुक्तास्तैरनुपातःकार्यः यदिपुरुषस्यदिवाजन्मतदादिनप्रमाणेन यदारात्रौतदारात्रि
प्रमाणेन तात्कालिकलग्नभुक्तचषकानांगुणनांकृत्वातस्यैवलग्नस्यस्वदेशराश्युदयप्रमाणेनभागमपहृत्याप्तासांवेलां तावंतात्कालेनगतेनदिनस्यरात्रे
र्वाजन्मवक्तव्यं एवंलग्नभागैःक्रमशः परिपाद्यावेलासमयः विकल्प्याविकल्पनीया ४ अर्थांतरेणमासज्ञानमिंद्रवज्रयाह केचिदिति केचिदाचा- ११३
र्याः शशांकाध्युषितात्चंद्रभुक्तान्नवांशाच्छुक्लांतसंज्ञंमासंकथयंति प्रश्नकालेयस्मिन्नवांशकेनवमेंशेचंद्रमाभवति तमपिनवांशकंत्रिधापरिकल्प्य

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तस्मिन्नवांशकेवावमेंशेचंद्रमाव्यवस्थितइति चंद्रनवांशकगतंनक्षत्रमन्वेष्यम् तन्नक्षत्रशुक्लांतसंज्ञकेमासितस्यजन्मवक्तव्यं अत्रयस्यनक्षत्रस्यशुक्लांतसंज्ञोमासोनास्तितस्यबृहस्पतिचारोक्तविधिनाशुक्लांतसंज्ञोमासः परिकल्प्यः तत्रोक्तं नक्षत्रेणसहोदयमस्तंवायेनयातिसुरमंत्री तत्संज्ञंवक्तव्यंवर्षंमासंक्रमेणैव वर्षाणिकार्तिकादीन्याग्नेयाद्भद्वयानियोज्यानि क्रमशस्त्रिभंतुपंचमसुपांत्यमंत्यंचयद्वर्षमिति तत्रचंद्रमायदिवृषनवांशकेतन्नवांशकसप्तकस्यार्वाग्भवतितदाकार्तिकेमासिजातइतिवक्तव्यम् अथवृषनवांशकस्योर्द्ध्वंभवति मिथुननवांशकेतन्नवांशकषट्कस्यार्वाक्यदाचंद्रमाभवति तदामार्गशीर्षेमासिजातइतिवक्तव्यम् अथमिथुननवांशकेतन्नवांशकषट्कस्योर्ध्वंकर्कटनवांशकेतन्नवांशकपंचकस्यार्वाग्यदाचंद्रमाभवतितदापौषेमासिजातइतिवक्तव्यम् अथकर्कटेतन्नवांशकपंचकस्योर्ध्वंसिंहनवांशकेतन्नवांशचतुष्टयस्यार्वाग्यदाचंद्रमाभवतितदामाघेमासिजन्मइतिवक्तव्यम् अथसिंहनवांशकेतन्नवांशकचतुष्टयस्योर्ध्वंकन्यानवांशकेतन्नवांशकसप्तकस्यार्वाग्यदाचंद्रमाभवति तदाफाल्गुनेमासिजातइतिवक्तव्यम् अथकन्यानवांशकसप्तकस्योर्ध्वंतुलनवांशकेतन्नवांशकषट्कस्यार्वाग्यदाचंद्रमाभवति तदाचैत्रेमासिजातइतिवक्तव्यम् अथतुलानवांशकेतन्नवांशकषट्कस्योर्ध्वंवृश्चिकनवांशकेतन्नवांशकपंचकस्यार्वाग्यदाचंद्रमाभवति तदावैशाखेमासिजातइतिवक्तव्यम् अथवृश्चिकेतन्नवांशकपंचकस्योर्ध्वंधन्विनवांशकेतन्नवांशकचतुष्टयस्यार्वाग्यदाचंद्रमाभवति तदाज्येष्ठेमासिजातइत्यवगंतव्यम् अथधन्विनवांशकेतन्नवांशकचतुष्टयस्योर्ध्वंमकरनवांशकत्रयस्यार्वाग्यदाचंद्रमाभवति तदाआषाढेमासिजातइतिवक्तव्यम् अथमकरनवांशकेतन्नवांशकत्रयस्योर्ध्वंकुंभनवांशकेतन्नवांशकद्वयस्यार्वाग्यदाचंद्रमाभवतितदाश्रावणेमासिजातइतिवक्तव्यम् अथकुंभनवांशकेतन्नवांशकद्वयस्योर्ध्वंमीननवांशेतन्नवांशपंचकस्यार्वाग्यदाचंद्रमाभवति तदाभाद्रपदेमासिजातइतिवक्तव्यम् अथमीननवांशकेतन्नवांशकपंचकस्योर्ध्वं मेषनवांशेतन्नवांशषट्कत्रयस्यार्वाग्यदाचंद्रमाभवति तदाश्वयुजिमासिजातइतिवक्तव्यं अथमेषनवांशकेतन्नवांशाष्टकस्योर्ध्वंयदिचंद्रमाभवति तदाकार्तिकेमासिजातइत्यवगंतव्यम् यस्मिन्कृत्तिकासरोहिणीकार्तिकः मृगशिरार्द्राचमार्गशीर्षः पुनर्वसुपुष्यश्चपौषः आश्लेषामघाच

केचिच्छशांकाध्युषितान्नवांशाच्छुक्लांतसंज्ञं कथयंति मासं लग्नात्त्रिकोणोत्तमवीर्ययुक्तं संप्रोच्यते गालभनादिभिर्वा ५

| |
|---|
| मेषादिराशी नांचषकाः |
| मे. २०० मी. |
| वृ. २४० कुं. |
| मि. २८० म. |
| क. ३२० ध. |
| सिं. ३६० वृ. |
| क. ४०० तु. |

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

माघः पूर्वाफाल्गुन्युत्तराफाल्गुनीहस्तश्च फाल्गुनः चित्रास्वातीच चैत्रः विशाखानुराधाच वैशाखः ज्येष्ठामूलेज्येष्ठः पूर्वाषाढोत्तराषाढश्चाषाढः श्र
वणधनिष्ठाच श्रावणः शतभिषक्पूर्वाभाद्रपदोत्तराभाद्रपदाश्च भाद्रपदः रेवत्यश्विनीभरण्यश्चाश्वयुजः यस्मादुक्तं त्रिभंतु पंचमसुपांत्यमंत्यंचय
द्वर्षमिति एवं शुक्लांतस्य मासस्य निश्चयः शुक्लांतग्रहणेनैतत्प्रतिपादयति यत्तथा शुक्लपक्षांतेयेन नक्षत्रेण युक्तस्तदुपलक्षितो मासोवक्तव्यः य
था कार्तिक शुक्लपक्षांते कृत्तिकारोहिणीभ्यामन्यतमेनयश्चंद्रमाभवति तेनकार्तिकोमासउच्यते एवमन्येषामपियोज्यते तदेतदुक्तं भवति
न शुक्लांतोमासइत्यतोमासकृष्णांतएव तथाचयवनेश्वरः मासेतुशुक्लप्रतिपत्प्रवृत्ते पूर्वेशशीमध्यबलोदशाहे तथाच यद्राशिसंज्ञेशीतांशुःप्रश्न
कालेनवांशके स्थितस्तद्राशिगः पूर्णोयस्मिन्भवतिचंद्रमाः जन्ममासः सनिर्दिष्टः पुरुषस्यतुपृच्छतः कृष्णपक्षांतिकोमासोज्ञेयोत्रतुविपश्चिता
लग्नत्रिकोणेत्यादि लग्नस्य प्रथमलग्नस्य त्रिकोणयोश्च नवमपंचमयोर्मध्याद्यस्तत्काल सुत्तमेन प्रधानवीर्येण बलेनयुक्तस्तद्राशिः प्रोच्यते क
थ्यते यस्मिन्राशौगतेचंद्रमसिजातइतिवक्तव्यम् तथाचयवनेश्वरः होरादिवीर्याधिकलग्नभाजिस्थानंत्रिकोणेशशिनोविधार्य अंगालभनादि

यावान्गतः शीतकरोविलग्नाच्चंद्राद्वदेत्तावतिजन्मराशिः मीनोदयेमीनयुगंप्रदिष्टंभक्ष्यात्तताकाररुतैश्च
चित्यम् ६

भिर्वा कालांगानीत्यनेनप्रदर्शितोयः कालपुरुषस्यांगविभागस्तदालभनाद्यानेनविधिनास्पृष्टस्पृशतः यदेवकालपुरुषस्यां
गंस्पृशतितत्स्थेचंद्रमसिजातइतिवक्तव्यम् आदिग्रहणात्प्राण्युक्तसत्वदर्शनश्रवणेगृह्यते ५ अथप्रकारांतरेणजन्मेशराशिज्ञानमिंद्रवज्रयाह
यावानिति विलग्नात्पृच्छालग्नाच्छीतकरश्चंद्रोयावान्गतोजन्मराशौव्यवस्थितस्तस्माद्यस्तावतिराशिः तत्रस्थेचंद्रमसिजातइतिवक्तव्यम् मीनो
दयेयदिमीनलग्नगतोभवति तदामीनयुगमेवप्रदिष्टमुक्तं मीनस्थचंद्रमाइतिवक्तव्यम् ननुदर्शितविधिनाराशिरनेकप्रकारोयत्रभ्रमोभिन्नरूप
स्तत्रकोवक्तव्यइत्याशंक्याह भक्ष्यात्तताकाररुतैरिति यस्यराशेः संबंधिभक्ष्यद्रव्यंतस्मिन्कालेकृमिमग्नीयते तदाकारश्चकश्चिद्दृश्यते यथा
मार्जारादिदर्शनेसिंहोमहिषादिदर्शनेवृषइत्यादि अथवाराशियुक्तरूपंपुरुषस्यदृष्ट्याथवारुतेनयस्यराशिसदृशप्राणिनोरुतंशब्दः क्रियतेतत्र
स्थेचंद्रमसिजातइतिवक्तव्यम् ६ एवंजन्मराशौज्ञातेलग्नज्ञानमिंद्रवज्रयाह होरेति होरायांप्रश्नलग्नेयस्यराशेर्नवांशकस्तत्कालंवर्ततेतस्मा ११४
त्तावतितमंतत्प्रतिमंतमेवांशकराशिंतस्यजन्मलग्नंवक्तव्यम् अथवालग्नाल्लग्नद्रेष्काणादारभ्यरविः सूर्योयावति यावत्संख्येद्रेष्काणेव्यवस्थितस्तस्माल्ल

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ग्नादारभ्य तावति राशौ लग्नगते तस्य जन्म वक्तव्यम् अत्र च द्वादशभ्योऽधिके द्रेक्काणे द्वादशकमपास्य संख्यानिर्देशः चतुर्विंशतेरधिके चतुर्विंशतिम-
पास्य शेषं वदेत् एवं शास्त्रमाह शास्त्रं कथयति तत्समनीषिकयोक्तमित्येतत्प्रतिपादयति शास्त्रग्रहणेनैतत्प्रतिपाद्यते उक्तं च पृच्छालग्ननवांश
स्य यो राशिसंज्ञया समस्तस्मिन्लग्नगते राशौ जन्म वक्तव्यम् पृच्छतस्तावत्संख्योपगते लग्नाद् द्रेक्काणे द्वितिकृत् ततः प्रश्नलग्नात्तावत्संख्ये कृते लग्नरा
शौ प्रष्टुर्जन्म विनिर्दिशेत् ७ अथ प्रकारान्तरेण लग्नानयनमिंद्रवज्रयाह जन्मादिशेदिति लग्नगग्रहे जन्मादिशेत् प्रश्नलग्ने यो ग्रहो व्यवस्थितस्तं
तात्कालिकं कृत्वा लिप्तापिंडीकार्यम् अथ बहवो लग्नगता भवंति तदा तेषां यो बलवान् तं तात्कालिकं कृत्वा लिप्तापिंडीकार्यम् ततः सलिलसमीकृता
यामवनौ द्वादशांगुलेन शंकुना तात्कालिकानि छायांगुलानि गृहीत्वा तैरंगुलैरेकैकं ग्रहं यद्दर्शितकाले लिप्तापिंडीकृतं गुणयेत् अथवा सर्वग्रहेभ्यो यो ब
लवान् ग्रहस्तं तात्कालिकं कृत्वा लिप्तापिंडं कृत्वा छायांगुलाहतं चार्कशुद्धं कारयेत् द्वादशभिर्विभजेत्तत्र यावत्संख्यमवशिष्टं तावत्संख्यो मेषादेरारभ्य यो

होरानवांशप्रतिमं विलग्नं लग्नाद्रविर्यावति च द्रेक्काणे तस्माद् द्वे ताविनि वा विलग्नं प्रष्टुः प्रसूताविति शास्त्रमाह ७
जन्मादिशेल्लग्नगवीर्ययोगवृाछायांगुलघ्नोर्कहृतेऽवशिष्टम् आसीनसुप्तोत्थिततिष्ठतां भं जायारिखाज्ञोदयगं प्रदिष्ट
म् ८ गोसिंहौ जितुमाष्टमौ क्रियतुलकन्यामृगौ चक्रमात्संवर्ग्या दशकाष्टसप्तविषयैः शेषाः स्वसंख्यागुणाः ॥ ॥

राशिर्भवति तस्मिन्राशौ लग्नगते तस्य जन्म वक्तव्यम् अथ प्रकारान्तरेणाह आसीनेत्यादि आसीन उपविष्टो यदा प्रष्टा पृच्छति तदा लग्नाद्यज्जाया
स्थानं सप्तमराशिस्तस्मिन्लग्नगते तस्य जन्म वक्तव्यम् अथ सुप्तः सुप्तोऽत्र शयनपतितो विहितः लग्ननिद्रस्य प्रश्नाभावात् तत्र पतितो यदा पृच्छ-
ति तदा लग्नाद्यत्सुखस्थानं चतुर्थराशिस्तस्मिन्लग्नगते तस्य जन्म वक्तव्यम् अथोत्थितः पृच्छति तदा तस्माल्लग्नाद्यदाज्ञास्थानं दशमो राशिस्तस्मिन्
लग्नगते तस्य जन्म वक्तव्यं अथ शयनादासनाच्चोत्थितः उत्तिष्ठतः पृच्छति तदोदयलग्नराशौ तस्मिन्नेव जन्म वक्तव्यम् उक्तं च उत्तिष्ठतो विलग्नात्सुप्तु:
सुप्तस्य बंधुलग्नाच्च उपविष्टस्यास्तमये व्रजतो मेषूरणस्थानादिति ८ अथ प्रकारान्तरेण सर्वमेव नष्टजातकं वक्ति ततः प्रश्नकाले तात्कालिकं ल
ग्नं कृत्वा लिप्तापिंडीकार्यम् ततस्तस्य लिप्तापिंडीकृतस्य गुणकारविज्ञानार्थं शार्दूलविक्रीडितेनाह गोसिंहाविति गोसिंहादयो राशयो यथाक्रमं दशादि
भिर्गुणकारैः संवर्ग्या गुणनीयाः तद्यथा गोसिंहौ वृषसिंहौ दशभि १० र्गुणयेत् वृषलग्नं लिप्तापिंडीकृतं दशभिर्गुणयेत् एवं सिंहं दशभिरेव जितु

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

माष्टमो मिथुन वृश्चिकौ लग्नगतावष्टभिः ८ र्गुणयेत् क्रियतुले मेषतुले एतौ सप्तभिः ७ र्गुणयेत् कन्यामृगौ कन्यामकरौ एतौ लग्नगतौ विषयैः पंचभिः ५ र्गुणयेत् एवमेते यथाक्रमं संवर्ग्या गुणनीयाः शेषा अनुक्ता राशयः स्वसंख्यागुणा आत्मीयसंख्यया गुणनीयाः तत्र गणनया कर्कटं चतुर्भिः ४ र्गुणयेत् एवं धन्वी नवभिः ९ कुंभमेकादशभिः ११ एवं मीनो द्वादशभिः १२ एवं तावल्लग्नं स्वगुणकारेणावश्यमेव गुणयेत् दशकाष्टसप्तविषयैः ततस्तत्र यदि

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मे | वृ | मि | क | सिं | क | तू | वृ | ध | म | कुं | मी |
| ७ | १० | ८ | ४ | १० | ५ | ७ | ८ | ९ | ५ | ११ | १२ |

ग्रहो भवति तदा ग्रहगुणकारेणावश्यमेव गुणयेत् तत्र ग्रहगुणकारविधिः जीवारास्फुजिदैंदवाः प्रथमवद्दशकाष्टसप्तविषयैरिति जीवगुरौ लग्नगते तमेव लग्नं स्वगुणकारैराहतं दशभिर्गुणयेत् आरे भौमे लग्नगते अष्टभिः आस्फुजिच्छुक्रः तस्मिन्लग्नगते सप्तभिः ऐंदवे बुधे पंचभिः शेषा रविशशिसौराः स्तेन्च सौम्यवत् बुधवत् पंचभिर्गुणनीया इत्यर्थः एवं तात्कालिकं लग्नं अवश्यं राशिगुणकारेण कारेण गुणयेत् ततः स ग्रहोक्तगुणकारैरपि तत्र चय

जीवारास्फुजिदैंदवाः प्रथमवच्छेषा ग्रहाः सौम्यवद्राशीनां नियतो विधिर्ग्रहयुतैः कार्या च तद्वर्गणाः ९ सप्ताहतं त्रिघन भाजितशेषमृक्षं दत्वाथवानव विशोध्य न वाथ वास्मात् एवं कलत्र सहजात्मज शत्रुभेभ्यः प्रष्टुर्वदेदुदयराशिवशेन तेषां १०

दा ग्रहो भवति तदा ग्रहगुणकारेण गुणयेत् यदा बहवो ग्रहा भवंति तदा सर्वेषां गुणकारैर्गुणयेत् एवं चतद्गुणितमेकांते स्थापयेत् ९ अथ नक्षत्रानयनं वसंततिलकेनाह सप्ताहतमिति सप्ताहतं सप्तभिर्गुणयेत् दत्वा थवेति ततस्तत्र नव देयाः शोध्या वा न किंचिद्वा उदुत्क्रच्यते यदि स चरराशिर्लग्नगतो भवति तदा नव देयाः

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| र | चं | मं | बु | गु | शु | श | रा | के |
| ५ | ५ | ८ | ५ | १० | ७ | ५ | ० | ० |

स्थिरे न देया नापि शोध्याः द्विस्वभावे विलग्ने नव शोध्याः एवं केचिद्व्याचक्षते वयं पुनर्ब्रूमः यदि मिश्रलग्ने प्रथमो द्रेष्काणो भवति तदा नव देयाः द्वितीयेन देया नापि शोध्याः तृतीयेन व शोध्याः एवं कृत्वा तस्य राशेस्त्रिघनेन सप्तविंशत्या भागमपहृत्या वा मंत्याज्यं तत्र यावत्संख्योंकोवशेषो भवति तावत्संख्य मश्विन्यादितो यन्नक्षत्रं तन्नक्षत्रं तस्य प्रष्टुर्वक्तव्यं केचिद्वदंति यथास्थितस्य राशेः सप्तविंशत्या भागमपहृत्यावशेषांकं नवकदानेन विशोधनेन वा यथास्थितेनांकेन संवाद उपपद्यते तथा नक्षत्रं वक्तव्यं एवमित्यादि कलत्र सहजात्मज शत्रुभेभ्य इति भार्या भर्तृ पुत्र रिपु भ्रातृ नष्टजातकं यदा पृच्छति तदा तद्भेभ्य- ११५
स्तद्भावेभ्यः एवं प्रष्टुः पृच्छकस्य वदेद्ब्रूयात् तमेवोदयराशिं परिकल्पयेदित्यर्थः एतदुक्तं भवति यदि पुरुषः स्वपत्न्या नक्षत्रं पृच्छति तदा तात्कालिके ल

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ग्नेराशिषट्कंदेयं अथभ्रातुः पृच्छति तदाराशिद्वयंदेयमथपुत्रस्यपृच्छतितदाराशिचतुष्कंदेयमथशत्रोः पृच्छतितदाराशिपंचकंदेयं एवंकृत्वाय द्भवतितदेवोदयराशिपकल्प्य तद्गुणकारेणगुणयेच तस्यग्रहगुणकारेणचततस्तत्रप्राग्वन्नवकदानविशोधनेकृत्वासमविंशत्याभागमपहृत्यावशेषां कसमंयस्यप्रष्टापृच्छतितस्यनक्षत्रंवक्तव्यं एतदप्युपलक्षणार्थमेवत्रिराशिसहितात्तात्कालिकालग्नान्मित्रस्यवक्तव्यमेतन्नक्षत्रानयनमप्युपलक्षण मेवंसकलमपिनष्टजातकंवक्तव्यम् १० अथवर्षाद्यानयनंवसंततिलकेनाह वर्षर्तुमासेति वर्षादीनिसर्वाणिस्वविकल्पेनभागेहृतेयथापाठक्रमेणान- यितव्यानि तद्यथा तात्कालिकंलग्नंलिप्तापिंडीकृतंराशिगुणाकारहतंग्रहसंपर्कंचेद्ग्रहगुणकाराद्धतमपियदेकांतेस्थापितंतत्पुनरपिदशादिगुणंकार्यम् एतदुक्तंभवति सराशिःस्थानचतुष्टयेधार्यः एकत्रदशगुणोऽन्यत्राद्वितीयेऽष्टगुणोन्यत्रतृतीयेसप्तगुणः चतुर्थेपंचगुणः कार्यः यतउक्तं भूयोदशादि गुणितान्भूयः पुनरपिदशकाष्टसप्तविषयैर्गुणनीयाः ततस्तस्मिन्राशिचतुष्टयेप्राग्वन्नवकदानविशोधनेकृत्वास्वविकल्पैर्भागमपहृत्यावाप्तंव

वर्षर्तुमासतिथयो घुनिशंह्यधूडुनि वेलोदयर्क्षनवभागविकल्पनाः स्युः भूयोदशादिगुणिताः स्वविकल्पभक्ताद्व र्षादयोनवकदानविशोधनाभ्याम् ११ विज्ञेयादशकेष्वब्दाऋतुमासास्तथैवच अष्टकेष्वपिमासार्द्धास्तिथयस्स्त तथास्मृताः १२

र्षादयो ज्ञेयाः ११ अथतज्ज्ञायतेकस्माद्राशेः कस्यानयनंकार्यंतदनुष्टुप्त्रयेणाह विज्ञेयादशकेष्वब्दाइति अत्रबहुवच नंबहुधोपयोगित्वात्कृतं यदुक्तं स्वविकल्पभक्ताद्वर्षादयस्तद्व्याख्यायते एतेचत्वारो राशयः स्थापितास्तेषांनवकदानविशोधनंकृत्वाकर्मयोग्याः सर्वेभवंति ततोदशगुणस्यपृथक्स्थस्यपरमायुषाविंशत्यधिकेनवर्षशतेनभागमपहृत्यऋतुसंख्ययोंकोवशिष्यतेतदंकसमंतस्यवर्षसंख्यानं वर्त्तते तस्यैववह्निर्भागमपहृत्यऋतुसंख्ययातत्रयोंकोवशिष्यते तदंकसमेशिशिरादारभ्यर्तौजातइतिवक्तव्यम् तस्यैवतुमाससंख्ययाद्वाभ्यांभागमपहृ त्यायद्येकोवशिष्यते तदाज्ञाततेर्तौप्रथमेमासिजातइतिवक्तव्यम् अथशून्यमवशिष्यते तदाद्वितीयेमासिजातः एवंकृत्वादशगुणः कर्मयोग्योराशिरपास्यः यस्यविंशत्यधिकाद्वर्षशतादप्यधिकंजन्मतोतीतं तस्यनष्टजातकज्ञानोपायएवनास्ति अष्टकेष्वित्यादि योसावष्टहतोराशिस्तस्यपृथक्स्थस्यकर्मयोग्य स्यपक्षसंख्ययाद्वाभ्यांभागमपहृत्ययद्येकोवशिष्यते तदाशुक्लपक्षेजातइतिवक्तव्यम् नकिंचिदवशिष्यते तदाकृष्णपक्षेतस्यैवतिथिसंख्ययापंचद- शभिर्भागमपहृत्य योंकोवशिष्यते तदंकसमानेतिथौजातइतिवक्तव्यम् एवंकृत्वाष्टगुणः कर्मयोग्योराशिरपास्यः १२ ७ ५ ३

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दिवेत्यादि योसौ समस्तहतो राशिस्तत्र भागवद्देवनवकदानविशोधने कृत्वा तत्कर्मयोग्यं राशिं स्थापयेत् तस्य दावारात्रिसंख्यया द्वाभ्यां भागमप
हृत्य यद्येकोवशिष्यते तदा दिवसेजातोऽथनकिंचिदवशिष्यते तदा रात्रौजातइति वक्तव्यम् योसौ समहतोराशिस्तस्य नक्षत्रसंख्यया सप्तविंशत्या-
भागमपहृत्य योंकोवशिष्यते तदंकसंख्ये नक्षत्रेऽश्विन्यादितआरभ्य जातनक्षत्रंइति वक्तव्यं अस्यकर्मणः पुनरभिधानंनक्षत्रानयनस्य बाहु-
ल्योपयोगित्वात् १३ वेलेत्यादि यस्मिन्दिने पुरुषस्य जन्मज्ञातं तद्दिनप्रमाणं घटिकादिकं कर्तव्यम् रात्रौचेत्तदा रात्रिप्रमाणं ततः पंचगुणस्यांश
शेस्तेन दिनप्रमाणेन रात्रिप्रमाणेन भागमपहृत्य योंकोवशिष्यते तस्मिन्काले दिनगते रात्रिगते वा तस्य जन्म वक्तव्यम् अथ विलग्नमित्यादि अथ
शब्दः पादपूरणार्थे काले ज्ञाते राश्यादिलग्नं कर्तव्यम् ततस्तस्य होराद्रेष्काणनवांशद्वादशांशत्रिंशांशभागाः कर्त्तव्याः तात्कालिकाग्रहाश्च कर्त्तव्याः
ततो यथाभिहितेन विधिना दशांतर्दशाष्टकवर्गादेरभिहितस्य फलस्य निर्देशः कार्यः एवं नष्टजातकं साधयेत् १४ अथप्रकारांतरेण नक्षत्रानयन

दिवारात्रिप्रसूतिं च नक्षत्रानयनं तथा सप्तकेष्वपि वर्गेषु नित्यमेवोपलक्षयेत् १३ वेलामथ विलग्नं च होरामंशकसे
वच पंचकेषु विजानीयान्नष्टजातकसिद्धये १४ संस्कारनाममात्राद्विगुणाच्छायांगुलैः समायुक्ता शेषं त्रिनवकभ-
क्तान्नक्षत्रं तद्धनिष्ठादि १५ द्वित्रिचतुर्दशदशतिथिसप्तत्रिगुणानवाष्टचैंद्राद्याः पंचदशाप्तास्तद्दिङ्मुखान्विताप्तध
निष्ठादि १६

आर्ययाह संस्कारनामेति स संस्कारेण नाम संस्कारनाम तस्य मात्राः संस्कारेणागतस्य नाम्नो मात्राः संस्कारनाममात्राः
संस्कारग्रहणे नैतत्प्रतिपादितं भवति संस्कारेण यत्पुरुषस्य नाम कृतं तस्य मात्रा ग्राह्याः नान्यस्य कस्यचित्कुनामादेः मात्राश्चेह गृह्यंते हल् अर्द्धमा
त्रिकः अच् मात्रिकः इत्यनया स्थित्या ताः संस्कारनाममात्राः संगृह्य द्विगुणीकार्याः ततस्तात्कालिकानि शंकुछायांगुलानि गृहीत्वा ताद्विगुणमात्रा
स्तैरंगुलैः संयुक्ताः कार्याः एवं कृते यद्भवति तस्य त्रिनवकेन सप्तविंशत्या भागमपहृत्य यः शेषो भवति तदंकसमं तस्य धनिष्ठादित आरभ्य नक्षत्रं
वक्तव्यम् १५ अथनक्षत्रानयनं प्रकारांतरेणार्ययाह द्वित्रिचतुर्दशेति पूर्वाभिमुखो यदा प्रष्टा पृच्छति तदा द्वयोरंकाः स्थाप्याः अथाग्नेया
भिमुखस्तदा त्रयाणां अथदक्षिणाभिमुखस्तदा चतुर्दशानां अथ नैर्ऋत्याभिमुखस्तदा दशानां अथपश्चिमाभिमुखस्तदा तिथि संख्यानां पंच
दशानां अथ वायव्याभिमुखस्तदा सप्तत्रिगुणा एकविंशतिः उत्तराभिमुखस्तदा नवानां ऐशान्याभिमुखस्तदाष्टानां तद्यथा एवं दिगभिमुखप्रष्टृवशेनांकं गृहीत्वा-



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ततः पंचदशगुणः कार्यः ततस्तस्मिन्प्रदेशेयावंतः उरुभास्तदभिमुखाः स्थितास्तत्संख्ययान्वितोऽसौ कः कार्यः एवंकृतेयद्भवतितस्यसप्तविंशत्याभागमपहृत्य यो कोवशिष्यतेतदंकसमंतस्यधनिष्ठाद्यारभ्यनक्षत्रंवक्तव्यम् १६ अथनष्टजातकोपसंहारंआर्ययाह इतिनष्टजातकमिति इतिशब्दः उपसंहारे मया वराहमिहिराचार्येणनष्टजातकबहुप्रकारंबहुभेदंविनिर्दिष्टम् उक्तमिदं अतोस्माद्धेतोः सच्छिष्यैः शोभनैःसच्छास्त्रैः ग्राह्यं यत्नात्परीक्ष्यविचार्य यथायेनप्रकारेणसंभवति सत्यरूपंतथाग्राह्यमिति येनप्रकारेणसंभवतितथागृहीतव्यमित्यर्थः बहुभिरागमैर्मयाविचार्यपराशरवसिष्ठयवनसत्यमणित्थादीनांमतानि आलोक्यकृतं तदेवभूयोनिर्मलगुणनिपुणबुध्याविचार्य संविदयाकार्यं येनस्फुटसिद्धोसौसंपद्यते १७ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौनष्टजातकाध्यायः षड्विंशतिःसमाप्तः २६ ॥ अथद्रेष्काणाध्यायोव्याख्यायते तत्रादौमेषाद्यद्रेष्काणस्यस्वरूपज्ञानंवैतालीयेनाह कट्यामिति कट्यांजघनेसितंश्वेतंवस्त्रसंवरंवेष्टितयेन कृष्णः अ

इतिनष्टजातकमिदंबहुप्रकारंमयाविनिर्दिष्टम् ग्राह्यमतःसच्छिष्यैःपरीक्ष्ययत्नाद्यथाभवति १७ इतिनष्टजातकाध्यायःसमाप्तः २६ अथद्रेष्काणाध्यायप्रारंभः कट्यासितवस्त्रवेष्टितःकृष्णःशक्तइवाभिरक्षितुं रौद्रःपरशुंसमुद्यतंधत्तेरक्तविलोचनःपुमान् १ रक्तांबराभूषणभक्ष्यचिंताकुंभाकृतिर्वाजिमुखीतृषार्त्ता एकेनपादेनचमेषमध्येद्रेष्काणरूपंयवनोपदिष्टम् २ क्रूरःकलाज्ञःकपिलःक्रियार्थीभग्नव्रतोभ्युद्यतदंडहस्तः ॥ ६ ॥ ॥

सितवर्णः शक्तइवअभिरक्षितुमाभिमुख्येन रक्षांकर्त्तुंशक्तः समर्थइव रौद्रोभीषणः यः परशुंकुठारंसमुद्यतं धत्तेधारयति रक्तेविलोचनेलोहिताक्षः सचपुमान्पुरुषः एषपुरुषद्रेष्काणः सायुधोभौमासक्तश्च १ अथमेषद्वितीयद्रेष्काणस्यस्वरूपमिंद्रवज्रयाह रक्तांबरेति रक्तांबरालोहितवस्त्रा भूषणमलंकरणं भक्ष्यंभोज्यं तत्रचिंतायस्याः कुंभाकृतिः घटोदरी वाजिमुखी अश्ववक्त्रा तृषार्त्तापिपासार्त्ता एकेनपादेनचरणेनोपलक्षिता इदंद्रेष्काणरूपंमेषमध्येमेषद्वितीयं यवनोपदिष्टं यवनाचार्यैःकथितं एषचतुष्पदद्रेष्काणः स्त्रीद्रेष्काणोऽर्कसक्तश्च यस्मादाचार्यैश्चतुष्पान्मुखाच्चतुष्पदद्रेष्काणइतिव्याख्यातस्तथाखगमुखोद्रेष्काणश्च २ अथमेषतृतीयद्रेष्काणस्यस्वरूपमिंद्रवज्रयाह क्रूरइति क्रूरोविषमस्वभावः कलाज्ञः कलावित् कपिलः पिंगलः क्रियार्थीकर्मस्वभिलाषुकः भग्नव्रतः स्खलितनियमः अभिमुख्येनोद्यतोदंडः हस्तेपाणौयस्य रक्तानिलोहितानिवस्त्राण्यं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

बराणिबिभर्त्तिधारयति चंडः क्रोधशीलः अयंमेषतृतीयस्त्रिभागोद्रेष्काणः कथितःउक्तः एषनरद्रेष्काणःसायुधोजीवसक्तश्च ३ अथवृ
षप्रथमद्रेष्काणजातस्य स्वरूपंदोधकेनाह कुंचितेति कुंचिताः कुटिलाःलूनाः कचाःकेशायस्याःकुटिलछिन्नकेशा घटदेहा कुंभसदृशोदरी दग्ध
पटा दग्धवस्त्रा तृषितापिपासार्त्ता अशनेभोजने चित्तंयस्याः आभरणानि भूषणानिअभिवांच्छति साचनारीस्त्री इदंवृषभप्रथमस्यद्रेष्काण
स्यस्वरूपं एषः स्त्रीद्रेष्काणः साग्निकः शुक्रसक्तश्च ४ अथवृषद्वितीयद्रेष्काणस्यस्वरूपंस्वागतयाह क्षेत्रधान्येति क्षेत्रंकेदारः धान्यानिशालयः
गृहंवेश्मधेनुःगौः कलाःगीतवाद्यनृत्यलेखचित्रकर्मादि एतासांज्ञःपंडितः लांगलेहलेसशकटेशकटसहितेकुशलःशिक्षितः गोपतितुल्यंवृषभ
सदृशंस्कंधंककुदमुद्वहति धारयति क्षुत्परःक्षुधयार्त्तः अजवदनःछागवक्त्रः मलवासामलिनांबरः एषोनरद्रेष्काणःचतुष्पादद्रेष्काणोबुधसक्त-

रक्तानिवस्त्राणिबिभर्त्तिचंडोमेषेतृतीयःकथितस्त्रिभागः ३ कुंचितलूनकचाघटदेहादग्धपटातृषिताशनचित्ता
आभरणान्यभिवांच्छतिनारीरूपमिदंवृषभेप्रथमस्य ४ क्षेत्रधान्यगृहधेनुकलाज्ञोलांगलेसशकटेकुशलश्च
स्कंधमुद्वहतिगोपतितुल्यंक्षुत्परोजवदनोमलवासाः ५ द्विपसमकायःपांडुरदंष्ट्रःशरभसमांघ्रिःपिंगलमूर्त्तिः अवि
मृगलोभव्याकुलचित्तोवृषभवनस्यप्रांतगतोयम् ६ सूच्याश्रयंसमभिवांछतिकर्मनारीरूपान्विताभरणकार्यकृ-
तादराचहीनप्रजोच्छ्रितभुजार्तुमतीत्रिभागमाद्यंतृतीयभवनस्यवदंतितज्ज्ञाः ७

श्च ५ अथवृषतृतीयद्रेष्काणस्यरूपमंदो
धकेनाह द्विपसमकायइति द्विपसमकायोमहाशरीरोहस्तितुल्यदेहः नपुनःहास्तिशरीरः पांडुरदंष्ट्रः श्वेतदंतः शरभसमांघ्रिः वृहत्पादोनपुनः शरभ
सदृशपादः पिंगलमूर्त्तिः कपिलदेहः अविःप्रसिद्धःमृगआरण्यपशुः अविमृगलोभार्थंव्याकुलंचित्तंयस्य अयंवृषभवनस्यवृषराशेःप्रांतगतस्तृतीय
द्रेष्काणःचतुष्पादःसौरसक्तश्च ६ अथमिथुनस्यप्रथमद्रेष्काणस्यस्वरूपज्ञानंवसंततिलकेनाह सूच्याश्रयमिति नारीस्त्रीसूच्याश्रयंकर्मसीव
नक्रियांसम्यगभिवांच्छतिइति रूपान्वितासुरूपा आभरणकार्येभूषणकर्मणिकृतआदरोअभिलाषोश्रद्धायया हीनप्रजा अपत्यरहिता उच्छ्रित
भुजोर्ध्वबाहुकीऋतुमतीसार्त्तवाकामार्त्तावा तृतीयभवनस्यमिथुनस्याद्यं प्रथमंत्रिभागंद्रेष्काणं तज्ज्ञाःपंडिताःप्रवदंतिकथयंति एषस्त्रीद्रेष्का-
णोबुधसक्तश्च ७ अथमिथुनद्वितीयद्रेष्काणस्यस्वरूपमुपजातिकयाह उद्यानसंस्थइति उद्यानसंस्थःउपवनेतिष्ठति कवचीसंनाह प्रावृतशरीरः



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

धनुष्मान् चापहस्तः शूरो रणप्रियः शरास्त्रधारी वा पाठः शराः कांडानि तान्येवास्त्राणि तद्धारणे शूलं यस्येति गरुडाननोपक्षिसदृशवक्त्रः क्रीडनं क्रीडा आत्मजा पुत्राः अलंकरणमाभरणम् अर्थो वित्तं एषां संबंधिनीं चिंतां करोति अथ मिथुनस्य राशेर्मध्ये द्वितीयद्रेष्काण इत्यर्थः एष नरद्रेष्काणः सायुधः खगद्रेष्काणः शुक्रसत्कश्च ८ अथ मिथुनस्य तृतीयद्रेष्काणस्वरूपं स्वागतयाह भूषित इति भूषितोलंकृतः वरुणवत्समुद्रवत् बहुरत्नः प्रभूतमणिः तूणं शराधानं कवचं सन्नाहः एतौ बद्धौ ग्रंथितौ येन सधनुष्कः चापयुक्तः नृत्ते वादित्रे वाद्यविषये कलासु च चतुः शेषासु विद्वांस्तज्ज्ञः काव्यकृत् पंडितः काव्यकर्मकार्यं तत्करोति एषा मिथुनस्य राशेरवसाने तृतीयद्रेष्काण इत्यर्थः एषः नरद्रेष्काणः सायुधः सौरसत्कश्च ९ अथ कर्कटपूर्वस्य स्वरूपं स्वागतयाह पत्रेति पत्राणि मूलानि फलानि च बिभर्त्ति धारयति द्विपकायो हस्तिसदृशशरीरः कानने मलयगः मलयश्चंदनवृक्षः तत्रोपगतः स्थितः शरभांघ्रिः

उद्यानसंस्थः कवची धनुष्मान् शूरोस्त्रधारी गरुडाननश्च क्रीडात्मजालंकरणार्थचिंतां करोति मध्ये मिथुनस्य राशेः ८
भूषितो वरुणवद्बहुरत्नो बद्धतूणकवचः सधनुष्कः नृत्तवादित्रकलासु च विद्वान्काव्यकृन्मिथुनराश्यवसाने ९ पत्रमूल
फलभृद्द्विपकायः कानने मलयगः शरभांघ्रिः क्रोडतुल्यवदनो हयकंठः कर्कटे प्रथमरूपमुशंति १० पद्मार्चि-
ता मूर्द्धनि भोगियुक्ता स्त्री कर्कशारण्यगता विरौति शाखां पलाशस्य समाश्रिता च मध्ये स्थिता कर्कटकस्य राशेः
११ भार्याभरणार्थमर्णवं नौस्थो गच्छति सर्पवेष्टितः हैमैश्च युतो विभूषणैश्चिपिटास्योंत्यगतश्च कर्कटे १२ ७

शरभसदृशपादः क्रोडः सूकरस्तत्तुल्यवदनः तत्सदृशवक्त्रः हयकंठो अश्वग्रीवः कर्कटे कर्कटराशौ प्रथमद्रेष्काणस्य स्वरूपमुशंति कथयंति एष द्रेष्काणश्चतुष्पाच्चंद्रसत्कश्च १० अथ कर्कटद्वितीयद्रेष्काणस्य स्वरूपमिंद्रवज्रयाह पद्मार्चितेति स्त्री योषित् मूर्धनि शिरसि पद्मैः कमलैरर्चिता पूजिता भोगियुक्ता ससर्पा कर्कशा कठिनयौवनोपेता अरण्यगता एकांतस्थिता विरौति आक्रोशयति पलाशवृक्षस्य शाखां लतां समाश्रिता तत्रासक्ता स्थिता कर्कटस्य राशेर्मध्ये स्थिता द्वितीयद्रेष्काणे सम्यक्स्थिता एष स्त्रीद्रेष्काणो व्यालद्रेष्काणो भौमसत्कश्च ११ अथ कर्कटस्य तृतीयद्रेष्काणस्य स्वरूपं वैतालीयेनाह भार्येति भार्या जाया तस्या आभरणार्थं अलंकरणनिमित्तमर्णवं समुद्रं नौस्थो नावमारूढः सर्पवेष्टितांगो गच्छति याति हैमैः सुवर्णनिर्मितैः विभूषणैरलंकरणैर्युतः चिपिटास्यः चर्पटमुखः कर्कटेंत्यगतः तृतीयद्रेष्काण इत्यर्थः एष नरद्रेष्काणो व्यालद्रेष्काणो जीवसत्कश्च १२ ७

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथसिंहपूर्वस्यद्रेष्काणस्यस्वरूपज्ञानंरथोद्धतयाह शाल्मलेरिति शाल्मलिवृक्षस्योपर्यग्रेगृध्रःपक्षी जंबुकः शृगालः एतोस्थितोनथाश्वासारमेयः-
नरोमनुष्यः सचमलिनैः मलोपेतैरंबरैर्वस्त्रैरन्वितोयुक्तः मातृपितृविप्रयोजितोजननीजनकविरहितोरौत्याक्रंदयति इदमाद्यंप्रथमंरूपंसिंहस्यो-
च्यते कथ्यते सिंहप्रथमद्रेष्काणइत्यर्थः एषनरद्रेष्काणश्चतुष्पदद्रेष्काणः खगद्रेष्काणोर्कसक्तश्च १३ अथसिंहद्वितीयस्यस्वरूपंवंशस्थेनाह
हयाकृतिरिति हयाकृतिः अश्वाकारः पांडुरमीषच्छुक्लयुक्तंमाल्यंपुष्पनिचयं शेखरेशिरसियस्यकृष्णाजिनंकृष्णमृगचर्मकंबलमौर्णिकंबिभर्ति
धारयति केचित्कृष्णाजिनचीवरमितिपठंति चीवरजीर्णवासः नरोमनुष्योदुरासदः दुर्जेयः दुःसाध्यः सिंहइवआत्तकार्मुकः गृहीतचापःनताग्र
नासः नताग्रनासायस्यमृगराजस्यसिंहस्यमध्योद्वितीयोद्रेष्काणः हयाकृतिः पुरुषएवायंनचतुष्पदद्रेष्काणः एषनरद्रेष्काणः सायुधोजीवसक्त

शाल्मलेरुपरिगृध्रजंबुकौश्वानरश्चमलिनांबरान्वितः रौतिमातृपितृविप्रयोजितःसिंहरूपमिदमाद्यमुच्यते १३
हयाकृतिःपांडुरमाल्यशेखरोबिभर्तिकृष्णाजिनकंबलंनरः दुरासदःसिंहइवात्तकार्मुकोनताग्रनासोमृगराजमध्यमः
१४ अथसिंह वानरतुल्यचेष्टोबिभर्तिदंडंफलमामिषंच कूर्चीमनुष्यःकुटिलैश्चकेशैर्मृगेश्वरस्यांत्यगतस्त्रिभागः १५
पुष्पप्रपूर्णेनघटेनकन्यामलप्रदिग्धांबरसंहतांगी वस्त्रार्थसंयोगमभीष्टमानागुरोःकुलंवांछतिकन्यकाद्यः १६
पुरुषःप्रगृहीतलेखनिःश्यामोवस्त्रशिराव्ययायकृत् ॥१॥ श्च १४ अथसिंहतृतीयस्यस्वरूपमुपजातिकयाह ऋक्षाननइति ऋ
क्षः प्राणीऋक्षाननः ऋक्षसदृशवक्त्रः वानरतुल्यचेष्टः वानरेणकपिनातुल्यासदृशाचेष्टास्वभावोयस्य दंडंआयुधंफलंआम्रादि आमिषंमांसंचबिभ
र्तिधारयति कूर्चीदीर्घश्मश्रुः मनुष्यः पुरुषः कुटिलैः केशैर्मूर्द्धजैर्युक्तः मृगेश्वरस्यसिंहस्यांत्यगस्त्रिभागः एषनरद्रेष्काणःचतुष्पदद्रेष्काणः सायुधोभौम
सक्तश्च १५ अथकन्यापूर्वस्यस्वरूपमुपजातिकयाह पुष्पप्रपूर्णेनेति कन्याकुमारीपुष्पप्रपूर्णेनकुसुमपरिपूरितेनकुंभेनउपलक्षितामलप्रदिग्धैरति
मलोपेतैः अंबरैर्वस्त्रैः संहतांगी संहतावयवा वस्त्राण्यंबराणि अर्थोधनं एषांसंयोगमभीष्टमानावांछमानागुरोःकुलंव्रजतिगच्छति कन्यकाद्यःप्रथम
द्रेष्काणः एषस्त्रीद्रेष्काणोबुधसक्तश्च १६ अथकन्याद्वितीयस्यस्वरूपंवैतालीयेनाह पुरुषोनरः प्रगृहीतलेखनिः येनाक्षराणिलिख्यंतेसालेखनिः ११८
श्यामोश्यामवर्णः वस्त्रशिराः कर्पटसंयमितमूर्द्धा केचिद्वस्त्रशिरइतिपठंति संयमितशिराः व्ययंव्ययकृत् आयंप्रवेशंचकरोति गणयतिविपुलंवि-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्तीर्णकार्मुकंधनुर्बिभर्त्तिधारयति रोमव्याप्ततनुः रोमशशरीरः एषमध्यमोद्वितीयद्रेष्काणः एषनरद्रेष्काणःसायुधः सौरसक्तश्च १७ अथकन्या
तृतीयस्यज्ञानमुपजानिकयाह गौरीगौरवर्णा कधौताग्राणियस्मिन् दुकूलेपटविशेषेतेनशुभाच्छादिना केचित्तुदुकूलहस्ताइतिपठंति समुच्छ्रिताअ
त्यच्चा कुंभोघटः कटच्छुर्दर्वीमिसिद्धान्नग्रहोपयोगिकंलोहभांडंतत्करेहस्ते यस्याःदेवालयंसुरगृहंस्त्रीयुवतिः प्रयतासमाहितामद्वत्तागतमुधना
वदंतिकथयंतिमुनयः कन्यांत्यगतस्त्रिभागः तृतीयद्रेष्काणः एषस्त्रीद्रेष्काणः शुक्रसक्तश्च १८ अथतुलाद्यस्वरूपंवसंततिलकेनाह वीथ्यंत-
रेति वीथ्यंतरेमार्गमध्येय त्तदापणंप्रसारकःसमवस्थितस्तत्रगतः इदृग्पुरुषोनरस्तुलावान् तुलाहस्तः विद्यमानतुलःउन्मानेऊर्ध्वमानेतुलादिके
मानेमानशब्देनकुडवादौचतस्मिन्कुशलः नज्ञः प्रतिमानंयेनद्रव्याणिसुवर्णरत्नानि परिच्छिद्यंतेतेतुहस्ते यस्याः भांडंक्रयद्रव्यंतद्विद्यतेयस्य

पुरुषःप्रगृहीतलेखनिः श्यामोवस्त्रशिरस्व्ययायकृत् विपुलंचबिभर्त्तिकार्मुकंरोमव्याप्ततनुश्चमध्यमः १७
गौरीसुधौताग्रदुकूलशुभा समुच्छ्रिताकुंभकटच्छुहस्ता देवालयंस्त्रीप्रयताप्रवृत्तावदंतिकन्यान्त्यगतस्त्रिभागः १८
वीथ्यंतरापणगतःपुरुषस्तुलावानुन्मानमानकुशलःप्रतिमानहस्तः भांडंविचिंतयतितस्यचमूल्यमेतद्रूपंवदंति
यवनाःप्रथमंतुलायाः १९ कलशपरिगृह्यविनिःपतितुमभीप्सतिगृध्रमुखःपुरुषः क्षुधितस्तृषितश्चकलत्रसु
तान्मनसेतितुलाधरमध्यगतः २० विभीषयन्तिष्ठतिरत्नचित्रितोवनेमृगान्कांचनतूणवर्मभृत् ॥१॥ ७. ७.

विचिंतयति ध्यायति तस्यभांडस्यैतन्मूल्यमिति तस्यचभांडस्यचमूल्यंविचिंतयति एतद्यवनास्तुलायाःप्रथमद्रेष्काणस्यरूपंवदंतिकथ
यंति एषनरद्रेष्काणःशुक्रसक्तश्च १९ अथतुलाद्वितीयस्यस्वरूपंत्रोटकेनाह कलशमिति गृध्रः पक्षी गृध्रमुखोगृध्राननः पुरुषः कलशंकुंभं
गृहीत्वा विनिःपतितुंनिर्विशेषंपतितुमभीप्सतिवांच्छति यतः क्षुधितोबुभुक्षितः तृषितः पिपासितोतः कलत्रंभार्यासुतान्पुत्रान्मनसा
चित्तेनैतिगच्छति अभीप्सति अभिलषतिस्मरतीत्यर्थः इत्येवंप्रकारः तुलाधरमध्यगतःतुलाद्वितीयद्रेष्काणः एषनरद्रेष्काणः खगद्रेष्काणः
शनैश्चरसक्तश्च २० अथतुलतृतीयस्यस्वरूपंवंशस्थेनाह विभीषयन्निति रत्नचित्रितोमणिभिर्विभूषितः वनेरण्येमृगान्हरिणान्विभी
षयन् भीषांकुर्वन्तिष्ठति कीदृशः कांचनंसौवर्णंतूणंशराधानंवर्मसन्नाहं तेचबिभर्त्तिधारयति फलान्यामिषंचमांसंबिभर्त्तिनरोमनुष्योवान

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ररूपभृत् वानरस्य कपेरिव रूपं बिभर्ति धारयति फलान्याम्रादीनि केचिद्दुर्दुर्दरः किंनररूपभृन्नरः इति पठंति धनुर्द्धरः चापहस्तः किन्नरो
देवयोनिरश्वमुखः पुरुषः तुलावसाने तुलस्य तृतीयद्रेष्काणे यवनैः पुराणयवनै रुदाहृतः कथितः नरो मनुष्यो वानराकारो ऽयं चतुष्पदद्रेष्का-
णो बुधसक्तश्च २१ अथ वृश्चिकप्रथमस्य स्वरूपमुपजानिकयाह वस्त्रैरिति नारी स्त्री वस्त्रैरंबरैस्तथाभरणैरलंकरणैश्च विहीना वर्जिता
महासमुद्रान्महासागरात् कूलं समुपैत्यागच्छति स्थानच्युता स्वस्थानात् भ्रष्टा सर्पनिबद्धपादा भुजगनियमितचरणा मनोरमा चित्तानंदवि
धायिनी चित्ताल्हादकरी वृश्चिकराशेः पूर्वः प्रथमद्रेष्काणः एष स्त्रीद्रेष्काणो व्यालद्रेष्काणो भौमसक्तश्च २२ अथ वृश्चिकद्वितीयस्य स्वरू
पं दोधकेनाह स्थानेति नारी स्त्री स्थानसुखानि अभिवांछति भर्तृकृते पतिनिमित्तं भुजगावृतदेहा सर्पव्याप्तशरीरा कच्छपः कूर्मः कुंभो घटः
तत्समानशरीरा तत्तुल्यदेहा वृश्चिके मध्यमरूपं द्वितीयं द्रेष्काणमुशंति कथयंति एष स्त्रीद्रेष्काणो व्यालद्रेष्काणः जीवसक्तश्च २३ अथ वृश्चिकतृ

फलामिषं वानररूपभृन्नरस्तुलावसाने यवनैरुदाहृतः २१ वस्त्रैर्विहीनाभरणैश्च नारी महासमुद्रात्समुपैति कूलं
स्थानच्युता सर्पनिबद्धपादा मनोरमा वृश्चिकराशिपूर्वः २२ स्थानसुखान्यभिवांछति नारी भर्तृकृते भुजगावृतदेहा
कच्छपकुंभसमानशरीरा वृश्चिकमध्यमरूपमुशंति २३ पृथुलचिपिटकूर्मतुल्यवक्त्रः श्वमृगवराहशृगालभीषका
री अवति च मलयाकरप्रदेशं मृगपतिरंत्यगतस्य वृश्चिकस्य २४ मनुष्यवक्त्रो ऽश्वसमानकायो धनुर्गृहीत्वायतनाश्रम
स्थः क्रतूपयोज्यानि तपस्विनश्च रक्षत्यपूर्वो धनुषस्त्रिभागः २५

तीयस्वरूपज्ञानं पुष्पितायायाह पृथुलचिपिटमिति पृथुलंवि-
स्तीर्णं चिपिटं चर्पटं कूर्मतुल्यं कच्छपसदृशं वक्त्रं मुखं यस्य श्वा सारमेयः मृगो हरिणः सृगालः क्रोष्टा वराहः सूकरः एषां भीषकारी भयकारी मलय
स्य चंदनस्याकरस्य प्रदेशं प्रसत्तिस्थानमवति रक्षति स च मृगपतिः सिंहः अंत्यगतो वृश्चिकस्य तृतीयद्रेष्काणः एषः कूर्माननः सिंहद्रेष्काणः चतु-
ष्पदद्रेष्काणः चंद्रसक्तश्च २४ अथ धन्विपूर्वस्य स्वरूपज्ञानमिंद्रवज्रयाह मनुष्यवदिति मनुष्यवक्त्रो नरवदनः अश्वसमानकायः तुरगसदृशदे
हः आयतं दीर्घं धनुश्चापं गृहीत्वा आश्रमस्थः तत्राश्रमे तिष्ठति क्रतूपयोज्यानि यज्ञोपकरणादीनि यज्ञभांडानि स्रुक्स्रुवादीनि तपस्विनः ता ११९
पसान् रक्षति अवति रक्षितवान् आद्यः प्रथमो धनुषस्त्रिभागो धन्विद्रेष्काणः केचिच्चररक्षत्पूर्व इति पठंति धनुषः पूर्वस्त्रिभागः प्रथमद्रेष्काणः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एषोऽश्वसमानकायः नरद्रेक्काणः चतुष्पात्सायुधद्रेक्काणः जीवसक्तश्च २५ अथधन्विद्वितीयस्यस्वरूपज्ञानमुपजातिकयाह मनोरमेति मनोर
माचित्ताल्हादकारिणी चंपकंपुष्पविशेषः हेमसुवर्णं तत्सदृशवर्णा तत्समकांतिः भद्रासनेआसनविशेषेतिष्ठति तत्रउपविष्टा मध्यमरूपा नचाति
शोभना नाप्यत्यशोभनासमुद्ररत्नानि सागरमणीन् विघट्टयंतीस्त्रीतिष्ठति धनुषोमध्यत्रिभागोद्वितीयद्रेक्काणोमुनिभिः प्रदिष्टउक्तः ॥
एषस्त्रीद्रेक्काणोभौमसक्तश्च २६ अथधन्वितृतीयस्यस्वरूपमुपजातिकयाह कूर्चीनरइति नरोमनुष्यः कूर्चीदीर्घश्मश्रुः हाटकंसुवर्णंचंपकःपुष्प
विशेषः तदाभोतत्सदृशकांतिः तत्समानद्युतिः वरासनेप्रधानासनेनिषण्णः उपविष्टः दंडधरोदंडहस्तः कौशेयकानिपट्टविशेषाणि उद्वहन्धारय-
न्ति अजिनंमृगचर्म नवमस्यराशेर्द्धनुषः तृतीयद्रेक्काणस्यस्वरूपंएषनरद्रेक्काणःसायुधः अर्कसक्तश्च २७ अथमकरप्रथमस्यस्वरूपंदोधकेनाह
रोमेति रोमचितोरोमशः मकरोपमदंष्ट्रःमकरतुल्यदंष्ट्रःमकरोजलचरप्राणी सूकरस्यवराहस्य कायोदेहः तत्समानशरीरः तत्तुल्यतनुः योक्त्रकं

मनोरमाचंपकहेमवर्णाभद्रासनेतिष्ठतिमध्यरूपा समुद्ररत्नानिविघट्टयंतिमध्यात्रिभागोधनुषःप्रदिष्टः २६ कूर्ची
नरोहाटकचंपकाभोवरासनेदंडधरोनिषण्णः कौशेयकान्युद्वहतेजिनंचतृतीयरूपंनवमस्यराशेः २७ रोमचितोमक
रोपमदंष्ट्रःसूकरकायसमानशरीरः योक्त्रकजालकबंधनधारीरौद्रमुखोमकरप्रथमस्तु २८ कलास्वभिज्ञाब्जदला
यताक्षीश्यामाविचित्राणिचमार्गमाणा विभूषणालंकृतलोहकर्णायोषाप्रदिष्टामकरस्यमध्ये २९ ७ ७

येनबलीवर्दायोज्यंते जालकःप्रसिद्धः येनपक्षिणोबध्यंते बंधनंनिगडादि एतानिधारयति तच्छीलः रौद्रमुखोवक्रिताननः मकरप्रथमः प्रथ
मद्रेक्काणः एषःपुरुषद्रेक्काणः बंधनधारित्वात्सनिगडः सूकरसमानशरीरः नसूकरः तस्मान्नचतुष्पात् शनैश्चरसक्तश्च २८ अथमकरद्वितीय
स्यस्वरूपजातिकयाह कलास्वभिज्ञाब्जदलायताक्षीति कलास्वभिज्ञाआभिमुख्येनजानाति अब्जदलायताक्षी अब्जदलंपद्मपत्रंतद्वदा-
यतेदीर्घेअक्षिणीयस्याः सादीर्घनेत्राचश्यामाश्यामवर्णाविचित्राणिनानाप्रकाराणिवस्तूनिचमार्गमाणाअभीप्समानाविभूषणेरलंकरणेरलंकृता
लोहकर्णालोहयुक्तश्रोत्रा लोहाभरणंकर्णयोर्यस्याः सायोषास्त्रीमकरस्यमध्येद्वितीयद्रेक्काणेप्रदिष्टाउक्ता एषःस्त्रीद्रेक्काणः शुक्रसक्तश्च २९
अथमकरतृतीयस्यस्वरूपंरथोद्धतयाह किंनरोपमेति किंनरोपमतनुः किन्नरादेवयोनयःअश्वमुखाः पुरुषास्तत्सदृशीतनुः सकंबलःकंबलेन

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सहितः तूणं शराधारं चापं धनुः कवचं सन्नाहः एतैस्तूणचापकवचैः शराधारतनुसन्नाहैः समन्वितो युक्तः कुंभं घटं रत्नविचित्रितं मणिविरचितं स्कं
धगं अंसासक्तं उद्वहति धारयति मकरराशेः पश्चिमस्तृतीयद्रेष्काण एष पुरुषद्रेष्काणः सायुधः बुधसक्तश्च ३० अथ कुंभप्रथमद्रेष्काणस्य स्वरू
पं बोधकेनाह स्नेहमद्यजलभोजनेति स्नेह स्तैलादि मद्यं पानविशेषः जलमुदकं भोजनमशनं एतेषां य आगमः तेन व्याकुलितं मनः चित्तं यस्य स
कंबलः कंबलसहितः कोशकारवसनः पट्टवासाः अजिनान्वितः कृष्णामृगचर्मयुक्तः गृध्रः पक्षी तत्तुल्यवदनः तत्समवक्त्रः घटादिगः कुंभप्रथम
द्रेष्काणः एष नरद्रेष्काणः सोऽरसक्तश्च ३१ अथ कुंभद्वितीयस्वरूपं वैतालीयेनाह दग्धेशकट इति शकटे गन्त्र्यां दग्धे अग्निना भस्मीकृते सशा
ल्मले शाल्मलवृक्षैः सहिते अंगना स्त्री लोहान्याहरते गृह्णाति वने अरण्ये मलिनेन पट्टेन समलेन वाससा संवृता प्रावृता भांडैः भांडप्रकारैः
मूर्ध्निगतैः मस्तकारोपितैः उपलक्षिता केचिद्भांडैः शरारोपितैः परिपूर्ण इति पठंति मध्यमो द्वितीयद्रेष्काणः एष स्त्रीद्रेष्काणः साग्निको बुधसक्त

किन्नरोपमतनुः सकंबलस्तूणचापकवचैः समन्वितः कुंभमुद्वहति रत्नचित्रितं स्कंधगं मकरराशिपश्चिमः ३०
स्नेहमद्यजलभोजनागमव्याकुलीकृतमनाः सकंबलः कोशकारवसनोऽजिनान्वितो गृध्रतुल्यवदनो घटादिगः ३१
दग्धेशकटे सशाल्मले लोहान्याहरतेंऽगना वने मलिनेन पटेन संवृता भांडैर्मूर्ध्निगतैश्च मध्यमः ३२ श्यामः सरोमश्र
वणः किरीटी त्वक्पत्रनिर्यासफलैर्बिभर्ति भांडानि लोहव्यतिमिश्रितानि संचारयत्यन्त्यगतो घटस्य ३३ स्रुग्भांडमु
क्तामणिशंखमिश्रैर्व्याक्षिप्तहस्तः सविभूषणश्च भार्याविभूषार्थमपांनिधानं नावा प्लवत्यादिगतो झषस्य ३४ ॥

श्च ३२ अथ कुंभतृतीयस्य स्वरूपज्ञानमिंद्रवज्रयाह श्यामइति श्यामः श्यामवर्णः सरोमश्रवणः लोमशकर्णः किरीटी मौलियुक्तः त्वक्चर्मपत्रं
पर्णं निर्यासो वृक्षनिर्यासः यथा गुग्गुलुः स्नेहः फलं च प्रसिद्धमेव आम्रादि एतैः सह भांडानि लोहव्यतिमिश्रितानि लोहसंयुक्तानि बिभर्ति धारय
ति तानि च संचारयति स्थानात् स्थानांतरं नयति घटस्य कुंभस्यांतगतः तृतीयद्रेष्काणः एष नरद्रेष्काणः शुक्रसक्तश्च ३३ अथ मीनाद्यस्य स्वरूपमिंद्र
वज्रयाह स्रुग्भांडेति स्रुग्भांडानि यज्ञोपकरणभांडानि मुक्ता मौक्तिकं मणयः प्रसिद्धाः शंखः प्रसिद्ध एव एतैर्मिश्रैरेकीकृतैः व्याक्षिप्तो हस्तो यस्य
आकुलकरः सविभूषणः साभरणः भार्या जाया तद्विभूषार्थमलंकरणार्थमपांनिधानं समुद्रं नावा प्लवति नौस्थो गच्छति केचिन्महार्णवं चनावा प्लव १२०

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तोपिपठंति झषस्यमीनस्यादिगतः प्रथमद्रेष्काणः एषनरद्रेष्काणोजीवस्वक्तश्च ३४ अथमीनद्वितीयस्य स्वरूपज्ञानंवसंततिलकेनाह अस्फःच्छ्रितेति अस्फच्छ्रिता अतीवोच्चाध्वजाः पताकायस्मिन्पोतेतत्सुपोति आरोहति जलधेः समुद्रस्य कूलंतटंप्रयाति प्रमदास्त्रीकीदृशीपरिवारयुक्ता सखीजनेनावृता चंपक पुष्पविशेषः चंपककांतिः सुवर्णवर्णेनचंपककांतिसुख्याति अपहरति एषःमीनस्यद्वितीयत्रिभागोमुनिभिर्गदितउक्तः एषःस्त्रीद्रेष्काणोचंद्रस्वक्तश्च ३५ अथमीनस्यतृतीयद्रेष्काणस्वरूपज्ञानमिंद्रवज्रयाह श्वभ्रांतिकेति श्वभ्रांतिकेगर्तसमीपेसर्पवेष्टितांगोभुजगावृतावयवः वस्त्रेरंबरैर्विहीनोरहितः पुरुषोनरः अटव्यांअरण्येचौरैस्तस्करैः अनलेनाग्निनाव्याकुलितः क्षुभितांतरात्मायस्य विक्रोशतेरोदिति झषस्यमीनस्यांत्योपगतः तृतीयद्रेष्काणः एषः व्यालद्रेष्काणः भौमस्वक्तश्चद्रेष्काणस्वरूपस्यप्रयोजनंप्रदेशेषुव्याख्यातं तथाचयात्रायांवक्ष्यति द्रेष्काणाकारचेष्टागुणसदृशफलंयोजयाद्बुद्धिहेतोद्रे ष्काणेसौम्यरूपेकुसुमफलयुतेरत्नभांडान्वितेच सौम्यैर्दृष्टेजयःस्यात्प्रहरणसदृशेपापदृष्टेचभंगः संमोहोवाथबंधःस्वभुजगनिगडेपापयुक्तःपि

अस्फच्छ्रितध्वजपताकमुपैतिपोतंकूलंप्रयातिजलधेःपरिवारयुक्ता वर्णेनचंपकसुखाप्रमदात्रिभागोमीनस्यचैषकथितोमु
निभिर्द्वितीयः ३५ श्वभ्रांतिकेसर्पनिवेष्टितांगोवस्त्रैर्विहीनःपुरुषस्त्वटव्यां चौरानलव्याकुलितांतरात्माविक्रोशतेंत्योपगतो
झषस्य ३६ इतिबृहज्जा० द्रेष्काणस्वरूपाऽध्यायःसमाप्तः २७ अथातउपसंहाराध्यायोव्याख्यायते राशिप्रभेदोग्रह
योनिभेदोवियोनिजन्माथनिषेककालः जन्माथसद्योमरणंतथायुर्दशाविपाकोष्टकवर्गसंज्ञः १

योजनंचौररूपस्यानादिज्ञानंउक्तंचषट्पंचाशिकायांपृथुयशसा अंशकाज्ज्ञायते द्रव्यंद्रेष्काणेस्तस्कराःस्मृताः राशिभ्यःकालदिग्देशोवयोज्ञातिश्च लग्नपात् एवंवृत्तानि ३६ इतिश्रीभट्टोत्पलविरचितायांबृह० द्रेष्काणाऽध्यायः २७ अथातउपसंहाराध्यायोव्याख्यायते अथाध्यायसंग्रहमुपजातिकयाह राशिप्रभेदइति राशिप्रभेदः प्रथमोध्याय ग्रहयोनिभेदोद्वितीयः २ वियोनिजन्मातृतीयः ३ अथशब्दोआनंतर्येनिषेककालश्चतुर्थः ४ जन्मविधिः पंचम ५ अथसद्योमरणमरिष्टाऽध्यायःषष्ठः ६ आयुर्विभागःसप्तमः ७ दशाविभागोष्टमः ८ अष्टकवर्गसंज्ञोनवमः ९ ॥ १ ॥ अथशेषाध्यायसंग्रहंशालिन्याह कर्माजीवइति कर्माजीवोदशमः १० राजयोगाऽध्यायएकादशः ११ खयोगाः नाभसयोगाध्यायोद्वादशः १२ चांद्रयोगाः सुनफाद्याश्चंद्रयोगाध्यायस्त्रयोदशः १३ द्विग्रहादिग्रहयोगाध्यायश्चतुर्दशः १४ प्रव्रज्यायोगाध्यायःपंचदशः १५ अथोनंतरंराशि-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शीलाध्यायः षोडशः १६ दृष्टिफलाध्यायः सप्तदशः १७ तस्मात्सरोभावाध्यायोऽष्टादशः १८ अथातः परमाश्रयाध्याय एकोनविंशतितमः १९
प्रकीर्णाध्यायो विंशतिः २०॥२॥ अथ शेषाध्यायसंग्रहं शालिन्याह अनिष्टयोगा इति अनिष्टयोगाध्याय एकविंशतिः २१ कामिनीनां स्त्रीणां जा
तकाध्यायो द्वाविंशतिः २२ निर्याणं मरणज्ञानाध्यायस्त्रयोविंशतिः २३ नष्टजातकाध्यायश्चतुर्विंशतिः २४ द्रेष्काणस्वरूपाध्यायः पंचविंशति २५
एवं पंचयुक्ताध्यायानां विंशतिः जन्मनि जातके उक्ता कथितोक्ता एतज्जातके ३ एवमिदानीं यात्रिके यात्रायां निबद्धमध्यायसंग्रहमभिधास्ये कथयि
ष्येन त्वोपजातिकयाह प्रश्नास्तिथिरिति प्रश्नाः प्रश्नप्रभेदाध्यायः तिथिस्तिथिबलाध्यायः भं नक्षत्राभिधानं दिवसो दिवसाभिधानं वारफललक्षणं
क्षणो मुहूर्तनिर्देशः चंद्रश्चंद्रबलाध्यायः लग्नं च लग्नविनिश्चयः अथानंतरं लग्नभेदो होराद्रेष्काणनवांशकद्वादशभागत्रिंशद्भागानां लक्षणं सफ

कर्माजीवो राजयोगाः खयोगाश्चांद्रायोगा द्विग्रहाद्याश्च योगाः प्रव्रज्याथो राशिशीलानि दृष्टिर्भावस्तस्मादाश्रयोथ प्रकीर्णः २
नेष्टा योगा जातकं कामिनीनां निर्याणं स्यान्नष्टजन्म द्रकाणः अध्यायानां विंशतिः पंचयुक्ता जन्मन्येतद्यात्रिकं चाभिधास्ये ३ प्र
श्नास्तिथिर्भं दिवसः क्षणश्च चंद्रो विलग्नं त्वथ लग्नभेदः शुद्धिर्ग्रहाणामथ चापवादो विमिश्रकाख्यं तनुवेपनं च ४ अतः
परं गुह्यकपूजनं स्यात्स्वप्नं ततः स्नानविधिः प्रदिष्टः यज्ञो ग्रहाणामथ निर्गमश्च क्रमाच्च दिष्टः शकुनोपदेशः ५ विवाहका
लः करणं ग्रहाणां प्रोक्तं पृथक्तद्विपुला च शाखा स्कंधैस्त्रिभिर्ज्योतिषसंग्रहोयं मया कृतो दैवविदां हिताय ६ लग्नग्रहाणां शुद्धिः

सफलं समस्तग्रहाणां कुंडलिकाफलं अथानंतरं अपवादाध्यायः विमिश्रकाख्यं मिश्रकाध्यायः तनुवेपनं देहस्पंदनं ४ शेषाध्यायस्य कीर्तन
मुपजातिकयाह अतः परमिति अतोऽस्मात्परं गुह्यकपूजनं स्यात् भवेत् स्वप्नं स्वप्नाध्यायः ततोनंतरं स्नानविधिः प्रदिष्टः उक्तः ग्रहाणां यज्ञो ग्रहय
ज्ञः अथानंतरं निर्गमः प्रस्थानिकं क्रमात्सपरिपाट्या दिष्ट उक्तः शकुनोपदेशः शकुनरुतज्ञानं एष यात्रायां संग्रहः ५ अथ शेषवस्तुसंग्रहमुपजाति
कयाह विवाहकाल इति विवाहकालो विवाहपटलं ग्रहाणां करणं पंचसिद्धांतिकायां प्राक्तं कथितं पृथग्विभज्य तद्विपुला तस्य करणस्य शुभाशु
भज्ञानाय विपुला विस्तीर्णा शाखा कथिता त्रिभिः स्कंधैरेतैर्गणितहोरासंहिताख्यैर्ज्योतिः शास्त्रसंग्रहो मया वराहमिहिराचार्येण दैवविदां सांव
त्सरिकानां हिताय हितार्थं कृतो विरचितः विस्तीर्णशास्त्राण्यालोच्य संक्षेपतो मया कृत इत्यर्थः ६ एतन्मालिन्याह पृथुविरचितमन्यैरिति एत

१२१

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

...महोदधौ अर्थिनासुखलब्ध्यै मयेयं विवृतिः कृतम् १ चिंतामणिरितिख्याताटीकाशास्त्रज्ञवल्लभा सर्वसार्द्धसह उ॰ सं॰
स्राणि ७५०० मानमस्याःसुनुष्टुभाम् २ प्रीतिं दोषं परित्यज्य टीकांसम्यग्विचार्यच उपयोग्यात्रशास्त्रेचेत्संग्राह्यानोपरोधनः ३ व्याख्येयंयन्म २८
याख्यक्तंयच्चयुक्तिविवर्जितम् भ्रांत्याविलिखितंयच्चतत्सर्वंस्फुटतांनयेत् ४ चैत्रमासस्यपंचम्यांसितायांगुरुवासरे वस्वष्टाष्टमितेशाके ८८८
कृतेयंविवृतिर्मया ५ विधायटीकांशास्त्रेऽस्मिन् यत्किंचित्पुण्यमर्जितम् तेननिर्मत्सरीभूयासौजन्यालंकृतोजनः ६ दीर्घस्वरोष्ट्यादिविधेयतां
ताह्राष्टादेशे ध्वंजनसप्तकेन स्वार्थंचवेद्यांसमवस्थितेन भाव्योत्सलेचैवलिखापितञ्च ७ इतिश्रीभट्टोत्पलकृताबृहज्जातकविवृत्तिःसमा
प्तोयंग्रंथः॥ ७॥ शुभंभूयात्॥ ॥ ७॥ हेंपुस्तक मुंबईंत विष्णुवासुदेव गडबोलेयाणीं शिळायंत्र छापखान्यांत छापून प्रसिद्ध केलें॥
शाके १७८९ रक्ताक्षीनामसंवत्सरे दक्षिणायने शरदऋतुः आश्विनेमासे शुक्लपक्षे १ प्रतिपद्यायांमंदवासरेयंग्रंथःसमाप्तः॥ शुभंभवतु॥



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्समस्तं सकलशास्त्रमन्यैराचार्यैर्यवनेश्वरादिभिः पृथुविस्तीर्णं विरचितं कथितं तदनु तदेव शोभनतरं मयातत्प्रदेशार्थं तदुपदिष्टार्थं लघुस्वल्पं कृतं तत्प्रदेशो
पियोर्थः सोस्मिन्नतात्पर्यार्थः हियस्मादर्थे इहास्मिन् शास्त्रे कृतं धीविषाणामलत्वे बुद्धिशृंगनिर्मलीकरणविषये समर्थं सुक्तमेतत् कृतं मया चेह संग्रहे यदुक्तम
शोभनसुक्तं कथितं तत्सज्जनैः पंडितैर्मम क्षम्यतां क्षन्तव्यमित्यर्थः ७ अथ कालविशेषेण कुकृतालपकृतयोश्च पुनः करणे सतां प्रार्थनायवसंततिलकेनाह ग्रंथ
स्येति अस्य ग्रंथस्य यत्सञ्चरतो विचरणमानस्य यद्विनाशमेति यानि लेखाल्लेखकदोषात् नत्र बहुश्रुतसुखाधिगमक्रमेण बहुश्रुतानां पंडितानां सुखादधिगम्य
ज्ञात्वा क्रमेण परिपाट्या विदुषा विदुषा पंडितेन रागं मात्सर्यं प्रहृत्य विहाय कर्तव्यं ते च शास्त्रार्थापेक्षया संस्कारेण समर्थाः यद्वा मया कुकृतं कुत्सितं कृतम् त-
थास्वल्पमपरिपूर्णं तद्विचार्य विचार्येण कर्तव्यमित्यर्थः तत्रादित्यदासाख्यस्य पितुर्नाम कापित्थाख्ये ग्रामे वरदनामादित्यदासाच्च विज्ञानागमं स्वनिवास
मुज्जयिन्यां च नाम होराशास्त्रं नाम च वसंततिलकेनाह ८ आदित्यदासेति आदित्यदासाख्यो ब्राह्मणः तस्य तनयः पुत्रः तस्मादेव पितुरादित्यदासादवा-

पृथुविरचितमन्यैः शास्त्रमेतत्समस्तं तदनु लघु मयेदं तत्प्रदेशार्थमेव कृतमिह हि समर्थं धीविषाणामलत्वे मम यदिह यदु
क्तं सुज्जनैः क्षम्यतां तत् ७ ग्रंथस्य यत्प्रचरतोस्य विनाशमेति लेख्याद्बहुश्रुतसुखाधिगमक्रमेण यद्वा मया कुकृतमल्पमिहाकृतं वा
कार्यं तदत्र विदुषा परिहृत्य रागम् ८ आदित्यदासतनयस्तदवाप्तबोधः कापित्थके सवितृलब्धवरप्रसादः आवंतिको मुनिमतान्यव
लोक्य सम्यग्घोरां वराहमिहिरो रुचिरां चकार ९ दिनकरमुनिगुरुचरणप्रणिपातकृतप्रसादमतिनेदम् शास्त्रमुपसंगृहीतं नमोस्तु
पूर्वप्रणेतृभ्यः १० इति बृहज्जातके वि० उपसंहाराध्यायः २८ प्तः बोधः ज्ञानं येन कापित्थाख्ये ग्रामे यो सौ भगवान् सविता सूर्यस्तस्माल्लब्धः

प्राप्तो वरः प्रसादो येन आवंतकः आवंतके देशे उज्जयिन्यां वास्तव्यः कोसौ वराहमिहिरः अयं मुनिमतादि ऋषिप्रणीतानि शास्त्राण्यवलोक्य विचार्य सम्यग्यथावस्तु
कृत्वा होरां जातकशास्त्रं रुचिरां शोभनां सुगमां चकार कृतवानिति ९ अथ सतां प्रणामपूर्वकानि शास्त्राणि प्रणामंतानि कृत्वा ततः शास्त्रावसाने पूर्वप्रणेतॄणां नमस्कार
मार्ययाह दिनकरेति दिनकरो र्कस्तदादिकाः सर्वएव ग्रहाः मुनयो वसिष्ठाद्याः गुरुरादित्यदासः तेषां चरणप्रणिपातेन पादनमस्कारकरणेन कृतो यः प्रसादोनुकंपा तेनानुन
[illegible]मति निर्बुद्धिर्यस्य तेन दिनकरमुनिगुरुचरण प्रणिपातकृतप्रसादमतिना मयेदं शास्त्रमुपसंगृहीतं स्वीकृतमस्ति तस्मात्पूर्वप्रणेतृभ्यः पूर्वशास्त्रकारेभ्यो नमोस्तु नम
[illegible]साद [illegible]म १० इति श्री भट्टोत्पलविरचितायां बृहज्जातकविवृत्तौ उपसंहाराध्यायः समाप्तः २८ ९ ९ ९ ९

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सूरेरित्यादि सूरेर्बृहस्पतेः सौम्योबुधः सितःशुक्रः एतावरीशत्रू रविसुतःसौरोमध्यस्थः अपरेअन्येरविचंद्रभौमाः अन्यथामित्राणीत्यर्थः सौम्यार्कीत्यादि शु
क्रस्यसौम्यार्कीबुधसौरौसुहृदौमित्रे कुजोभौमःगुरुर्जीवः एतौद्वौसमौमध्यस्थौ शेषावादित्यचंद्रावरीशत्रू शुक्रज्ञावित्यादि सौरस्यशनेः शुक्रज्ञौसितबुधौ
सुहृदौमित्रे सुरगुरुर्जीवः समोमध्यस्थः अन्येअपरे रविशशिभौमाः अरयः शत्रवः येप्रोक्ताइत्यादि येमयास्वत्रिकोणभादिषुर्वत्रिकोणभवना स्वांत्यधी
धर्मपाइत्यादिग्रंथेनोक्तास्तएवेह प्रविभज्यपुनर्भूयः प्रकीर्तिताःउदाहरणत्वेनप्रदर्शिताइति १७ एवंनैसर्गिकंमित्रामित्रमध्यस्थविभागमुक्त्वाधुनाता-
त्कालिकंमित्रामित्रविभागम् शार्दूलविक्रीडितेनाह अन्योन्येति अन्योन्यस्यपरस्परमेतेषुधनादिषुस्थानेषुग्रहस्यग्रहाव्यवस्थितास्तत्कालेजन्मनियात्रा
यांविवाहेप्रश्नेवातत्समयेसुहृदोमित्राणिभवंति धनस्थानंद्वितीयं व्ययस्थानंद्वादशमायस्थानंएकादशंसहजस्थानंतृतीयम् व्यापारस्थानंकर्माख्यं-
दशमंबंधुस्थानंचतुर्थंएतेषुस्थानेषुयोग्रहःस्थितः सयस्मात्ग्रहाद्व्यवस्थितस्तस्यसुहृन्मित्रंभवति सचतस्यापिभवति यतउक्तमन्योन्यस्येति स्वतुंग-

सूरेःसौम्यसितावरीरविसुतोमध्योपरेत्वन्यथासौम्यार्कीसुहृदौसमौकुजगुरूशुक्रस्यशेषावरी शुक्रज्ञौसुहृदौ
समःसुरगुरुःसौरस्यचान्येरयोयेप्रोक्ताःस्वत्रिकोणभादिषुपुनस्तेमीमयाकीर्तिताः १७ अन्योन्यस्यधनव्ययाय २१
सहजव्यापारबंधुस्थितास्तत्कालेसुहृदःस्वतुंगभवनेप्येकेरयस्त्वन्यथाद्व्येकानुक्तभपान्सुहृत्समरिपून्संचि-
त्यनैसर्गिकांस्तत्कालेचपुनस्तानानधिसुहृन्मित्रादिभिःकल्पयेत् १८

भवनेप्येकेइति एकेऽन्येपुनराचार्याःग्रहस्ययस्योच्चेयोग्रह
स्थितः सतस्यस्वोच्चस्थितंमित्रमिच्छंति तेचयवनेश्वरादयः तथाचतद्वाक्यम् मूलत्रिकोणाद्धनधर्मबंधुपुत्रव्ययस्थानगताग्रहेंद्राः तात्कालिकास्तेसुहृदोभवं
तिस्वोच्चेचयोयस्यविकृष्टवीर्यदति एतदप्याचार्यस्यनाभिप्रेतम् यस्मादनेनैवस्वल्पजातकेउक्तम् तत्कालेचदशायबंधुसहजस्वांत्येषुमित्रंस्थिताइति
अरयस्त्वन्यथेति अन्यथा अन्येनप्रकारेणग्रहस्यग्रहाव्यवस्थितास्तत्कालेऽरयःशत्रवोभवंति अन्योन्यमिति तद्यथा एकराशिगतःपंचमषष्ठसप्तमाष्ट
मनवमस्थानस्थश्चतत्कालंशत्रुर्ग्रहस्यग्रहोभवतिद्व्येकानुक्तभपानिति पूर्वमेवदर्शित द्वितीयभपानेकभपानतुक्तभपांश्चमित्रमध्यस्थशत्रून्नैसर्गि-
कान् शत्रून्मध्यस्थितानित्यादिनाग्रंथेनोक्तास्तान्संचिंत्यविज्ञायज्ञातात्कालेजन्मादौतानेवाधिसुहृन्मित्रादिभिरुपलक्षितान्कल्पयेत् तत्रधनादौनिमित्रस्थानानिते
षुनैसर्गिकसुहृत्स्थितोधिमित्रंभवतिमध्यस्थोमित्रम् शत्रुर्मध्यस्थइति धनादिवर्जितेष्वन्येषुस्थितोनैसर्गिकसुहृन्मध्यस्थोभवति मध्यस्थः शत्रुः शत्रुरधिशत्रु

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इति असुनाग्रहाणांचतुर्विधंबलम् स्थानदिक् चेष्टाकालबलाख्यम् १८ तत्रतावत्स्थानदिग्बलंदोधकेनाह स्वोच्चसुहृदिति स्वग्रहणंप्रत्येकमभिसंबध्यते तत्रस्वोच्चेस्थितोग्रहोबलवान् भवतिनात्कालिकस्यसुहृदोमित्रस्यक्षेत्रेस्थितोबलवानेव स्वत्रिकोणे आत्मीयेमूलत्रिकोणेस्थितः स्वनवांशेस्थितः स्वगृहेस्वराशावुपगतः प्राप्तोबलवानेवएतेषामन्यतमेव्यवस्थितोग्रहः स्थानबलयुक्तोभवति अत्रार्कस्यसिंहःस्वत्रिकोणं तदेवगृहंक्षेत्रम् चंद्रस्यवृषउच्चः सएवत्रिकोणं भौमस्यमेषःत्रिकोणं तदेवस्वक्षेत्रं बुधस्यकन्याउच्चःसैवमूलत्रिकोणंस्वक्षेत्रंच गुरोःधन्वीत्रिकोणंतदेवस्वक्षेत्रम् शुक्रस्यतुलात्रिकोणंतदेवस्वक्षेत्रं सौरस्यकुंभस्त्रिकोणंतदेवस्वक्षेत्रं एतेषामाचार्येणविशेषेणनोक्तः अस्माभिरन्यहोराशास्त्रादानीयशिष्यहितायेहलिख्यते तथाचसारावल्याम् विंशतिरंशाः सिंहेत्रिकोणमपरेस्वभवनमर्कस्य उच्चंभागात्रितयंवृषमिंदोःस्यात्त्रिकोणमपरेंशाः द्वादशभागामेषेत्रिकोणमपरेस्वभंतुभौमस्यउच्चफलम् कन्यायांबुधस्यातिथ्यंशकैःसदाचिंत्यम् परतस्त्रिकोणजाले पंचभिरंशैःस्वराशिजंपरतः दशभिर्भागैर्जीवस्यत्रिकोणफलंस्वभंपरं शुक्रस्यतुतिथयोंशास्त्रिकोणमपरेथटेस्वराशिश्च कुंभेत्रिकोणनिजभेरविजस्यरवेर्यथासिंहे एतदार्याचतुष्टयम् दिक्षुबुधांगिरसावित्यादि प्राच्याद्यासुचतसृषुदिक्षुक्रमाद्बुधादयोबलिनोभवंति तत्रपूर्वस्यांबुधांगिरसौज्ञजीवौबलिनौभवतःलग्नस्थावित्यर्थःदक्षिणस्यांरविभौमौसूर्यांगारकौदशमस्थावित्यर्थः पश्चिमायांसूर्यसुतःशनिःसप्तमस्थइत्यर्थःउत्तरस्यांसितशीतकरौशुक्रचंद्रौचतुर्थस्थावित्यर्थः योग्रहोयत्रबलीसतस्मात्सप्तमस्थानस्थोविबलोभवति मध्येत्वनुपातनउत्थमिति सर्वत्रेयंपरिभाषा ग्रहाणामुच्चनीचविभागेराशीनांदिग्बलप्रविभागेपि तथाचयवनेश्वरः पूर्वेदिवौपूर्वपूर्वविलग्नसंस्थौनभस्थलस्थौचदिवाकरौ सौरोथवाशुक्रनिशाकरौतुतुलेस्थितावन्यबलौभवेतामिति अन्यबलेग्रहाणामंतरेणुपातनइत्येवमुक्तंएवमुक्तःएतद्ग्रहाणांदिग्बलमुच्यते १९ अधुनाचेष्टाबलंदोधकेनाह उदगयनेति मकरादिराशिषट्कमुत्तरमयनं कर्कटादिराशिषट्कंदक्षिणमयनमिति उदगयनेउत्तरायणेरविशीतमयूखौसूर्यचंद्रमसौबलिनौभवतः परिशेषाःभौमबुधगुरुसितसौराः वक्रगावक्रगाः शेषाःसहाक्रांतमयोभौमादीनांपरपरीनगतयोबलिनोभवंति तथाच समागमगाश्चंद्रेणसहिताबलिनएव चंद्रेणसंयोगोग्रहाणांसमागमशब्दवाच्यः

स्वोच्चसुहृत्स्वत्रिकोणनवांशैःस्थानबलंस्वगृहोपगतेच दिक्षुबुधांगिरसौरविभौमौसूर्यसुतःसितशीतकरौच १९ चापे






CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्मरंफद्धम् उक्तंचाचार्यविष्णुचंद्रेण दिवसकरेणास्तमयः समागमः शीतरश्मिसहितानां कुजादीनां युद्धं निगदितं नेन्योन्ययुक्तानामिति विपुलकराइति
विपुलाः करायेषांते विपुलकराः विस्तीर्णरश्मयो बलिनोभवंति शीघ्रकेंद्रे द्वितीयतृतीयपदस्थे ग्रहस्य विपुलकरत्वं प्रायः संभवति वक्रासन्नत्वात् युधिसंग्रामे
चोत्तरसंस्था बलिन एव कुजादीनां युद्धमित्यर्थः तत्र यः उत्तरदिग्भागसंस्थितो जयी स च बलवान् उत्तरसंस्थत्वमत्रोपलक्षणार्थं यस्तु जयी स एव बलवा-
न् तत्रैतज्जयलक्षणम् दक्षिणादिक्स्थः परुषो वेपथुरप्राप्य संनिवृत्तोऽणुः अधिरूढो विकृतो निःप्रभो विवर्णश्च यः स जितः उक्तविपरीतलक्षणसंपन्नो जय-
गतो विनिर्दिष्टः विपुलः स्निग्धो द्युतिमान् दक्षिणदिक्स्थोऽपि जययुक्त इति एतच्छुक्रस्य प्रायः संभवति यस्मात्पुलिशाचार्यः सर्वेजयिन उदक्स्था दक्षिणदिक्-
स्थो जयी शुक्र इति एतच्चेष्टाबलम् एषामन्यतमेन संयुक्तश्चेष्टाबलसंयुक्तो भवति २० अधुना ग्रहाणां कालबलं नैसर्गिकबलं च मालिन्याह निशीति
शशिकुजसौराश्चंद्रभौमशनयः निशि रात्रौ वीर्यवंतो बलिनः ज्ञो बुधः सर्वदा सर्वस्मिन्काले निशि दिने च बली अन्ये परे रविगुरुसिता अह्नि दिने बलिनः

उदगयने रविशीतमयूखौ वक्रसमागमगाः परिशेषाः विपुलकरा युधि चोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्याः २० नि-
शि शशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये बहुलसितगताः स्युः क्रूरसौम्याः क्रमेण द्व्ययनदिवसहोरामासपैः कालवीर्यं
शकुबुगुशचसाद्या वृद्धितो वीर्यवंतः २१

क्रूराः पापाः प्रागुक्ताः बहुलपक्षे कृष्णपक्षे बलिनः सौम्याः शुभग्रहाः सितगताः शुक्लपक्षे बलिनः कृष्णप-
क्षे चंद्रमा अपि क्रूरो बलवान्भवति यस्माद्यवनेश्वरः मासे तु शुक्लप्रतिपत्प्रवृत्ते पूर्वे शशी मध्यबलो दशाहे श्रेष्ठो द्वितीयेऽल्पबलस्तृतीये सौम्यैस्तु दृष्टो बलवान्स-
दैवेति सितगताः शुक्लपक्षे स्थिताः सौम्याः बलिनः द्व्ययनेति प्रमाणं यस्य द्व्ययनं तत्तु वर्षे स्ववर्षे आत्मीयवर्षे यो ग्रहो यत्र वर्षे धिपतिः स तत्र बलवान् स्वदिवसे आ-
त्मीयवासरे स्वहोरायां कालहोरायाम् तथा स्वमासे यस्मिन्मासे योऽधिपतिः स तत्र बली द्व्ययनदिवसहोरामासानां येऽधिपतयस्तैर्ग्रहैः कालबलोपेतैरुपल-
क्षणीयं ते कालबलोपेता इत्यर्थः केचिद्द्व्ययनदिवसहोरामासपैरिति पठंति अन्ये स्वदिवससमहोरामासगैरिति पठंति एषः सापराधः पाठः एतेषु कालेषु
सर्वे स्वबलिनो भवंति एतद्ग्रहाणां कालवीर्यम् एषामन्यतमेन संयुक्तः कालबलसंपन्नो भवति शकुबुगुशचसाद्या इति शाद्यो वर्णाः येषां शकार आद्यस्ते
शाद्याः शकाराद्यः शनैश्चरः सर्वेभ्यो बलहीनः कुकाराद्यो रुधिरः भौमः शनैश्चराद्बलवान् बुकाराद्यो बुधः स भौमाद्बलवान् गुकाराद्यो गुरुः स बुधाद्बली शु-
काराद्यः शुक्रः स जीवाद्बली चकाराद्यश्चंद्रः स शुक्राद्बली सकाराद्यः सविता स चंद्राद्बलीति एतद्ग्रहाणां नैसर्गिकं बलं यस्मादनेनैव स्वल्पजातके उक्तम्

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मंदारसौम्यवाक्पतिसितचंद्रार्काययोत्तरंबलिनः नैसर्गिकबलमेतद्बलसाम्येस्यादधिकचिंतेति यत्रग्रहाणांग्रहयोर्वाबलसाम्यंभवति तत्तस्मा
द्बलाधिक्यम् अधिवीर्यवत्ताज्ञेयेति अत्राचार्येणाचतुःप्रकारस्यग्रहाणांबलस्यतत्त्वास्माभिः शिष्यहितहेतवेऽन्यशास्त्राल्लिख्यते तथाचसारा-
वल्याम् उच्चबलेनसमेतः परांविभूतिंग्रहः प्रसाधयति स्वत्रिकोणबलः पुंसांसाचिव्यम् बलवानिस्वंवा स्वर्क्षबलेनचसहितः प्रमुदितधनधान्यसंप
दाक्रांतम् मित्रभबलसंयुक्तोजनयतिकीर्त्यान्वितंपुरुषंतेजस्विनमतिसुखिनंसुस्थिरविभवंनृपाच्चलब्धधनम् स्वनवांशकबलयुक्तंकरोतिपुरुषं-
प्रसिद्धंच सूक्ष्मजातकेउक्तम् बलवान्मित्रस्वग्रहोच्चनवांशकेष्वीक्षितः शुभैश्चापिचंद्रसितौस्त्रीक्षेत्रेपुरुषक्षेत्रेपगाः शेषाइति तत्रशुभदृष्टस्यफ
लंतावत् शुभदर्शनबलसहितः पुरुषंकुर्याद्धनान्वितंख्यातं सुभगंप्रधानमखिलंसुरूपदेहंचसौम्यंच पुंस्त्रीभवनबलेनचकरोतिजनपूजितंकला-
कुशलंपुरुषंप्रसन्नचित्तंकल्पंपरलोकभीरुंच आशाबलसमवेतोनयतिस्वदिशंनभश्चरःपुरुषं नीत्वावस्त्रविभूषणवाहनसौख्यान्वितंकुरुते क्वचि
द्राज्यंक्वचित्पूजांक्वचिद्द्रव्यंक्वचिद्यशः ददातिविहगश्चित्रंचेष्टावीर्यसमन्वितः वक्रिणस्तुमहावीर्याः शुभाराज्यप्रदाग्रहाः पापाव्यसनदाःपुंसांकुर्वंतिच
वृथाटनम् स्वस्थंशरीरंसमागमसुखमाहवजयबलेनविदधाति शुभमतुलंविहगेंद्रोराज्यंचविनिर्जितारातिं रात्रिदिवाबलपूर्णैर्भूगजलाभेनशौर्यपरिहीन्ध्या
मलिनयतिनेत्रेपक्षेसंयुक्तेयोनरः प्रकटः द्विगुणंद्विगुणंदद्युर्वर्षाधिपमासदिवसहोरेशाः कृषकर्षेन्ध्यासौख्यंस्वदशासुधनंचकीर्तिंचपक्षबलाद्विगुणाशंरत्नांबर-
हस्तिसंपदंदद्युः स्त्रीकनकभूमिलाभंकीर्तिंचशशांकधवलतरांसकलबलभारभरितानिर्मलकरजालभास्कराः सततं राज्यंग्रहाविदद्युःसौख्यंचमनोरथातीतं
आचारसौख्यशुभशौचयुताःसुरूपाःतेजस्विनःकृतविदोद्विजदेवभक्ताःसद्वस्त्रमाल्यजनभूषणसंप्रियाश्चसौम्यग्रहैर्बलयुतैःपुरुषाभवंति लुब्धाः
कुकर्मनिरतानिजकार्यनिष्ठाःपापान्विताःसकलहाश्चतमोभिभूताः क्रूराःशठावधरतामलिनाः कृतघ्नाःपापाग्रहैर्बलयुतैःपिशुनाःकुरूपाःपुंराशिगग्रहैर्दृढधीराः
संग्रामकांक्षिणोबलिनः निःस्नेहाःसुकठोराः क्रूराश्चपुरुषाश्चजायंते युवतिभवनेषुचमृदवः संग्रामभीरवःपुरुषाःजलकुसुमवस्त्रनिरताःसौम्याः कलहे
सुसंयुक्ताइति एतत्सर्वंसुगमं इतिभट्टोत्पलविरचितायांबृहज्जा॰ विवृतौग्रहयोनिभेदाध्यायोद्वितीयः२ अथातोवियोनिजन्माध्यायोव्याख्याय
ते कःपुनःसवियोनिजन्मेत्युच्यते विविधवियोनिजन्मनांतिर्यक्पक्षिस्थावरादीनांसुसात्तिर्वियोनिजन्मेत्युच्यते तत्रप्रष्टुःसकाशाज्जातककालंप्रश्नकालं
वाविज्ञायवियोनिजन्मनिश्चयज्ञानंभवति तत्रवसंततिलकेनाह क्रूरग्रहैःसुबलिभिरिति चंद्रोपगाद्विरसभागेसमानरूपमिति चंद्रमाउपगतोऽथवास्थि 
तोयस्मिन्द्विरसभागेद्वादशभागेतत्समानरूपंतत्सदृशंरूपंसत्त्वंप्राणिनंवियोनिजन्मानंवदेत् सचद्विरसभागोयदिवियोनिसंज्ञोभवति सचंद्राक्रांतोद्वाद

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शभागो यदि वियोनिसंज्ञस्तदेवं वदेन्नान्यथेति तत्र मेषद्वादशभागव्यवस्थिते चंद्रमसि मेषाख्यस्य वियोनिजन्मज्ञातव्यं अजादेः छागादेः एवं वृषद्वादश
भागव्यवस्थिते वृषाख्यस्य माहिषादेः कर्कटद्वादशभागव्यवस्थिते कुलीरादेः सिंहद्वादशभागव्यवस्थिते सिंहद्वीपिशृगालश्वानमार्जारादिस्वानां-
जन्म वृश्चिकद्वादशभागव्यवस्थिते सर्पकीटादेः धनुर्धरद्वादशभागे द्वितीयार्द्धे व्यवस्थिते श्वगर्दभजन्म मकरद्वादशभागे पूर्वार्द्धे व्यवस्थिते मृगजन्म अ
परे मंडूकादेर्जलचरप्राणिन इच्छंति मीने मीनस्यैव किमेनावतैव वियोनिजन्मनिश्चयेनेत्याह क्रूरग्रहैरित्यादि क्रूरग्रहैरादित्यांगारकशनैश्चरैर्बुधेन च तद्दे
कल्मषेन प्रकर्षेण चंद्रप्रसादनेः सबलिभिरिति बलसंयुक्तैः सौम्यैः शुभग्रहैः क्रूरैरपविशिष्टैर्विबलैर्वीर्यरहितैः क्लीबे शनैश्चरे बुधे वा चतुष्टयगते केंद्र
स्थे एकोऽपि वियोनिजन्मयोगः तदवेक्षणाद्वा चंद्रमसि प्रदर्शितवियोनिजन्मद्वादशभागव्यवस्थिते क्रूरे बलयुक्ते सौम्यैः विबलैर्हीनबलैर्यत्र तत्रावस्थिते-
बुधेन शनैश्चरेण वा लग्ने दृष्टे वियोनिजन्मज्ञाने द्वितीयो योगः अर्थादनृद्विपद्द्वादशभागव्यवस्थिते चंद्रमसि पूर्वोक्तयोगाभावे द्विपदजन्म तथा च सारावल्या

क्रूरग्रहैः सबलिभिर्विबलैश्च सौम्यैः क्लीबे चतुष्टयगते तदवेक्षणाद्वा चंद्रोपगद्विरसभागसमानरूपं सत्त्वं वदेद्य
दि भवेत्स वियोनिसंज्ञः १ पापा बलिनः स्वभागगाः पारक्ये विबलाश्च शोभनाः लग्नं च वियोनिसंज्ञकं दृष्ट्वात्रापि वि
योनिमादिशेत् २ स क्रूरैः सबलसमेतैर्विबलैः सौम्यैर्वियोनिभागगते चंद्रे ज्ञशनिकेंद्रे तद्वीक्षिते चोदये वियोनिः स्यात् मेषे शशी-
तदंशे छागादिप्रसवमाहुराचार्याः गोमहिषाणां च गोशे नररूपाणां तृतीयेंशे तत्र चतुर्थे भागे कूर्मादीनां भवेदुदकजानां व्याघ्रादीनां परतः परतो ज्ञेयं न
राणां च वणिगंशे नररूपाद्वृश्चिकभागे तथा भुजंगाद्याः खरतुरगाद्या नवमे मृगशिखिनां स्यात्तथा दशमे ज्ञेयाश्च तत्र विविधा वृक्षास्तृणजा नयश्चित्राः ए-
कादशे च पुरुषा जलजानां विधाश्चांत्ये श्वमार्जारमूषकादीनां संख्याज्ञानम् श्वप्रसूतीनां प्रभवे यावंतो द्वादशांशकाल्लग्ने तावंति वदेत्प्राज्ञः पुंस्त्रीसंज्ञा
न्यपत्यानि १ अथ वियोनिजन्मज्ञानयोगांतरं वैतालीयेनाह पापा इति चंद्रोपगद्विरसभागसमानरूपमित्यनुवर्तते पापाः क्रूरग्रहाः प्रागुक्ता बलिनः
सबलाः न केवलं यावत्स्वभागगाः स्वनवांशस्थाः भागग्रहणे नेह नवांशक एव ज्ञातव्यः शोभनाः सौम्यग्रहाः प्रागुक्ताः पारक्ये परनवांशके विबला-
वीर्यरहिता व्यवस्थिताः लग्नं तात्कालिकं च यदि वियोनिसंज्ञकं भवति तदात्राप्यस्मिन्नपि योगे चंद्रोपगद्विरसभागसमानरूपं सत्त्वं जातमिति वदे
त् २ श्रीगोपालो विजयते श्रीरामकृष्णो जयति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथवियोनावपिचतुष्पदानांप्राधान्येनोपयोगित्वात्तदंगविभागंराश्यात्मकसुपजातिकयाह क्रियइति क्रियोमेषश्चतुष्पदानांशिरस्तदुपलक्षितमित्यर्थः
वृषोवक्त्रगलेवल्कंमुखंगलंकंबलंवृषः अन्येमिथुनादयोयथाक्रमंपादादिमिथुनः पादांसकंपादौपूर्वपादावंसौस्कंधौपृष्ठंकर्कटःउरोवक्षःसिंहःअथ-
शब्दआनंतर्येपार्श्वेपार्श्वद्वयंकन्याकुक्षिद्वयंतुलाआपानंगुदोवृश्चिकः अंघ्रीपश्चिमपादौधन्वी अथशब्दोपादपूर्णे मेंद्रंलिंगमुष्कोवृषणौमकरःस्फिजौकुंभः
पुच्छंलांगूलं मीनइतिशब्दः मकारेकेचिच्चतुष्पदांगेराशिविभागमाहुःआहोस्विद्बुवंत्याचार्याइतिशब्दाध्याहारः चतुष्पदग्रहणमुपलक्षणार्थं पक्षिणामप्ये-
वं तेषांपूर्वपादस्थानेपक्षपालीशेषंसामान्यं प्रयोजनंराशफलक्षितेनंगेवर्णोपधानादेर्विज्ञानमिति ३ अथवियोनिवर्णज्ञानंवेश्वदेव्याह लग्नांशइति
लग्नेयेनग्रहेणयोगोयस्तत्रव्यवस्थितस्तस्ययोवर्णःप्रागुक्तः वर्णास्ताम्रसितातिरक्तहरितेत्याद्याः तद्वर्णवियोनौसत्वजातेवदेत् दृष्टनष्टादौवा-
दर्शनाद्वेति अथलग्नेनकश्चिद्ग्रहोभवति तदायेनग्रहेणलग्नमीक्ष्यतेदृश्यतेतस्ययोवर्णस्तंवदेत् अथलग्नंनकेनचिद्युतंदृष्टंभवति तदालग्नांशकात्

> क्रियःशिरोवक्त्रगलेवृषोन्येपादांसकंपृष्ठमुरोथपार्श्वे कुक्षिस्त्वपानोंघ्र्यथमेढ्रमुष्कौस्फिक्पुच्छमित्या
> हचतुष्पदांगे ३ लग्नांशकाद्ग्रहयोगेक्षणाद्वावर्णान्वदेद्बलयुक्ताद्वियोनौ दृश्यासमानाद्बहवःवदेत्स्वसंख्य
> यारेखांवदेत्स्मरसंस्थैश्च पृष्ठे ४

लग्नेयद्राशिनवांशकोदयोभवति तद्राशिवर्णरिक्तःश्वेतइत्यादिकवावदेत् दृश्यासमाना-
मिति अथबहुभिर्ग्रहैर्लग्नंयुक्तंदृष्टंच भवतितदाबहूनेववर्णान्वदेत् तत्रापियोवीर्यवान्सबलस्तद्वर्णबाहुल्यम् यदुक्तम् बलयुक्तात्इति अथ
स्वस्वामिनायुतदृष्टस्यराशेःसंबधिनवांशकोदयोलग्नगतोभवति तदातद्वर्णमेववदेत् यत्रयोग्रहोवियोनौयस्मिन्नंगेव्यवस्थितस्तत्रात्मीयव
र्णंकरोति एतत्कुतोलब्धं सप्तमस्थानगतैःग्रहैर्बलवद्ग्रहवर्णःपृष्ठेवियोनौरेखांवदेत् तथाचसारावल्याम् मेषादिभिरुदयस्थैरंशैर्वाग्रहयु
तैश्चदृष्टैर्वा स्वगृहांशकसंयोगाद्वियाद्वर्णान् परांशकेऽक्षान् १ सप्तमसंस्थाःकुर्युः पृष्ठेरेखांस्ववर्णसमाम् वीक्षंतेयावंतावियोनिवर्णाश्चतावं
तः २ बलदीप्तोगगनचरःकरोतिवर्णंवियोनीनाम् पीतंकरोतिजीवःशशीसितंभार्गवोविचित्रंच ३ रक्तोदिनकररुधिरौरविजःकृष्णांबुधःशब
लं स्वेराशौपरभागेपरराशौस्वेनवांशकेनिष्ठम् ४ पश्यन्ग्रहोविलग्नंस्ववर्णवर्णंतदाकुरुते ४ अधुनापक्षिणोजन्मज्ञानंवंशस्थेनाह स्वगेति १८
स्वगेद्रेष्काणःपक्षिद्रेष्काणस्तत्रपक्षिद्रेष्काणोमिथुनद्वितीयः सिंहःप्रथमःतुलाद्वितीयःकुंभःप्रथमः एषामन्यतमद्रेष्काणेउदयतिशनैश्चरदृष्टलग्नयो

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गसंभवाः यथाक्रमं विहगाः पक्षिणः स्थलांबुजाः संभवंति पक्षिद्रेक्काणे शनैश्चरेण युते दृष्टे वा स्थलजपक्षिणां जन्म वक्तव्यम् एवमिंदुना युते दृष्टे वा जल
जानां पक्षिणां जन्म इति एको योगः अत्र लग्ने प्रथमदशकभागे यो ग्रहः स्थितः प्रथमद्रेक्काणस्थः ततः परस्मिन्नस्मिन्दशके द्वितीयद्रेक्काणस्थः ततः परस्मिन्
स्मिन्दशके तृतीयद्रेक्काणस्थ इति एवं त्रयो भागाः त्रिंशाश्च विंशतिकलाश्चैकनवांशकप्रमाणं परिकल्प्यम् ग्रहस्थितिरन्वेष्या सर्वराशिषियं परिभाषा
बलसंयुतेन वा ग्रहेण युक्ते चरभांशकोदये यस्य तस्य लग्नस्य चरनवांशकोदये बलसंयुतेन ग्रहेण संयुक्ते तथेति तेन शनैश्चरयुते दृष्टे स्थलजानां पक्षिणां ज
न्म चंद्रयुते दृष्टे जलजानां पक्षिणां जन्मज्ञानम् द्वितीयो योगः बुधांशके वेति बुधनवांशके मिथुनकन्ययोरन्यतमे तात्कालिकस्य लग्नस्योदिते तस्मिंश्च
बलवद्ग्रहसंयुक्ते शनैश्चरयुते दृष्टे स्थलजानां जन्म चंद्रयुते दृष्टे जलजानामिति तृतीयो योगः एते शनैश्चरस्येंदोर्वा संयोगेक्षणेन वा संभवंतीति
तथा च सारावल्याम् विहगोदितदृक्काणे ग्रहेण बलिना कृते चरभांशे बौधांशे वा विहगाः स्थलांबुजाः शनिशशीक्षणाद्योगात् ४ अधुना वृक्ष

खगे दृक्काणे बलसंयुतेन वा ग्रहेण युक्ते चरभांशकोदये बुधांशके वा विहगाः स्थलांबुजाः शनैश्चरेंद्वीक्षणयोगसंभ
वाः ५ होरेंदुसूरिरविभिर्विबलैस्तरूणां तोयस्थले तरुभवांशकृतः प्रभेदः लग्नाद्ग्रहः स्थलजलर्क्षपतिस्तु यावांस्ता
वंत एव तरवः स्थलतोयजाताः ६ जन्मज्ञानं वसंततिलकेनाह होरेति होरा लग्नं इंदुश्चंद्रः सूरिर्जीवः रविरादित्यः एतैर्विबलैर्वी-
र्यरहितैः प्रष्टा तरूणां वृक्षाणां जन्म पृच्छति इति वक्तव्यम् तत्रायं विशेषः तोयस्थल इति तत्र तरुभवो वृक्षजन्म किं तोये जले स्थले निर्जले चेति तत्प्रभेदस्त-
द्विकल्पो ऽंशकृतो नवांशको विहितः तत्र परराश्यंशकोदये तोयसमीपजान् वृक्षाननूपजान् तोयराशयः कर्कटमकरपश्चार्द्धमीनाः एतेष्वनूपजवृक्षजन्मेति ज्ञा
नम् इतरराश्यंशकोदये स्थलवृक्षजन्मज्ञानं तत्रापि संख्येयम् लग्नाद्ग्रह इति उदितांशैः स्थलचारी जलचारी वा भवति तदधिपतिर्यावत्संख्यराशौ ल
ग्नाद्यवस्थितस्तावंत एव संख्यास्तरवो वृक्षाः स्थलजा जलजा वा वक्तव्याः अत्राप्यंशकपतिवशाद्वक्ष्यमाणायुर्दायविधिना द्वित्रिगुणत्वं वाच्यम् स्वतुंगवक्रो
पगतोऽस्मिन्संगुणं द्विरुत्तमस्वांशकभागरोरिति अत्र द्वित्रिगुणत्वे भ्रमे यावंतो गण्ना भवंति तावंतः कार्य इत्यागमविदः तथा च सारावल्याम् लग्नार्कजीवचंद्रे
रबलैः शेषैश्च मूलयोनिः स्यात् स्थलजलभवनविभागाद्वृक्षादीनां प्रभेदकराः स्थलजलयोर्लग्नाद्यावन्तिराशौ तु तेपि तावंतः द्वित्रिगुणत्वं तेषामायुर्दाय
प्रकारोक्तम् ७ अधुना स्थलजलजानामंशस्वामिवशाद् वृक्षाणां विशेषज्ञानं मंदाक्रांतयाह अंतःसारानिति रविः सूर्योंशकपतिस्तंतः सारान् मध्यदृढान्

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शिंशपादीन्वृक्षान् जनयति उत्सादयति सूर्यसूनुः शनिर्दुर्भगान्दृढ्यनसोरप्रियान्कुशप्रभृतीन्जनयति ते तुहिनकिरणश्चंद्रः क्षीरोपेतान्सक्षीरान्वृक्षान्
प्रभृतीन्जनयति भौमः कुजः कंटकाढ्यान् कंटकबहुलान्खदिरप्रभृतीन्जनयति वागीशज्ञौ विति वागीशो बृहस्पतिः ज्ञो बुधः एतौ द्वौ यथासंख्येन स-
फलविफलान्वृक्षान्जनयतः तत्र बृहस्पतिः सफलानाम्रवृक्षप्रभृतीन् बुधो विफलान् येषां लोके पुष्पमेदोपपद्यते न फलानि तान्जनयति शुक्रः पुष्पवृ-
क्षान् मालत्यादीन्जनयति इंदुश्चंद्रः भूयः पुनः स्निग्धान् सचिक्कणान् धवदेवदारुप्रभृतीन्जनयति भूमिपुत्रोंगारकः कटुकविटपान् भल्लातकप्रभृतीन्
जनयति अत्रोपप्रभयजनितृत्वनिर्देशाच्चंद्रभौमयोर्विकल्पनादेशः ७ अथ भूतरुशुभाशुभज्ञानं संख्यां च वंशस्थेनाह शुभोशुभर्क्षेति स एव स्थलजलांशप-
तिर्ग्रहः शुभस्तत्कालमशुभर्क्षे पापग्रहराशौ व्यवस्थितो भवति तदा रुचिरं कुशोभनं वृक्षं कुभूमिजमशोभनभूमिजातं वदेत् अन्यथा विपर्यये विपरीतं
वृक्षं करोति अंशपतिरशुभस्तत्काले शुभग्रहराशिस्थो भवति तदा अशोभनं वृक्षं शोभनभूमिजातं वदेत् भर्यादिव शुभग्रहे शुभक्षेत्रस्थे शुभं वृक्षं शोभ-

अंतःसारान्जनयति रविर्दुर्भगान् सूर्यसूनुः क्षीरोपेतान्तुहिनकिरणः कंटकाढ्यांश्च भौमः वागीशज्ञौ सफलवि-
फलान्पुष्पवृक्षांश्च शुक्रः स्निग्धानिंदुः कटुकविटपान् भूमिपुत्रश्च भूयः ७ शुभोशुभर्क्षे रुचिरं कुभूमिजं करोति वृक्षं
विपरीतमन्यथा परांशके यावति विच्युतः स्वकाद्भवंति तुल्यास्तरवस्तथाभिधाः ८ इति श्रीभट्टोत्पलविरचितायां बृह-
ज्जातकविवृतौ वियोनिजन्माध्यायस्तृतीयः ३

नभूमिजातं वदेत् अशुभग्रहे अशुभक्षेत्रस्थे अशोभनवृक्षमशोभनभूमिजातं वदे-
त् परांशके यावतीति स एव स्थलजलांशपतिर्ग्रहः स्वकादात्मीयादंशकाद्विच्युतश्चलितो यावत्संख्ये परनवांशके व्यवस्थितः स्वमंशमतिक्रम्य यावत्संख्ये परन-
वांशके वर्तते तत्तुल्यास्तत्संख्यास्तथोक्तास्तज्जातीयाश्च तरवो वृक्षा भवंति तावंत एव स्थलजा जलजा वा तरवः शाकसंख्यायां तथ चेति तत्र पुनः संख्या-
करणाद्विकल्पेनादेश इति तथा च सारावल्याम् स्वांशात्परांशगामित्वे यावत्संख्याप्रवर्तितावंतः स्थलजा वा जलजा वा तरवः शाकसंख्यया प्रवदेदिति ८
इति श्रीभट्टोत्पलविरचितायां बृहज्जातकविवृतौ वियोनिजन्माध्यायस्तृतीयः ३ अथातो निषेकाध्यायो व्याख्यायते तत्रादावेतौ सनिगर्भाधान-
मित्यतः ऋतुनिरूपणमृतावपि स्त्रीपुरुषसंयोगज्ञानं वंशस्थेनाह कुजेंदुहेतुरिति कुजो भौमः इंदुश्चंद्रः तौ हेतु कारणं निमित्तं यस्य रजसः तत्कुजेंदुहे- १९
तु प्रतिमासं मासं मासं प्रतीति प्रतिमासं स्त्रीणां प्रतिमासमार्तवं कुजेंदुहेतु प्रतिमासग्रहणेन प्रथमोद्भूतरजोनिवृत्तिं दर्शयन् गर्भग्रहणक्षममार्तवं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्रदर्शयति ऋतौ भवमार्तवं कथमित्याह गते तु पीडर्क्षमनुष्णदीधिताविति अनुष्णदीधितौ शीतमयूखे चंद्रे पीडर्क्षं गते प्रकृतत्वात्स्त्रीणामनुपचयगृहाश्रिते आ-
र्तवकारणं भवति अर्थादेव यदि चंद्रः कुजसंदृष्टो भवति एतदुक्तं भवति स्त्रियो जन्मर्क्षादनुपचयसंस्थश्चंद्रमास्तत्र च यद्यंगारकेण दृश्यते तदा गर्भग्रहण-
क्षममार्तवहेतुर्भवति अन्यत्र बालवृद्धातुरवंध्यास्य: अत्र च बादरायणः स्त्रीणां गतोऽनुपचयर्क्षमनुष्णरश्मिः संदृश्यते यदि धरातनयेन तासां गर्भग्रहार्तवमुश-
न्ति दानवंध्यावृद्धातुराल्पवयसामपि चैतदिष्टम् १ तथा च सारावल्याम् अनुपचयराशिसंस्थे कुमुदाकरबांधवे रुधिरदृष्टे प्रतिमासं युवतीनां भवतीह र-
जो ध्रुवं लोके इंदुर्जलं कुजोऽग्निर्जलमिश्रं च वह्निरेव पित्तं स्यात् एवं रक्ते क्षुभिते पित्तेन रजः प्रवर्तते स्त्रीषु एवं यद्भवति रजो गर्भस्यानिमित्तमेव कथितं तत् उपचय
संस्थे विफलं प्रतिमासं दर्शनं तस्य एवं गर्भग्रहणयोग्यमार्तवं प्रदर्श्य स्त्रीपुरुषसंयोगसंभवासंभवौ प्रदर्शयति अतोन्यथास्थ इति अतोन्यथा अस्मादु-
क्तप्रकारादन्यथास्थे विपर्ययस्थे चंद्रमसि तत्रोक्तविपर्ययस्थः पुरुषजन्मराशेरुपचयस्थश्चंद्रमा यदि भवति तस्मिन् शुभेन सौम्येन पुंग्रहेण गुरुणेक्षिते दृ-

कुजेंदुहेतुप्रतिमासमार्तवं गते तु पीडर्क्षमनुष्णदीधितौ अतोन्यथास्थे शुभपुंग्रहेक्षिते नरेण संयोगमुपैति कामिनी १
यथास्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुनप्रयोगः असद्ग्रहालोकितसंयुतेऽस्ते सरोष इष्टैः सविलासहासः २

ष्टे कामिनी स्त्री नरेण पुरुषेण सह संयोगं मैथुनमुपैति गच्छतीति वक्तव्यम् नन्वत्रातोन्यथास्थ इति स्त्रिया उपचयस्थः कस्मान्न व्याख्यायते अयुक्तमेतत्
प्राधान्यात्पुरुषस्यैव यस्माद्बादरायणः पुरुषोपचयगृहस्थो गुरुणा यदि दृश्यते हिममयूखः स्त्रीपुरुषसंयोगं तदा वदेदन्यथा नैवमिति सारावलीका-
रेण सामान्येनोक्तम् तद्यथा उपचयभवने शशभृत् दृष्टो गुरुणा सुहृद्भिरथवासौ पुंसां करोति योगं विशेषतः शुक्रसंदृष्टः कस्मिन्काले यं विचारः
उच्यते चतुर्थदिने स्नातायाम् तथा मणित्थः ऋतुविरमे स्नातायां यद्युपचयस्थः शशी भवति बलिना गुरुणा दृष्टो भर्त्रा सह संगमश्च तदा राजपुरु-
षेण रविणा विटेन भौमेन वीक्षिते चंद्रे सौम्येन चपलमतिना भृगुणा कांतेन रूपवता भृत्येन सूर्यपुत्रेण याति स्त्री संगमं हि तदा एकैकेन फलं स्यात्
दृष्टे नान्यैः कुजादिभिः पापैः सर्वैः स्वगृहं त्यक्त्वा गच्छति वेश्यापदं युवतिः १ अथ मैथुनप्रकारज्ञानमिंद्रवज्रयाह यथास्तराशिरिति आधानल-
ग्नात्सप्तलग्नाद्वा योऽस्तराशिः सप्तमोऽस्तलग्नं स्तलसंज्ञको यो जंतुस्तन्मिथुनं स्त्रीपुमांसौ यथा येन प्रकारेण समेति संयोगं करतं याति तथानेनैव-
प्रकारेण तस्य नरस्य मिथुनप्रयोगः संयोगो वाच्यो वक्तव्यः तस्मिन्नेवास्ते सप्तमे स्थाने असद्ग्रहालोकितसंयुते पापग्रहैर्दृष्टे युक्ते वा सरोषः सकल

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ह्रोमिथुनप्रयोगोवाच्यः इष्टैः सौम्यैर्युतदृष्टेसविलासहासः सीत्कारादिसंयुक्तोमिथुनप्रयोगोवाच्यः अर्थादेवनकेनचिद्युतदृष्टेनसरोषोनापिसवि लासहासइति मिश्रयुतदृष्टेसरोषोसविलासहासश्चेति तथाचसारावल्याम् द्विपदादयोविलग्नात्स्फुरनंकुर्वंतिसमभेयद्वत् तद्वत्पुरुषाणामपिग र्भाधानंसमादेश्यम् अक्लेशक्रमयुतदृष्टेसरोषकलहंभवेन्न सौम्यैः सौम्यंसुरतंवास्यायनसंप्रयोगिकाख्यानम् २ अथगर्भसंभवासंभवज्ञानंवं शस्थेनाह रवीति रविः सूर्यः इंदुश्चंद्रः शुक्रः सितः अवनिजोंगारकः एतैःस्वभागगैर्यत्रराशौस्वनवांशकस्थितैरपत्यंभवति गर्भसंभवोभवतीत्यर्थः यदिचसर्वेस्वभागगतास्युस्तदापुरुषापचयस्थानगाभ्यांसूर्यसिताभ्यांस्वनवांशकस्थाभ्यामेवंगर्भसंभवोवाच्यः एवंभौमचंद्राभ्यांनार्युपचयस्थगाभ्यां स्वनवांशकस्थाभ्यामाधानकालेऽवश्यमेवापत्यंभवति गर्भसंभवोभवतीत्यर्थः यस्मादनेनैवस्वल्पजातकेऽप्युक्तम् बलयुक्तौस्वगृहांशेऽर्कसितावुप चयर्क्षगौपुंसां स्त्रीणांवाकुजचंद्रौयदातदागर्भसंभवोभवति गुरौत्रिकोणोदयसंस्थितेपिवेति गुरौबृहस्पतौत्रिकोणयोर्नवपंचमयोरुदयेलग्नेपिवा

रवींदुशुक्रावनिजैः स्वभागगैर्गुरौत्रिकोणोदयसंस्थितेपिवा भवत्यपत्यंहिविबीजिनामिमेकराहिमांशोर्विदृशामिवाफलाः
३ दिवाकरेंद्वोःस्मरगौकुजार्कजौगदप्रदौपुंगलयोषितोस्तदा व्ययस्वगौमृत्युकरौयुतौनयानदेकदृष्ट्यामरणायकल्पितौ ४ संस्थिते

पृषामन्यतमस्थानस्थेपिअपत्यंभवति गर्भग्रहणं विबीजिनामिमेइति हियस्मादर्थे इमेहियोगाः विबीजिनांषंढानांविगतंबीजंवीर्यंयेषांस्त्रीपुरु- षाणांतेषामफलाविद्यमानाअपिनसंभवंति अत्रोदाहरणम् कराहिमांशोर्विदृशामिवाफलाइति यथाहिमांशोःशीतरश्मेः चंद्रस्यकराःरश्मयोविद्य- माना अपिविदृशामंधानामफलानिष्फलाविगतादृशोयेषांतेविदृशः तेषामिवेति ३ अधुनास्त्रीपुंसयोराधानकालवशादामयवानधियावच्छुभाशुभ ज्ञानंवंशस्थेनाह दिवाकरेति दिवाकरात्सूर्यात्स्मरगौसप्तमस्थानस्थौकुजार्कजौकुजोंगारकोर्कजः सौरिः यदिभवतः तदापुंगलस्यमनुष्यस्यगदप्रदौ रोगप्रदौभवतः एतदुक्तंभवति आधानकालेयत्रार्कस्थितस्तस्मात्सप्तमेस्थानेयदांगारकोभवतिसौरोवातदापुंसोरोगप्रदौभवतः स्वमासेएवंभि दौ चंद्रात्सप्तमोभौमः सौरोवाभवतितदायोषितः स्त्रियोरोगप्रदौभवतः स्वमासेएव व्ययस्वगौमृत्युकराविति तावेवकुजसौरौव्ययस्वगौद्वादश द्वितीयगौतयोर्दिवाकरेंद्वोः सकाशाद्युगपद्यत्रपार्श्वस्थितयोस्तदापुंगलयोषितोः स्त्रीपुरुषयोर्मृत्युकरौभवतः एतदुक्तंभवति सूर्यादेकोद्वादशेद्वि- १० तीयोद्वितीयेतदातयोर्मध्येयोबलवान्सस्वमासेमृत्युकरोनरस्यभवति चंद्रादप्येवंव्यवस्थिते चंद्रादेकोद्वादशोद्वितीयोद्वितीयेतदातयोर्मध्येयोबलवान्

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तस्यमासेमृत्युकरोस्त्रियोभवति युतौनयेति नदितिकुजसौरयोः परामर्शः तयोः कुजसौरयोर्मध्याद्यदेकेनादित्योयुतः सहितोभवत्यन्येनदृश्यते तदानरस्यमरणायकल्पितोनिश्चितः एवंचंद्रमायद्येकेनयुक्तोभवत्यपरेणदृष्टः तदास्त्रियोमरणायकल्पितः द्वयोर्मध्येयोबलवांस्तस्यमासेइति ४ अथनिषिक्तस्यपितृमातृपितृव्यमातृस्वसृणांशुभाशुभज्ञानंवंशस्थेनाह दिवार्कशुक्राविति दिवादिनेनिषिक्तस्यजातस्यवाजंतोर्यथाक्रमंपितृमातृसंज्ञिना वर्कशुक्रौभवतः पितृसंज्ञकोर्कोमातृसंज्ञकः शुक्रः एवमेवनिशिरात्रौनिषिक्तस्यजातस्यवाशनैश्चरेंदूसौरचंद्रौशनैश्चरोपितृसंज्ञकः चंद्रोमातृसंज्ञकः तद्विप र्ययाविति तद्विपर्ययाद्दिवारात्रिव्यत्ययात्तावेवपूर्वोक्तौयहौपितृव्यमातृस्वसृसंज्ञितौभवतः तत्रदिवानिषिक्तस्यजातस्यवाशनैश्चरोपितृव्यसंज्ञः चंद्रो मातृष्वसृसंज्ञः रात्रौनिषिक्तस्यजातस्यवार्कः पितृव्यसंज्ञकः शुक्रोमातृष्वसृसंज्ञः तत्संज्ञयोः प्रयोजनम् तावथौजयुग्मर्क्षगतौतयोः शुभाविति तावे वयथोक्तौग्रहौतयोराजयुग्मर्क्षगतौशुभोज्ञेयौ ओजाविषमराशयोयुग्माः समराशयः तत्रदिवार्कोविषमर्क्षगोमेषमिथुनसिंहतुलाधन्विकुंभानाम

द्विवार्कशुक्रौपितृमातृसंज्ञितौशनैश्चरेंदूनिशितद्विपर्ययात् पितृव्यमातृष्वसृसंज्ञितौचतावथौजयुग्मर्क्षगतौतयोःशु
भौ ५ अभिलषद्भिरुदयर्क्षमसद्भिर्मरणमेतिशुभदृष्टिमयाते उदयराशिसहितेचयमेस्त्रीविगलितोडुपतिसूर्यदृष्टे ६

न्यतमस्थः पितुः शुभकृत् रात्रौपितृव्यस्यतथादिवाशुक्रः समर्क्षगोवृषकर्कटकन्यावृश्चिकमकरमीनानामन्यतमस्थोमातुः शुभकृत् रात्रौमातृष्वसुः शनैश्चरोरात्रौविषमर्क्षगतः पितुः शुभकृद्दिवापितृव्यस्यतथाचंद्रोरात्रौसमर्क्षगोमातुः शुभकृत्दिवामातृष्वसुः सामर्थ्यादेवोक्तविपर्ययस्थः स एवोक्तयोरशुभः यथादिवासमक्षेत्रगतोर्कः पितुरशुभोरात्रौपितृव्यस्य दिवाविषमर्क्षगतः शुक्रोमातुरशुभोरात्रौमातृष्वसुः रात्रौसमक्षेत्रगतः शनैश्चरः पितुरशुभोदिवापितृव्यस्यरात्रौविषमर्क्षगतश्चंद्रमामातुरशुभोदिवामातृष्वसुरिति ५ अथाधानप्रश्नमध्येआधानकालवशात्मातुर्मर णयोगद्वयमाह उदयर्क्षमुदयलग्नमसद्भिः पापग्रहैरभिलषद्भिस्तत्रोदयलग्नाभिलाषिभिः कश्चिल्लग्नाद्द्वितीयस्थग्रहोव्याख्यातः तेषामभि मतंयथोदयलग्नादनंतरंतदुभयस्यप्रत्यासन्नतयाभिलषत्युदयर्क्षमिति अन्येपुनर्लग्नाद्द्वादशस्थानस्थग्रहइष्टौ दर्शाभिलाषंकथयंति यस्मात्त द्द्विहायोदयराशिगमनंग्रहः करोति एवंलग्नाद्द्वादशस्थैः पापैर्लग्नेचयदिशुभदृष्टिसौम्यग्रहदर्शनमयाते अप्राप्तेसौम्यग्रहैरदृश्यमानेस्त्रीयोषि द्गर्भिणीमरणमेतिमृत्युंप्राप्नोति अत्रचभगवान्गार्गिः अशुभैर्द्वादशर्क्षस्थैः शुभदृष्टिविवर्जितैः आधानलग्नेमरणंयोषितः प्रवदेद्बुध

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इति योगांतरमाह उदयराशिसहितेनेत्यमेत्यादि यमेशनैश्चरे उदयराशिसहितेलग्नस्थेतस्मिंश्चविगलितेनोडुपतिनानक्षत्रस्वामिनाक्षीणचंद्रेणभूसु
तेनांगारकेणचदृष्टेवलोकितेस्त्रीगर्भिणीमरणमेति ५ अथयोगांतरंवैतालीयेनाह लग्नमुदयराशिरिंदुश्चंद्रएतौलग्नेंदूपापद्वयमध्यसंस्थितौलग्नस्थे
चंद्रमसियद्येकः पापग्रहोद्वादशस्थोभवति द्वितीयस्थोपरस्तदालग्नेंदूशुभपक्षतुल्यकालंपापद्वयमध्यगावुच्यते अथालग्नेंदूविभक्तएकांशकान्वितौभव
तस्तत्रैवैकः पापस्तावदशाप्यस्थितोऽपरस्तावदंतिकम्यस्थितस्तथापिलग्नेंदूपापद्वयमध्यगावुच्येते अथवाद्वादशस्थानेएकः पापोऽपरोद्वितीयेचंद्रश्च
तुर्येचपापोभवति तदापि लग्नेंदूपापद्वयमध्यगावुच्येते एवंलग्नेंदूयदिशुभपक्षपापद्वयमध्यगतौनचसौम्यवीक्षितौशुभग्रहावलोकितौनभवतस्तदा
नारीस्त्रीगर्भफलाविपद्यते म्रियते पृथगेवेति अथवा पृथक्स्थौलग्नेंदूभवतस्तयोर्मध्यादेकतमोपिपापद्वयमध्यगोभवति सौम्यग्रहदृष्टश्चनभव
ति तदानारीगर्भफलाविपद्यते म्रियतेइति पृथगेवेति अथवा लग्नात्तृतीयेचंद्रोद्वितीयचतुर्थद्वादशस्थाः पापाः तथापिलग्नेंदूपापमध्यगोभवतः

पापद्वयमध्यमध्यसंस्थितौलग्नेंदूनचसौम्यवीक्षितौ शुभपक्षपृथगेववावदेन्नारीगर्भसुताविपद्यते ७ क्रूरैः
शशिनश्चतुर्थगैर्लग्नाद्वानिधनाश्रितेकुजे बंधंत्यगयोःकुजार्कयोः क्षीणेंदौनिधनायपूर्ववत् ८ अथवालग्नादेकादशेचं

द्रोद्वितीयतृतीयद्वादशगाः पापास्तथापिलग्नेंदूपापद्वयमध्यगौभवतः फगपद्ग्रहणंपादपूर्णार्थंविस्पष्टार्थंवा तदर्थस्यपृथगेवसामर्थ्याल्लब्धत्वाद्
त्रयोगकर्तॄणांग्रहाणांमध्याद्योबली तन्मासिगर्भिणीमरणंभवतीतिसर्वत्रपरिभाषा ७ अथान्ययोगांतराणिवैतालीयेनाह क्रूरैरिति शशि
नश्चंद्रात्क्रूरैः पापग्रहैः चतुर्थस्थानस्थैर्निधनाश्रितेऽष्टमस्थानस्थेकुजेभौमेएकोयोगः अथवाचलग्नाच्चतुर्थैः पापैरष्टमेभौमेचंवाद्वितीयोयोगः बं
धंत्यगयोःकुजार्कयोरिति लग्नाद्बंधुगतेचतुर्थस्थेभौमेंत्यगतेद्वादशस्थानस्थेऽर्केसूर्येयत्रतत्रस्थेक्षीणेंदौ परीक्षीणेचंद्रेतृतीयोयोगः एषामा
धानकालेकतमस्यसंभवेमरणायपूर्ववन्नारीगर्भफलाविपद्यतइति ८ अधुनाधानात् शस्त्रनिमित्तंमरणयोगंगर्भस्रावंचाधानलग्नात्तद्गताद्वैतालीयेना
ह उदयास्तइति निषेककालेकुजार्कयोर्भौमसूर्ययोर्यथासंख्यमुदयास्तगयोर्लग्नसप्तमस्थयोर्लग्नेभौमेसप्तमस्थेऽर्केगर्भफलायाः भार्यायाः
स्त्रियः शस्त्रकृतंशस्त्रहेतुकंमरणंनिधनंवदेत् ब्रूयात् तथानेनैवप्रकारेणेति नारीगर्भफलाविपद्यतइत्यर्थः मासाधिपतावितिगर्भमासेषुमा-
साधिपान्वक्ष्यति कललघनेत्यादिना तत्रनिषेककालेयोग्रहोभौमादिरन्येनग्रहेणयुद्धेविजितोभवति पराजितोभवति यतःकुक्रनादीनांयुद्धमित्यक्तम्



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

केतुनावाभिधूमितउल्कयावाभिहतः सोपिनिपीडितग्रहइत्युच्यते सूर्याचंद्रमसौक्रूरस्फुटोदृष्टोवाराहुणाग्रहणेपीडितोइत्युच्येते तस्यापिनिपीडित
स्यग्रहस्ययोभवति मासोयस्मिन्मासेमासाधिपत्यंतस्यभवति तत्कालंतस्मिन्कालेगर्भस्यस्रवणंच्युतिंसमादिशेत्वदेत् ९ अथनागर्भप्रसिद्धि
नवंशस्थेनाह शशांकेति यत्रराशौशशांकश्चंद्रः स्थितस्तत्रैवशुभग्रहैर्व्यवस्थितैर्बुधगुरुसितैरित्यर्थः अथवालग्नस्थैः शुभग्रहैः लग्ने
व्यवस्थितैः अथवाकैश्चिच्छशांकोपगतैः कैश्चिल्लग्नोपगतैः एवंशशांकोपगतैः शुभग्रहैरुदयोपगतैर्वा अथवात्रिकोणजायार्थसुख
स्पदस्थितैः त्रिकोणंनवपंचमेजायास्थानंसप्तमम् अर्थस्थानंद्वितीयं सुखस्थानंचतुर्थम् आस्पदस्थानंदशमम् एतषुत्रिकोणजाया-
र्थसुखास्पदेषुयथासंभवंचंद्राल्लग्नाद्वाद्वयोर्वासमवास्थितैस्तथापापकैः क्रूरग्रहैश्चंद्राल्लग्नाद्वातृतीयलाभर्क्षगतैः तृतीयैकादशस्थान
स्थैस्तैर्यथासंभवंद्वयोर्वास्थितैरविणासूर्येणयदिनिरीक्षितोदृष्टः शशीलग्नंवाभवति यस्मादेवंयोगः सचदृश्यतेनदागर्भस्थःसुखीपुष्टिमा

उदयास्तगयोःकुजार्कयोर्निधनंशस्त्रकृतंवदेत्तथा मासाधिपतौनिपीडितेतत्कालंस्रवणंसमादिशेत् ९ शशांकलग्नो
पगतैःशुभग्रहैस्त्रिकोणजायाऽर्थसुखास्पदस्थितैः तृतीयलाभर्क्षगतैश्चपापकैः सुखीतुगर्भोरविणानिरीक्षितः
१० ओजर्क्षेपुरुषांशकेषुबलिभिर्लग्नार्कगुर्विंदुभिःपुंजन्मप्रवदेत्समांशकगतैर्युग्मेषुतैर्योषितः गुर्वर्कौविषमेनरंशशि
सितौवक्रश्चयुग्मेस्त्रियंद्व्यंगस्थाबुधवीक्षणाच्चयमलौकुर्वंतिपक्षेस्वके ११ भवति केचिद्गुरुणानिरीक्षित इतिपठंति तदयुक्तम्
यस्मात्सारावल्यामुक्तम् होरेंदुयुतैः सौम्यैस्त्रिकोणजायार्थसुखांबरस्थैर्वा पापैस्त्रिलाभयातैः सुखीचगर्भोनिरीक्षितोरविणा १० अथनिषि
क्तस्यनिषेककालाज्ज्ञानस्यजन्मकालादुभयोरपिप्रश्नकालाद्वापुंस्त्रीविभागज्ञानंशार्दूलविक्रीडितेनाह ओजर्क्षेति ओजर्क्षेपुरुषांशकेषुस्थिति
लग्नमुदयलग्नं अर्कः आदित्यः गुरुर्जीवः इंदुश्चंद्रः एतैर्लग्नार्कगुर्विंदुभिरोजर्क्षस्थैर्विषमराशिव्यवस्थितैर्नकेवलम् यावद्विषमराशिव्यवस्थि
तैर्विषमनवांशगतैर्बलिभिश्चपुंसोजन्मवदेत् नन्वत्रविषमनवांशग्रहणंनास्तिकथं व्याख्यातं विषमनवांशकगैरिति उच्यते पुरुषांशकेष्विति व
चनात्पुरुषराशीनामंशकेष्वित्यर्थः यएवविषमराशयस्तएवपुरुषराशयः समांशकगतैर्युग्मेष्विति तैरेवलग्नार्कगुर्विंभिर्युग्मेषुसमराशिषुव्यव
स्थितैर्नकेवलंयावत्समांशकगतैर्युग्मराशिनवांशकस्थैर्बलिभिश्चयोषितः स्त्रियोजन्मवदेत् अथैषांयथाभिहितानांलग्नग्रहाणामुभयविक

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्यकानांबाहुल्यात्पुंस्त्रीनिर्देशः साम्येबलाधिकत्वात् गुर्वर्कावितिगुरुर्जीवः अर्कआदित्यः एतावुभावपिविषमेविषमराशौगतौयत्रतत्रनवांशकस्थौ नरंमनुष्यंकुरुतः बलग्रहणमप्यत्रानुवर्तते शशीचंद्रः सितःशुक्रः वक्रोंगारकः एतेयदिसबलाः युग्मसमराशौगतायत्रतत्रनवांशकस्थास्त्रियं जनयंति स्त्रीजन्मस्यादिति एतएवग्रहाद्व्यंगस्थायत्रतत्रराशौद्विशरीरनवांशकस्थाः बुधवीक्षणाच्चबुधदृष्ट्यायमलौद्वौस्वपक्षेकुर्वंति स्वपक्षेआत्मीयपक्षे आत्मीयपक्षेपुरुषनवांशकेस्त्रीनवांशकेचेत्यर्थः एतदुक्तंभवति चत्वारोद्विस्वभावामिथुनकन्याधन्विमीनाः तत्रमिथुनधन्विनौपुरुषांशकौ कन्यामीनौस्त्र्यंशकौ तेनयथासंभवंमिथुनधन्वंशगतावादित्यजीवौयदिबुधेनयत्रतत्रावस्थितेनदृश्येते तदायमलौद्वौपुरुषौवाच्यौ एवं यथासंभवंकन्यामीनांशकगताः शशिशुक्रभौमाः यत्रतत्रावस्थितेनबुधेनदृश्यंतेतदायमलेद्वेकन्येवाच्ये अथद्वावेववर्गौयथादर्शितस्थौ बुधः पश्यति तदेकःपुरुषोद्वितीयाचकन्या नन्वत्रांशकग्रहणंनास्ति तत्कथंव्याख्यातम् द्विशरीरांशकेस्थितइति अनेनैवस्वल्पजातकेउक्तम्

विहायलग्नंविषमर्क्षसंस्थःसौरोपिपुंजन्मकरोविलग्नात् प्रोक्तग्रहाणामवलोक्यवीर्यंवाच्यःप्रसूतौपुरुषोंगनावा १२

बलिनौविषमेऽर्कगुरुनरंस्त्रियंसमगृहेकुजेंदुसिताः यमलौद्विशरीरांशेष्विंदुजदृष्ट्यास्वपक्षसमाविति अन्यथापुनरुक्ततास्यात् ओजर्क्षेपुरुषांशकेष्वित्यनेनैवगतार्थत्वात् बलग्रहणमत्रानुवर्तनीयमिति ११ अथपुंजन्मयोगांतरमुपेंद्रवज्रयाह विहायलग्नमिति उक्तयोगाभावस्यावसरेनान्यथा आधानलग्नंप्रच्छाकालिकंलग्नंवा लग्नंविहायतस्मात्सौरः शनैश्चरोलग्नाद्विषमर्क्षगतस्तृतीयपंचमसप्तमनवमैकादशस्थानानामन्यतमस्थः पुंजन्मकरः पुरुषजन्मकरोभवति प्रोक्तग्रहाणामिति प्रोक्तगृहाणांकथितयोगकर्तृणांग्रहाणांवीर्यंबलमवलोक्यविचार्यप्रसूतौप्रसवकालेपुरुषोनरोंगनास्त्रीवावक्तव्या एतदुक्तंभवति यत्रपुरुषजन्मसंभवस्तत्रपुरुषोवाच्यः एवं स्त्रीयोगसंभवेस्त्रीवाच्या यत्रपुरुषजन्मयोगसंभवः स्त्रीयोगजन्मसंभवश्चदृश्यतेतदायोयोगोबलवत्ग्रहाभिनिर्मितस्तद्वशात्पुंस्त्रीजन्मवक्तव्यम् १२ अथक्लीबजन्मयोगान्शार्दूलविक्रीडितेनाह अन्योन्यमिति शशीचंद्रः रविरादित्यः एतौशशिरवीयथाक्रमंयुग्मौजर्क्षगतौसमविषमराशिस्थावन्योन्यंपरस्परंयदिपश्यतः समराशिस्थश्चंद्रोविषमराशिगतमर्कंपश्यत्यर्कः शशिनंपश्यतितदाक्लीबजन्मयोगएकः यद्यार्किसौम्या २२
वपि आर्किःसौरः सौम्योबुधः एतावार्किसौम्यौयथाक्रमंयुग्मौजर्क्षगतौ अन्योन्यंयदिपश्यतस्तदाद्वितीयोयोगः वक्रोवासमगमिति च

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

क्रौंगारकौविषमर्क्षगः समगंसमराशिस्थंदिनेशंसूर्यंपश्यति सूर्यश्चांगारकंपश्यतितदातृतीयोयोगः असमेचंद्रोदयौचेदिति चंद्रः शशीदयोलग्नमेताव समेविषमराशाववस्थितौभूम्यात्मजेनांगारकेणसमराशिगेनेक्षितौदृष्टौतदाचतुर्थयोगः युग्मौजर्क्षगतावपीति इंदुश्चंद्रः शशिजोबुधःएतौयथासंख्यंयुग्मौजर्क्षगतौसमविषमराशिगौभूमिजेनभौमेनयत्रतत्रावस्थितेनवीक्षितौदृष्टौतदापंचमोयोगः पुंभागइति सितः शुक्रः लग्नंउदयलग्नंशीतकिरणश्चंद्रः- एतेसितलग्न शीतकिरणाः यत्रतत्रराशौपुंभागेविषमनवांशकेव्यवस्थिताभवंति तदाक्लीबजन्मयोगः षष्ठः तथाच बादरायणः अन्योन्यंरविशशिनौविषमाविषमर्क्षगौनिरीक्ष्येते इंदुजरविसुतौवातथैवनपुंसकंकुरुतः वक्रोविषमेसूर्यः समगश्चैवंपरस्परालोकात् विषमर्क्षेलग्नेंदूसमराशिगः कुजोवलोकयति बुधचंद्रौकुजदृष्टौविषमर्क्षसमर्क्षगौनथैवोक्तौ ओजनवांशकसंस्थालग्नेंदूसितनास्तथैवोक्ताइति एतेयोगाः पूर्वयोगानामभावेवक्तव्याः तेषांयोगानामेतेषांचसंभवेतेषामेवबलवत्वं १२ अथनादित्रिगर्भसंभवयोगान् शार्दूलविक्रीडितेनाह युग्मेचंद्रसितावितिं चंद्रसितौशशिशुक्रौयुग्मेसमराशौव्यवस्थितौत

अन्योन्यंयदिपश्यतः शशिरवीयद्यार्किसौम्यावपिवक्रोवासमगंदिनेशमसमेचंद्रोदयौचेत्स्थितौ युग्मौजर्क्षगतावपीदुशशि

४८ जौभूम्यात्मजेनेक्षितौपुंभागेसितलग्नशीतकिरणाः स्युःक्लीबयोगाःस्मृताः १३ युग्मेचंद्रसितौतथौजभवनेस्युर्ज्ञारजीवोद

यौलग्नेंदूनृनिरीक्षितौचसमगौयुग्मेसुवाप्राणिनः कुर्युस्तेमिथुनंग्रहोदयगतान्द्व्यंगांशकान्पश्यतिस्वांशेज्ञस्त्रितयंज्ञगांशक

वशाद्युग्मंत्वमिश्रैः समम् १४

यथानेनैवप्रकारेणज्ञारजीवोदयाः ज्ञोबुधः आरोंगारकः जीवोबृहस्पतिः उदयोलग्नं एतेसर्वेएवौजभवने विषमराशौस्फुर्वियुः एवमेतेमिथुनंकुर्युः दारिकादारकश्च लग्नेंदूउदयचंद्रौसमगौयुग्मराशिव्यवस्थितौनृनिरीक्षितौनरग्रहेणयेनकेनचित् दृष्टौभवतस्तथापिमिथुनंगर्भसंस्थंवाच्यम् युग्मेषुवाप्राणिनः तएवपूर्वोक्ताज्ञारजीवोदयाः सर्वएवयुग्मेषुसमराशिषुस्थिताः प्राणिनोबलिनोभवंति तथापिमिथुनंकुर्युः ग्रहोदयगतानित्यादि ग्रहाः सर्वएवद्व्यंगांशकेषुद्विस्वभावनवांशकेषुगताः प्राप्ताः उदयोलग्नंच द्व्यंगांशकेषुगतः तान् ग्रहोदयगतान् द्व्यंगांशकान् स्वांशेस्वनवांशकस्थोज्ञोबुधःपश्यतितिसतितदात्रितयंवक्तव्यम् तत्रायंविशेषः ज्ञगांशकवशाद्युग्मंतुइति ज्ञोबुधोगतोव्यवस्थितोयस्मिन्नवांशकेस्थितः तद्वशाद्युग्मम् बुधोयस्मिन्नवांशकेव्यवस्थितः सयल्लिंगांशकस्तल्लिंगंतत्रगर्भेयुग्मंवक्तव्यम् एकस्तद्विपरीतः एतदुक्तंभवति मिथुनांशकस्थोबुधोयदाग्रहोदयगतान् द्व्यंगांशकान्पश्यति तदागर्भेदारकद्वयंदारिकाचैकावक्तव्या अथोकन्यानवांशकस्थोबुधोद्व्यंगांशकव्यवस्थि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तान्ग्रहोदयान्पश्यति तदागर्भेदारिकाद्वयंएकंचदारकंवक्तव्यम् अभिश्रैः सममिति नैर्ग्रहोदयबुधैरमिश्रास्थितेर्द्विस्वभावसमानलिंगस्थितेरस्ति
तयंसममेकलिंगवक्तव्यम् एतदुक्तंभवति मिथुननवांशकव्यवस्थितोबुधोमिथुनधन्व्यंशकव्यवस्थितान् ग्रहोदयान्पश्यति तदागर्भेदारकत्रितयंव
क्तव्यम् अथकन्यांशकव्यवस्थितोबुधःकन्यामीनांशकव्यवस्थितान्ग्रहोदयान्पश्यति तदागर्भेदारिकात्रितयंवाच्यमिति तथाचसारावल्याम्
समराशौशशिसितयोर्विषमेगुरुवक्रसौम्यलग्नेषु योगिस्मिन्गर्भगतंनूनंमिथुनंतुविज्ञेयम् लग्नेंदूवासमगौपुंग्रहदृष्टौचमिथुनजन्मकरौ उद
यलग्नज्ञवक्रगुरवोबलिनःसमराशिगास्तथैवोक्ताः द्विशरीरांशकसुन्कान् ग्रहान् विलग्नंचपश्यतींदुसुते कन्यांशेद्वेकन्येपुरुषश्चनिषिच्यतेगर्भे मिथु
नांशेकन्यैकाद्वौपुरुषौत्रितयमेवंस्यात् मिथुनधनराशिगतान्ग्रहान्विलग्नंचपश्यतींदुसुतः मिथुनांशस्थश्चयदापुरुषत्रितयंतदागर्भे कन्यामी
नांशकस्थान्विद्दगानुदयंयुवतिभागगताःपश्यतिशीतरुतनयः कन्यात्रितयंतदागर्भे १४ अथधनात्याधिकगर्भसंभवयोगज्ञानमुपजातिकयाह धन्
तुरिति धन्विलग्नेधनुर्धरांशकेवोदयंलग्नमुपगते धनुर्धरस्यधनुषोंत्यगगतेविलग्नेधन्व्यंशकेचोपगतेग्रहैः सर्वैरेवतदंशोपगतेयत्रतत्रराशौधन्विनवां-

धनुर्धरस्यांत्यगतेविलग्नेग्रहैस्तदंशोपगतैर्बलिष्ठैः ज्ञेनार्किणावीर्ययुतेनदृष्टेसंतिप्रभूताअपिकोशसंस्थाः १५ कललघनांकुरा
स्थिचर्मांगजचेतनताःसितकुजजीवसूर्यचंद्रार्किबुधाः परतःउदयपचंद्रसूर्य नाथाःक्रमशोगदिताःभवतिशुभाशुभंच-
मासाधिपतेःसदृशम् १६ शकस्थैर्नकेवलंयावद्बलिष्ठैर्वीर्यवद्भिस्तस्मिंश्चलग्नेज्ञेनार्किणाचदृष्टेज्ञेनबुधेनआर्किणाशनैश्चरेणचवीर्ययुतेन
बलवतादृष्टेवलोकितेप्रभूताबहवः कोशसंस्थाजरायुवेष्टितविग्रहागर्भेसंतिभवंतीति पंचसप्तदशयावत् पूर्वमुक्तंमासाधिपतेर्निपीडितेतत्कालस्य
वर्णंसमादिशेदिति १५ तदधुनागर्भस्यमासाधिपानत्रोटकेनाह कललइति सिताद्याग्रहागर्भस्यप्रथममासात्प्रभृतिकललादीनिभवंतिवर्तयंति त
द्यथा गर्भस्यप्रथमेमासिकललंभवति शुक्रशोणितेघनेसंमिश्रीभूते तत्रगर्भस्यतस्मिन्मासेसितः शुक्रोधिपतिः द्वितीयेघनताकाठिन्यंभवति तत्रतस्य
कुजोंगारकोभौमोधिपतिः तृतीयेंकुरोसनिर्हस्ताद्यवयवजन्मतत्रजीवोबृहस्पतिरधिपतिः चतुर्थोस्थिसंभवः तत्रसूर्योरविरधिपतिः पंचमेचर्मसंभवस्तत्रचं
द्रोधिपतिः षष्ठेंगजसंभवोलोमजन्मतत्रार्किः सौरोधिपतिः सप्तमेचेतनतासंभवोभवतिचेतनतास्वभावः तत्रबुधोधिपतिःबुधमासात्परतोयेन्येशे २३
षामासास्तेगर्भस्पर्शनोद्वेगप्रसवकरास्तेषुचोदयपतिचंद्रसूर्यनाथाःस्वामिनःक्रमशोगदिताःउक्ताः तत्राष्टमेमासेगर्भस्थोजंतुरशनंकरोति मात्रासु

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कंपीतंप्रसादैः तस्यानाभिलग्ननलिनेसंक्रमणेतत्रगर्भाधानलग्नाधिपतिर्योग्रहः समासाधिपतिः नवमेगर्भस्थस्योद्वेगोभवति तत्रचंद्रोधिपतिर्भवति दशमे
गर्भस्यप्रसवोप्रसूतिर्भवति तत्र सूर्योरविरधिपतिः तथाचस्वल्पजातके कललघनावयवास्थित्वग्रोमस्मृतिसंभवाः क्रमशः मासेषुशुक्रकुजजीवसूर्यचं
द्रार्किसौम्यानाम् अशनोद्वेगप्रसवाः परतोलग्नेशचंद्रसूर्याणामिति अत्रप्रथमद्वितीयमासाधिपत्योर्यवनेश्वरेणसहमतभेदः तथाचतद्वाक्यम् कुजास्फु
जिज्जीवरवींदुसौरशशांकलग्नेंदुदिवाकराणाम् मासाधिपत्यप्रभवोनचैषांजयोपघातैर्ग्रहवद्वदंति आद्येतुमासेकललंद्वितीयेपेशिस्तृतीयेपिभवंतिशा-
खाः १ अस्थीन्यथस्नायुशिराश्चतुर्थेमज्जातुचर्माण्यपिपंचमेतु षष्ठेत्वसृग्रोमनखौपकृच्च चेतःस्थिताः सप्तममासेचेष्टाः तृष्णाशनास्वादनमष्टमे-
स्यात्सूर्यापरार्थानवमेरतिश्च स्रोतोभिरुद्घाटितपूर्णदेहोगर्भोर्कमासेदशमेप्रसूते आचार्यस्यबहुमतमासानामभिमतमितिभवति शुभाशुभंच मासा
धिपतेः सदृशंगर्भस्यस्वमासाधिपतिसदृशंशुभमशुभंफलंभवति एतदुक्तंभवति आधानकालेयोग्रहोनिपीडितोभवति तन्मासिगर्भस्यपतनंक-

त्रिकोणगेज्ञेविबलैस्तथापरैर्मुखांघ्रिहस्तैर्द्विगुणस्तदाभवेत् अवागगवींदावशुभैर्भसंधिगैः शुभेक्षितैश्चेत्कुरुतेगिरंचिरात् १७

लुषेमंदरश्मौ विवर्णपीडनंनिर्मलेंशुजालसंपन्नेबलवतिपुष्टिरिति तथाचसूक्ष्मजातके कलुषैःपीडापतनंनिपीडितैर्निर्मलैःपुष्टिरिति अथचान्यैः शास्त्रका
रैर्विशेषउक्तः तत्किंचित्प्रदृश्यते तथाचसारावल्याम् तत्रशुभाशुभमिश्रैः कर्मभिर्दधिवासितात्विषयवृत्तिः गर्भवासेनिपततिसंयोगेशुक्रशोणितयोः मिथु-
नस्यमनोभावोयादृक्प्रबलस्यसंभवति श्लेष्मादिभिश्चदोषैस्तत्तुल्यगुणोनिषिक्तस्य यादृक्पश्यतिसौम्यस्तत्तुल्यबलगुणंकृतंसमाधत्ते पितृजननीसादृ-
श्यंरवेः शशांकस्यबलयोगात् सुबोधमेतत् १६ अथाधिकांगमूकचिरलब्धगिरांसंभवयोगान्वंशस्थेनाह त्रिकोणगेति ज्ञेबुधेत्रिकोणगेलग्नान्नवमस्थेपंचमस्थेवा
तस्माद्बुधात्परैरन्यैःसर्वैर्ग्रहैर्यत्रतत्रावस्थितैर्विबलैर्वीर्यरहितैर्मुखांघ्रिहस्तैर्द्विगुणोगर्भस्थोवाच्यः द्विशिरश्चतुष्पाच्चतुर्भुजइत्यर्थः त्रिकोणगेज्ञइत्यत्रकेचिन्मूल
त्रिकोणगेबुधेकन्यागतइत्याहुः तच्चायुक्तं यस्माद्भगवान्गार्गिः बलहीनैर्ग्रहैः सर्वैर्नवपंचमगेबुधे द्विगुणांघ्रिशिरोहस्तोभवत्येकोदरस्तथा १ अवागिति गविवृषे-
स्थितेइंदौचंद्रेअशुभैः पापैर्भसंधिगैः कर्कवृश्चिकमीनानामंत्यनवांशकस्थैर्यदासंभवंतदाअवाङ्मूकोगर्भस्थोवाच्यः शुभेक्षितइतिचेच्छब्दोयद्यर्थेस्त्वाविधयोगेयदिशुभ
वीक्षितः सौम्यग्रहदृष्टश्चंद्रोभवतितदाजातस्यचिराद्बहुनाकालेनगिरंवाचंकुरुते अर्थादेव पापवीक्षितेवाग्धीनइति एवंयोगेमिश्रग्रहवीक्षितेयदासौम्याबलिनस्त
दाचिरेणकालेनलब्धवाग्भवति यदापापाबलिनस्तदानैवेति अत्रचभगवान्गार्गिः कुलीरालिझषांत्यस्थैः पापैश्चंद्रेवृषोपगे मूकःपापेक्षितेः सौम्यैश्चिरेणलभतेगिरं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मिश्रदृष्टैर्ग्रहैर्हीनैर्मूको बालश्च वाक्छिरादिति १७ अथ तासदन्तकुब्जजडजन्मयोगान्मंदाक्रांतयाह सौम्येति रविजः शनैश्चरः रुधिरोंगारकः यत्र तत्र राशौ श
नैश्चरांगारकौ सौम्यर्क्षांशे बुधनवांशके मिथुनांशके कन्यांशके वा भवतः अथवा बुधर्क्षे मिथुनकन्ययोरन्यतमे राशौ स्थितौ भवतः चेच्छब्दो यद्यर्थे यद्येवं तदात्रा
स्मिन्योगे सदंतो दंतसहितो गर्भस्थो वाच्यः केचित्सौम्यर्क्षांशे मिथुने मिथुनांशके कन्यायां कन्यांशके चेतीच्छंति ऋक्षांशयोर्युगपद्ग्रहणात् अंशशब्देन केवले-
नैव सिद्धिः स्यात्तदृक्षग्रहणमतिरिच्यत इति एवंविधे योगे गर्भस्थः सदंतो भवति जातो वा कुब्जः स्वर्क्षे इति शशिनि चंद्रे स्वर्क्षे आत्मीयराशौ कर्कटे स्थिते तन
भामूते च तनुगते तथाभूते मंदमाहेयदृष्टे मंदेन शनैश्चरेण माहेयेनांगारकेण च दृष्टे वलोकिते चंद्रे गर्भस्थो कुब्जो वाच्यः पंगुर्मीन इति मीने लग्नसंस्थे यम
शशिकुजैः दृष्टे पंगुर्गर्भस्थो भवति यमः शनैश्चरः शशी चंद्रः कुजः भौमः एतैर्वीक्षिते दृष्टे पंगुः पादविकलो गर्भस्थो वाच्यः संधौ पापे इति पापे आदित्यकु
जसौरायामन्यतमे शशिनि च चंद्रे संधौ कर्कटवृश्चिकमीनांत्यनवांशगते र्यथासंभवं गर्भस्थो जंतुर्जडः श्रोत्रेंद्रियहीनो वाच्यः न चेत्सौम्यदृष्ट इति एते योगक-

सौम्यर्क्षांशे रविजरुधिरौ चेत्सदंतोऽत्र जातः कुब्जः स्वर्क्षे शशिनि तनुगे मंदमाहेयदृष्टे पंगुर्मीने यमशशिकुजैर्वीक्षिते लग्नसंस्थे संधौ-
पापे शशिनि च जडः स्यान्न चेत्सौम्यदृष्टः १८ सौरशशांकदिवाकरदृष्टे वामनको मकरांत्यविलग्ने धीनवमोदयगैश्च द्रेक्काणैः पापयु
तैरभुजांघ्रिशिरः स्यात् १९

नारीग्रहा यथादर्शितानां चेद्यदि सौम्यैः शुभग्रहैर्दृष्टा न भवंति तदैतद्योगचतुष्टयं पूर्णं वक्तव्यम् सौम्यैर्बलिभिर्निरी
क्षिता योगा न भवंति मध्यबलैर्हीनबलैर्वा दृष्टास्तदा असमग्रफला भवंतीति इति १८ अथ तावामनहीनांगौ दोधकेनाह सौरशशांक इति मकरांत्यविलग्ने
मकरस्यांत्यनवांशके विलग्नस्थे नवमनवांशकोदयमानः स च मकरस्य भवति इत्यर्थः तस्मिंश्च सौरशशांकदिवाकरदृष्टे सौरः शनैश्चरः शशांकश्चंद्रः
दिवाकरः सूर्यः एतैरवलोकिते वामनको गर्भस्थो वाच्यः धीनवमोदयगैरिति अत्र केचिदेवं व्याचक्षते यदा लग्ने द्वितीयद्रेष्काणोदयो भवति तदा तस्य
पंचमराशिसंबंधित्वाद्धीद्रेष्काण इत्याख्या तस्मिन् द्वितीयद्रेष्काणे पापग्रहयुते उदयमनुप्राप्ते नवमे तस्मिन् सौरशशांकदिवाकरदृष्टे गर्भस्थोऽभुजोऽभुज
हीनो वाच्यः एवं यदा लग्ने तृतीयस्य द्रेष्काणस्य उदयो भवति तदा तस्य नवमराशिसंबंधित्वान्नवमद्रेष्काण इत्याख्या तस्मिन्नुदये पापयुते सौरश-
शांकदिवाकरदृष्टेऽनंघ्रिः पादहीनो गर्भस्थो वाच्यः एवं प्रथमद्रेष्काणस्य लग्नसंबंधित्वादुदयद्रेष्काण इत्याख्या तस्मिन्नुदयगते पापयुते सौरशशां २४
कदिवाकरदृष्टेऽशिराः शिरोहीनो गर्भस्थो वाच्यः एतेषु योगेषु सौरशशांकदिवाकराणां दर्शनयोगात्पापयुक्त इति केवलेनांगारकेण युक्ते योगो भवति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अत्राप्यन्येषांनवमोदयगेद्रेष्काणेः पापयुतेः केवलमेवाभुजांघ्रिशिरसांसंभवंव्याचक्षते सौरशशांकदिवाकरदृष्टेइत्यस्यानुवृत्तिंनेच्छंति अन्येविकृजादि-
संभवेयथासंख्यंत्यक्त्वाद्रेष्काणत्रयेपिप्रतिद्रेष्काणंतदुद्भवविकल्पमाहुः विभुजोवानंघ्रिर्वाविशिरावेति अन्येएवंव्याचक्षते यथालग्नेयदाप्रथमद्रेष्काणो
दयोभवति तदापंचमराशौप्रथमद्रेष्काणोनवमोपिप्रथमएवतत्तद्रेष्काणत्रयंयदिपापफलंभवतितदाभुजहीनोगर्भस्थोवाच्यः अथलग्नेद्वितीयद्रेष्काणोद
योभवति तदापंचमनवमयोरपितृतीयएवएतद्रेष्काणत्रयंयदापापफलंभवति तदापादहीनोगर्भस्थोवाच्यः अथलग्नेतृतीयद्रेष्काणोदयोभवति तदापंच
मनवमयोरपितृतीयएवएतद्रेष्काणत्रयंयदिपापफलंभवतितदाशिरोविहीनोगर्भस्थोवाच्यः अत्राप्यन्येयथासंख्यंत्यक्त्वात्रिप्रकारेपियोगे भुजांघ्रिशि-
रोहीनानांविकल्पेनगर्भस्थस्यसंभवमाहुः वयंपुनर्वाब्रूमः निषेककालेयः पंचमराशौयोद्रेष्काणः सयद्यंगारकेणफलः सौरशशांकदिवाकरदृष्टश्चभवति
तदाविभुजोभवति एवंनवमेस्थानेद्रेष्काणोनवमद्रेष्काणः तथानिषेककालेनवमराशौयोद्रेष्काणः सयद्यंगारकेणफलः सौरशशांक दिवाकरदृष्टश्चभवति
तदाअनंघ्रिर्भवति तथानिषेककालेलग्नस्थोद्रेष्काणः सयद्यंगारकेणफलः सौरशशांकदिवाकरदृष्टश्चभवतितदाअशिरागर्भस्थोवाच्यः एषैवव्या-

रविशशियुतेसिंहेलग्नेकुजार्किनिरीक्षितेनयनरहितःसौम्यासौम्यैःसबुद्बुदलोचनः व्ययगृहगतश्चंद्रोवामंहिनस्त्यपरंरवि
र्नेशुभगदितायोगायाप्याभवंतिशुभेक्षिताः २०

रव्यासाध्वी यस्माद्भगवान्गार्गिः लग्नद्रेष्काणगोभौमः सौरसूर्येंदुवीक्षितः कुर्याद्विशिर
संतद्वत्पंचमेबाहुवर्जितम् १ विपदंनवमस्थानेयदिसौम्यैर्नवीक्षितइति तथाचसारावल्याम् भौमफलोद्रेष्काणस्त्रिकोणलग्नेषुसंदृष्टाविभुजांघ्रि-
मस्तकःस्याच्छनिरविचंद्रैर्वदेद्गर्भे १९ अथविकलजन्मज्ञानार्थंहरण्यामाह रविशशिफलेति सिंहेलग्नेरविशशियुतेअर्कचंद्राभ्यांसंफलेतथाभूते-
कुजार्किनानिरीक्षितेभौमसौराभ्यांदृष्टेनयनरहितोभवति नेत्ररहितोंधोगर्भस्थोवाच्यः अथर्दिवकेवलेसिंहलग्नेऽर्केणफलेसौरेंगारकेणदृष्टेदक्षिणाक्षि
काणः एवंसिंहलग्नेकेवलेनचंद्रेणफलेसौरेंगारकेणदृष्टेवामाक्षिकाणः सौम्यासौम्यैः सबुद्बुदलोचनइति तस्मिन्नेवसिंहलग्नेऽर्कचंद्राभ्यांयुक्तेसौ-
म्यासौम्यैः शुभपापग्रहैर्दृष्टेगर्भस्थः सबुद्बुदलोचनःपुष्पितास्रोवाच्यः अत्राप्येकतमफले प्रागवत्पुष्पिताक्षित्वंवाच्यं व्ययगृहगतइति निषेककालल
ग्नाज्जन्मलग्नाद्वायस्यचंद्रमाव्यय गृहगतोद्वादशस्थोभवति तस्यवामंचक्षुर्हिनस्तिवामाक्षिकाणःसभवतीत्यर्थः एवंरविरादित्योलग्नाद्द्वादशोऽपरंद
क्षिणंचक्षुर्हिनस्ति अशुभगदितायोगाइति यएतेयोगाःप्रागभिहितास्त्रिकोणगेइत्यादिनाग्रंथेनशुभाशुभफलदास्तेषांसर्वेषामेवयोगानांयदायोग

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कर्त्तारोग्रहाः शुभग्रहैः सौम्यग्रहैः दृष्टाभवंति तदातेयोगाख्याभवंति पूर्णंयथोक्तंफलंनप्रयच्छंति किंतुकिंचित्प्रयच्छंतीत्यर्थः २०अथप्रश्ना
धानकालेयोगवशात्प्रसवकालज्ञानंवसंततिलकेनाह तत्कालमिंदुसहितेति तत्कालमिंदुः तत्कालेप्रश्नकालेआधानकालेवायस्मिन्राशौचंद्रमावर्त्त
तेनत्रचयस्मिन्द्वादशभागेव्यवस्थितः सतत्कालमिंदुसहितोद्विरसांशकः केचित्तुतत्कालिकेंदु सहितोद्विरसांशकइतिपठंति तत्कालिकेंदुनायावत्सं
ख्योद्वादशभागसहितः तत्तुल्यस्तावत्संख्योमेषादोगणनयायोराशिस्तत्रस्थेचंद्रमसिपुरतोऽग्रतोदशमेमासिगर्भस्यप्रसवोवाच्यइतिकेचित्
तथाचसारावल्याम् यस्मिन्द्वादशभागेगर्भाधानेव्यवस्थितश्चंद्रः तत्तुल्यर्क्षेप्रसवोगर्भस्यसमादिशेत्प्राज्ञः १ अन्येपुनरेवंव्याचक्षते आधानकालेयत्र
राशौचंद्रमाव्यवस्थितस्तत्रयावत्संख्योद्वादशभागोवर्त्तते तस्माद्द्वादशभागराशेस्तावत्संख्योयएवपुरतोराशिस्तत्रस्थेचंद्रमसिदशमेमासिप्रसवोवक्तव्यः
एषैवसाध्वीव्याख्या यस्माद्भगवान्गार्गिः यावत्संख्येद्वादशांशेशशिनरश्मिर्व्यवस्थितः तत्संख्योयस्ततोराशिर्जन्मेंदुस्तद्गतोवदेत् १ अत्रापिनक्षत्रानयने
यमनुपातोपायः यदिचंद्राक्रांतद्वादशभागप्रमाणेनसकलचंद्रराशिरष्टादशशतलिप्ताप्रमाणंलभ्यते तदनेनभुक्तद्वादशराशिप्रमाणेनकिमितिलब्धंचं

तत्कालमिंदुसहितोद्विरसांशकोयस्तत्तुल्यराशिसहितेपुरतः शशांके यावानुदेतिदिनरात्रिसमानभागस्तावद्गतेदिननिशोःप्रवदं
तिजन्म २१

द्रराशिफलंलभ्यते ततोष्टशतलिप्तापरिकल्पनयानक्षत्रमूल्यम् अत्रापिदिनरात्रिकालज्ञानमाह यावानुदेतिदिनरात्रिलग्नाः
पूर्वंव्याख्याताः गोजाश्विककर्किमिथुनाइत्यादि आधानकाले प्रश्नकालेवायल्लग्नंतस्ययः प्रविभागः दिनसंज्ञोरात्रिसंज्ञोवायावानुदेतिस्वमानात्यावत्का
लभागोगतस्तावत्येवदिननिशोः स्वमानाद्गतेकालेजन्मभविष्यतीतिवाच्यमेवम् दिनस्यरात्रेर्वागतकालंबुध्वाप्रसवकालेलग्नहोराद्रेष्काणनवांशकद्वादशभाग
त्रिंशांशकावाच्या अत्रयेप्रवदंतिकथयंति तेषांतद्वाक्यंसारावल्याम् तत्कालंदिवसनिशासंज्ञः समुदेतिराशिभागोयः यावानुदयस्तावान्वाच्योदिवसस्यरात्रेर्वा
इत्याधानेप्रथमंसूतिकालंस्तनिश्चितंकृत्वा जातकविहितंचविधिंविचिंतयेत्तत्रगणितज्ञः २१ अधुनाधृतस्यगर्भस्यवर्षत्रयवर्षद्वादशज्ञानंमालिन्याह उद
यतीति मृदोः सौरस्यभांशेमृदुभांशोनिषेककालेयस्यतस्यलग्नस्योदयेमृदुभांशेशनैश्चरराशिनवांशकेमृगांशकेकुंभांशकेवोदयेइति तथाभूतेतस्माद्देवल
ग्नात्मंदेशनैश्चरेतत्कालेसप्तमस्थेद्यूनगतेएवंविधेयोगेयदिनिषेकोआधानंभवतितदाधृतस्यगर्भस्याब्दत्रयेण वर्षत्रयेणसूतिकायाः प्रसवोवक्तव्यः श २५
शिनीति एषएवंविधिर्यदाशशिनिचंद्रेभवति तदाद्वादशेब्देद्वादशेवर्षेसूतिः प्रसवंकुर्यात् एतदुक्तंभवतियस्यतस्यलग्नस्योदयेयदाकर्कटांशकोदयोभवति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तस्माल्लग्नात्सप्तमस्थे चंद्रे भवति तदाधृतस्य गर्भस्य द्वादशेऽब्दे प्रसवो वाच्यः निगदितमिहोति इहास्मिन्नाधानाध्याये आधानकालयोगवशाद्यथाहीना

धिकांगादिनां गर्भः संभवति तथा प्रसूतिकालेऽपि ताद्दग्योगवशात्तथाभिधानामेव जन्म वक्तव्यम् पितृमातृपितृव्यमातुलमातृस्वसॄणामपि शुभाशुभं जं

न्मकालवशात्तदनंतरमपि वक्तव्यम् कृत्स्येति यत्र संभवति तत्र वक्तव्यम् यथा गर्भस्रावादिगर्भप्रसवकालनिर्देशादि च एवमाधानकालान्प्रसवका-

लाच्च यथैवोद्देशः कृतः तथा प्रश्नकालादपि वक्तव्यः उक्तं च जन्मन्याधाने प्रश्नकाले वेति २२ इति श्रीभट्टोत्पलविरचितायां बृहज्जातकविवृतौ नि

षेकाध्यायश्चतुर्थः ४ अथातो जन्मविधिर्नामाध्यायो व्याख्यायते तत्रादावेव पितुः सन्निधावसन्निधौ वा जात इत्यनुष्टुभाह पितुर्जात इति इंदौ चं

द्रे प्रसवलग्नमपश्यति सति पितुः परोक्षस्य जनकस्यासन्निधौ जातः तत्र पितुरसन्निधाने स्वदेशपरदेशस्थितिज्ञानमाह विदेशस्थस्येति दिवाकरे सूर्ये चं

रभे चरराशिस्थितमध्याद्भ्रष्टे मध्याद्दशमस्थानाद्भ्रष्टे पतिते एकादशद्वादशस्थे नवमाष्टमस्थानस्थे पितुर्विदेशस्थस्य अन्यदेशगतस्य जातः चंद्रमसि

उदयति मृदुभांशे सप्तमस्थे च मंदे यदि भवति निषेकः सूतिरब्दत्रयेण शशिनि तु विधिरेष द्वादशेऽब्दे प्रकुर्यान्निगदितमिह चिंत्यं सू

तिकालेऽपि युक्त्या २२ इति निषेकाध्यायः स० ४ पितुर्जातः परोक्षस्य लग्नमिंदावपश्यति विदेशस्थस्य चरभे मध्याद्भ्रष्टे-

दिवाकरे १ उदयस्थेऽपि वा मंदे कुजे वास्तं समागते स्थिते वांतः क्षपानाथे शशांकसुतशुक्रयोः २ प्रसवलग्नमपश्यत्येष योगो नान्यथेति-

चंद्रे प्रसवलग्नमपश्यति अर्के स्थिरराशिस्थे मध्याद्भ्रष्टे स्वदेशस्थस्यापि पितुः परोक्षे जातः अस्मिन्नेव योगे द्विस्वभावस्थेऽर्के मध्याद्भ्रष्टे स्वदेशपरदेशयोर्मध्योप

स्थितस्य परोक्षे जातः मार्गमध्य इत्यर्थः अथवा इंदौ चंद्रे प्रसवलग्नमपश्यत्यर्के चरराशिस्थे स्थिरराशिस्थे वा द्विस्वभावराशिस्थे वा मध्याद्भ्रष्टेऽपि वा पितुः स्व

देशस्थस्यैव परोक्षे सन्निधौ जात इति वक्तव्यम् तथा च सारावल्याम् होरामनीक्ष्यमाणे पितरि [illegible]गेहस्थिते शशिनि जातः मेषूरणात् च्यूनेवा चरगे भानौ विदे

शगते १ अथान्यानपि योगाननुष्टुभाह उदयस्थ इति मंदे सौरे उदयस्थे लग्नगते पितुः परोक्षस्य जातः वा शब्दः प्रकाशाय अथवा कुजे भौमे जन्मलग्नाद

दस्तं सप्तमं स्थानं समागते प्राप्ते पितुः परोक्षस्य जात इति स्थिते वांत इति क्षपानाथे चंद्रे शशांकसुतशुक्रयोर्मध्यस्थे शशांकसुतो बुधः शुक्रो भार्गवः

अनयोर्मध्ये स्थिते चंद्रे चंद्रादेको द्वादशेऽन्यो द्वितीये अथवैकस्मिन्राशौ मध्यभागेषु चंद्रः स्थितः आद्यंतभागयोर्बुधशुक्रौ तथापि मध्यस्थः एवंविधे योगे पितुः परोक्ष

स्य जातः तथा च स्वल्पजातके चंद्रे लग्नमपश्यति मध्ये वा सौम्यशुक्रयोश्चंद्रे जन्म परोक्षस्य पितुर्यमोदये वा कुजे चास्त इति २ ५ ५

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अधुनासर्पवेष्टितजन्मज्ञानंचानुष्टुभाह शशांकेति वृश्चिके शोभौमः वृश्चिकस्वामीत्यर्थः शशांकेचंद्रे वृश्चिकेशत्रिभागगेभौमद्रेष्काणस्थेचंद्रे तत्रभौमद्रेष्काणः मेषेप्रथमः कर्कटेद्वितीयः सिंहेत्रितीयः वृश्चिकेप्रथमः धनेद्वितीयः मीनेतृतीयः एषामन्यतमस्थस्यचंद्रमसः शुभैः शुभग्रहैः स्वायस्थितेर्द्वितीयैकादशस्थान स्थितेः सर्पउरगोजानइत्येवोक्तम् पापलग्नेति एवंपापलग्नसंबंधिलग्नोदयेयदाभौमद्रेष्काणोभवति तत्रपापलग्नेभौमद्रेष्काणः मेषेप्रथमः कर्कटेद्वितीयः सिंहेतृतीयः वृश्चिकेप्रथमः धनुषिद्वितीयः मीनेतृतीयः एषामन्यतमस्योदयेलग्नायदिशुभग्रहैर्द्व्येकादशस्थैस्तद्वेष्टितः सर्पवेष्टितोजंतुर्जातइतिवक्तव्यम् अन्येपुनरेवंव्याचक्षते चंद्रेपापलग्नेवाभौमद्रेष्काणस्थेनस्यादेवशुभग्रहैः स्वायस्थितैः विकल्पेनसर्वोपि सर्पवेष्टितोवाजातइतिवक्तव्यम् अत्रपूर्वव्याख्यासाध्वी यस्माद्भगवान्गार्गिः भौमद्रेष्काणगे चंद्रेसौम्यैरायधनस्थितैः सर्पस्तद्वेष्टितस्तद्वत्पापलग्नेविनिर्दिशेत् १ तथाचसारावल्याम् भौमद्रेष्काणगेचंद्रेलग्नेवासंस्थितेवतेज्जातम् व्येकादशगैःसौम्यैरहिवेष्टितकोभुजंगोवा २ अधुनैकजरायवेष्टितयोर्जन्मज्ञानमनुष्टुभाह चतुष्पदेति भानौ

शशांकेपापलग्नेवावृश्चिकेशत्रिभागगे शुभैःस्वायस्थितेर्जातःसर्पस्तद्वेष्टितोपिवा ३ चतुष्पदगते
भानौशेषैर्वीर्यसमन्वितैः द्वितनुस्थैश्चयमलौ भवतःकोशवेष्टितौ ४ छागेसिंहेवृषेलग्नेतत्स्थसौरेथवाकु
जे राश्यंशसदृशेगात्रेजायतेनालवेष्टितः ५ नलग्नमिंदुंचगुरुर्निरीक्षतेनवाशशांकंरविणासमागतम् स
पापकोर्केणयुतोथवाशशीपरेणजातंप्रवदंतिनिश्चयात् ६ सूर्येचतुष्पदराशिगतेमेषवृषसिंहधन्विपरार्द्धमकरपूर्वार्धानामन्य

तमस्थेशेषैरन्यैः सर्वग्रहैर्द्वितनुस्थैर्द्विस्वभावराशिस्थितैः स्ववीर्यसमन्वितैर्बलिभिश्चकोशवेष्टितौएकजरायुवेष्टितौयमलौजायेते ४ अधुनानालवेष्टितजन्मज्ञानमनुष्टुभाह छागेति छागोमेषः सिंहःप्रसिद्धः वृषोवृषभः एतैः छागसिंहवृषैर्लग्नस्थितैः एषामन्यतमेयदिलग्नगतोभवतितत्स्थे सौरेऽथवाकुजेतस्मिन्छागसिंहवृषाणामन्यतमेलग्नगतेतत्स्थेतत्रस्थेसौरेशनैश्चरेऽथवाकुजेभौमेतत्रस्थेनालवेष्टितोजंतुर्जायते नालशब्देननाड्याभिधीयंते कस्मिन्नंगेवेष्टितइत्याह राश्यंशसदृशेगात्रेति राशेरंशोराश्यंशः राशेः लग्नस्ययोनवांशकस्तत्कालमुदितः सचयद्राशिसंबंधिसचराशिर्यस्मिन्नंशेकालपुरुषस्य व्यवस्थितः कालांगानीत्यादिनाग्रंथेननिरूपित स्तत्सदृशेगात्रेतस्मिन्नेवांगेनाड्यावेष्टितइतिवक्तव्यम् तथाचसारावल्याम् सिंहाजगोभिरुदयेसूतेनालेनवेष्टितोजंतुः लग्नेकुजेथसौरेराश्यंशसमानगात्रेषु ५ अधुनाजारजातकज्ञानंवंशस्थेनाह



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नलग्नमिति गुरुर्जीवो लग्नमुदयमिंदुं चंद्रं च यदि न निरीक्षते न पश्यति लग्नचंद्रावेकराशिस्थौ पृथक्स्थौ वा यदा भावपि गुरुणा न दृश्येते तदा परेण जारेण जात इ
तिनिश्चयात्प्रवदंति कथयंति मुनयः अत्र यदि लग्नचंद्रौ जीवभागस्थौ जीवनवांशकस्थौ भवतः तदा न परजात इति वक्तव्यम् यस्माद्यवनेश्वरः उजीवभागेप्य
नवीक्षिते वा जीवेन चंद्रे प्युविलग्नभे वा जातं परोद्भूतमिति ब्रुवंति वाच्यो जनेनाथ बलावलोकादिति १ नवांशशशांकमिति शशांकं चंद्रं रविणा सूर्येण समागतं संयु
क्तं गुरुर्न निरीक्षते चंद्रार्कावेकराशिस्थौ यदि च बृहस्पतिना न दृश्येते तदा परेण जातः अथवा शशी चंद्रः सपापश्च पापग्रहेण भौमेन सौरेण वा युक्तः तथाविधोऽर्के-
ण यदि युक्तो भवति तथापि परेण जात इति अत्राप्यन्ये जीवदृष्ट्यानुवर्तिव्याख्यानं कुर्वंति तदयुक्तम् यस्माच्चंद्रार्कावेकराशिगतौ पापयुक्तौ वा युक्तौ वा जी
वेन दृश्यमानौ वा जारजातजन्मकरौ तत्र चंद्रार्कयोर्योगः पापेन समेत्य किं फलं भवति तस्माच्चंद्रार्कावेकराशिगतौ अपापौ जीवेनादृश्यमानौ अदृश्य-
मानौ वा जारजातजन्मकरौ निश्चयात्प्रवदंति अत्र चंद्रमा यदि बृहस्पतिगृहे तद्द्रेष्काणे तन्नवांशके द्वादशभागे त्रिंशद्भागस्थो भवति अन्यत्र वा राशौ
गुरुणा युक्तस्तदा न जारजात इति यस्माद्भगवान्गार्गिः गुरुक्षेत्रगते चंद्रे तद्युक्ते वान्यराशिगे तद्द्रेष्काणे तदंशे वा न परैर्जात इष्यते ६ अधुना जातस्य पितु

क्रूरर्क्षगताव शोभनौ सूर्याद्द्यूननवात्मजस्थितौ बद्धस्तु पिता विदेशगः स्वे वा राशिवशादथो पथि ७ पूर्णे शशिनि स्वरा
शिगे सौम्ये लग्नगते शुभे सुखे लग्ने जलजे स्तगेपि वा चंद्रे पोतगता प्रसूयते ८

बंधनयोगज्ञानं वैतालीयेनाह क्रूरर्क्षगतावि
ति क्रूरर्क्षाणि क्रूरग्रहराशयः मेषसिंहवृश्चिकमकरकुंभाः कृष्णपक्षस्थे क्षीणचंद्रे कर्कटः पापयुक्ते बुधे पि कन्यामिथुने अशोभनौ पापौ शनिभौमौ
क्रूरर्क्षगतौ पापक्षेत्रास्थितौ सूर्यादिरवेर्द्यूननवात्मजस्थितौ द्यूनं सप्तमं नवमं प्रसिद्धं आत्मस्थानं पंचमं एषामन्यतमस्थौ भवतस्तदा जातस्य पिता जनको
बद्धो वाच्यः तस्यादित्याक्रांतराशिवशाद्बंधनदेशज्ञानमाह स्वे वा राशिवशादथो पथीति चरराशिस्थेऽर्के परदेशे बद्धः स्थिरराशिस्थेऽर्के स्वदेशे द्विस्व
भावे पथि मार्गे एवं राशिवशात्स्थानपरिज्ञानम् अथो इत्ययं निपातो विकल्पेन केचित्स्वे वा चरराशिवशात्तथा पथीति पठंति ७ अथ नौपोतगतप्रसवज्ञानं वैता-
लीयेनाह पूर्णेति शशिनि चंद्रे पूर्णे परिपूर्णमंडले तस्मिंश्च स्वराशिगे कर्कटस्थिते तथा सौम्ये बुधे लग्नगते उदयस्थे शुभे जीवे एवं सुखे चतुर्थस्थे पोतगता नौस्था
प्रसूयते इति वक्तव्यम् तत्रान्ये शुभैः सुखे इति पठंति पतित्वात्तेवं व्याचक्षते शुभैः सुखे चतुर्थभवने शुभौ रिति बहुवचनं न घटते लग्ने बुध उक्तः शुक्र
बृहस्पती शेषौ शुभौ शुभाविभित्येवं प्राप्नोति यत्क्रियते शुभौ रिति तस्मादेवमवसीयते पूर्णश्चंद्रमाः शुक्रबृहस्पतिभ्यां युक्तो भवति तदा शुभौ रिति भ्र

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वति एतच्च मेषलग्ने तत्रस्थे बुधे पूर्णचंद्रे शुक्रबृहस्पतिभ्यां समायुक्ते कर्कटव्यवस्थिते सर्वं युज्यत इति अयं पाठो भट्टोत्पलव्याख्यानेनयुक्तः यस्मान्मकरावस्थितेऽर्के
कर्कटस्थश्चंद्रमाः पूर्णो भवति मकरव्यवस्थिते चार्के मकराच्चतुर्थभवने मेषे बुधस्य संभवो नास्ति किंतु नर्मकरात्सप्तमराशौ कर्कटके शुक्रस्याप्यवस्थानमि
ति तस्माच्छुभे सुखे इति सम्यक्स्यैकवचनांत एव पाठोन्याय्यः शुभे सुखे इति नत्वकपंजीवो व्याख्यानः उच्यते बुधो लग्नगतस्तस्माच्चतुर्थे शुक्रस्यावस्था
नं न भवति अतो जीव इति व्याख्यातं केचित्पूर्वशास्त्रानुसारेणेति शुक्रं इच्छंति अथ पोतगता प्रसवयोगो द्वितीयः लग्ने जलज इति लग्ने जलजे जलरा
शौ कर्कटमकरपश्चिमार्द्धमीनानामन्यतमेतस्माद्लग्ने सप्तमस्थानस्थे चंद्रे पूर्णे वा पूर्णे च पोतगते वं प्रसूयत इति वा शब्दः प्रकारार्थः ८ अथोदकमध्य-
प्रसवज्ञानं वैतालीयेनाह आप्योदय इति आप्यराशयो मकरपश्चार्द्धकर्कमीनास्तेषामन्यतमस्योदये आप्योदये जलराशिर्लग्ने भवति शशी चंद्रश्चाप्यगो
जलराशिस्थः तदा सूतिः प्रसवः सलिले जलसमीपे न संशयः निश्चयात् अन्यः अथवा संपूर्णः शशी लग्नगमाप्योदयं समवेक्षते पश्यति तथापि सलिले-

आप्योदयमाप्यगः शशी संपूर्णः समवेक्षतेथवा मेषूरणबंधुलग्नगः स्यात्सूतिः सलिलेन संशयः ९ उदयोडुपयोर्व्यय-
स्थितेगुप्तिपापनिरीक्षितेयमे अलिकर्किंयुते विलग्नगे सौरे शीतकरेक्षिते वटे १० मंदेऽजगते विलग्नगे बुधसूर्येंदुनि
रीक्षिते क्रमात् क्रीडाभवने सुरालये सोखरभूमिषु च प्रसूयते ११

जलसमीपे प्रसूतिः मेषूरणबंधुलग्न इति अथवाप्यराशौ
पगते मेषूरणबंधुलग्नगे मेषूरणे दशमे बंधुस्थाने चतुर्थे लग्ने प्राग्लग्ने गो स्थितः स्याच्चेत्तथापि सलिले प्रसूतिरिति वदेत् तथा च सारावल्याम् स-
लिलप्रलग्ने चंद्रो जलराशौ वीक्ष्यते थवा पूर्णः प्रसवं सलिले विंद्यात् द्युदयदशमश्च यदा १ अधुना बंधनागारावटयोः प्रसवज्ञानं वैतालीयेनाह उद
येति उदयो लग्नं उडुपश्चंद्रः तयोरुदयोडुपयोरेकराशिस्थयोर्यमे सौरे व्यवस्थिते द्वादशस्थे तस्मिंश्च पापनिरीक्षिते गुप्त्यां बंधनागारे प्रसूयते
इति वक्तव्यम् सौरे शनैश्चरे अलिकर्किंयुते वृश्चिककुलीरयोरन्यतमस्थे विलग्नगे तस्मिंश्च शीतकरेक्षिते चंद्रदृष्टे वटे श्वभ्रे प्रसूतिर्वक्तव्या १०
अथ क्रीडागृहदेवालय सोखरभूमिप्रदेशेषु प्रसवज्ञानं वैतालीयेनाह मंदेति मंदे शनैश्चरे अजगते जलराशिस्थे तथाभूते विलग्नगे प्राग्लग्नस्थे
क्रमात्परिपाट्या बुधसूर्येंदुनिरीक्षिते बुधः क्रीडाभवने सुरालये सोखरभूमिषु च प्रसूयत इति वदेत् एतदुक्तं भवति शनैश्चरे जलराशिस्थे ल
ग्नगते बुधनिरीक्षिते बुधदृष्टे क्रीडाभवने रतिगृहे प्रसूयते एवं सूर्येणार्केण निरीक्षिते सोखरभूमिषु सवालुकास्ववनिषु प्रसूयत इति ११ २७

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथश्मशानरम्यप्रदेशाग्निशालानृपदेवगृहगोकुलशिल्पालयप्रसवज्ञानमेवोपजातिकयाह नृलग्नगमिति पूर्वश्लोकान्मंद इत्यनुवर्त्तते
प्रत्यासन्नत्वात् नृलग्नगं नरराशिलग्ने स्थितं नरराशयो मिथुनकन्यातुलाधन्विपूर्वार्धकुंभाः तत्रगतं शनैश्चरं कुजोंगारकः प्रेक्ष्य दृष्ट्वा भौमो
यदि पश्यति तदा श्मशाने प्रसवं जन्म करोति केचिन्नृलग्नं दृशीक्षितिज इति पठंति नृलग्नगं पश्यति तच्छीलो नृलग्नं दर्शी क्षितिजः रम्येसितेंदूइ
ति नरराशिं लग्नगतं शनैश्चरं संयुक्तं सितः शुक्रः इंदुश्चंद्रो वा पश्यति तदा रम्ये रमणीयमंदिरे जन्म एवंविधं सौरं गुरुर्जीवः पश्यति तदा अ-
ग्निहोत्रे ऽग्निशालायां एवंविधं सौरिं रविः पश्यति तदा नरेंद्रामरगोकुलेषु नरेंद्रगृहे राजवेश्मनि अमरगृहे देवागारे वा गोकुले वा गोशालायां
प्रसूतिः जन्म एवमेव बुधेन दृष्टे सौरे शिल्पालये शिल्पिगृहे चित्रपुस्तककरवर्धाकिप्रभृतीनां शिल्पिनां प्रसिद्धानामन्यतमस्य गृहे प्रसूतिरिति
तथा च सारावल्याम् रविजे जलजविलग्ने क्रीडोद्याने बुधेक्षिते प्रसवः रविणा देवागारे तथा रवरे चैव चंद्रेण १ आरण्यभवनलग्ने गिरिव
नदुर्गे तथा नरविलग्ने रुधिरेक्षिते श्मशाने शिल्पिकनिलये च सौम्येन तथा च बादरायणः सूर्येक्षिते गोनृपदेववासे शुक्रेंदुजाभ्यां रमणीयदेशे क्रूरे-

नृलग्नगं प्रेक्ष्य कुजः श्मशाने रम्ये सितेंदू गुरुरग्निहोत्रे रविर्नरेंद्रामरगोकुलेषु शिल्पालये ज्ञः प्रसवं करोति १२ राश्यंशस
मानगोचरे मार्गे जन्म चरे स्थिरगृहे स्वर्क्षांशगते स्वमंदिरे बलयोगात्फलमंशकर्क्षयोः १३ ज्यदृष्टे द्विजवन्हिहोत्रे नरोदये संभवदंति-

सूतिं १२ अथ प्रसवदेशज्ञानं वैतालीयेनाह राश्यंशेति राशिश्च अंशाश्च तद्राश्यंशं राशिर्लग्नराशिरंशो नवांशकः लग्नराशेस्तन्नवांशकस्य वा यः समानः हशस्त्व
लीयगोचरो विषयः स्वचराश्च सर्व इत्यनेन प्रदर्शितः तत्र यस्मिन्यस्मिन्प्रदेशे यो यो राशिरूपः प्राणी संचरति तत्र यो मार्गः पंथास्तस्मिन् जन्म यदि चरलग्न-
स्तन्नवांशको वा यदि चरो भवति अथ लग्नराशिस्तन्नवांशको वा स्थिरस्तदा राशिरूपतुल्यस्य प्राणिनः यस्मिन् गृहे यत्र प्रसवे सति तत्स्थाने राशिस्वरूपतु-
ल्यस्य प्राणिनो यद्गृहं समीपस्तत्र प्रसव इत्यर्थः स्वर्क्षांशगत इति चरस्य स्थिरस्य द्विस्वभावस्य वा राशेर्लग्नगतस्य स्वर्क्षांश आत्मीयनवांशको द्वयोर्यदा
भवति तदा स्वमंदिरे आत्मीयगृहे एव जन्म वक्तव्यम् तत्र राश्यंशसमानगोचरे मार्गे जन्म इत्यादि सामान्येनोक्तं तत्र ज्ञायते किं लग्नराशिसमानगोचरे कि
मंशसमानगोचरे प्रसवोद्देशः क्रियतां तदर्थमयं निश्चयः बलयोगादिति अंशको नवांशकः ऋक्षं राशिः अनयोर्बलयोगात्फलं प्रसवस्थानज्ञानं एतदुक्तं भव
ति लग्नराशेर्नवांशकराशेश्च यो बलवांस्तत्समानगोचरे मार्गगृहसमीपेषु प्रसवो वक्तव्यः अत्र पूर्वोक्ता योगा भावे राश्यंशसमानगोचरमार्गादिषु प्रसवो व

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

क्तव्यः तेषां संभवे योगोक्तप्रदेशेषेव प्रसवो वक्तव्यः १३ अथ यस्मिन्योगे जातो मात्रा त्यज्यते यस्मिंश्च योगे जातस्त्यक्तोपि मात्रा दीर्घायुः क्रूरवीर्यश्च भ-
वति तद्योगद्वयं वैतालीयेनाह आरार्केति चंद्रे शशिन्यारार्कजयोर्भौमसौरयोरेकराशिगतयोस्त्रिकोणगे नवमस्थे पंचमस्थे वा उक्ते च सप्तमे स्थाने स्थि-
ते जातो बयामात्रा विसृज्यते त्यज्यते एवंविधे योगे चंद्रमसि अमरराजमंत्रिणा गुरुणा दृष्टे मात्रा त्यक्तोपि परहस्तगतोपि दीर्घायुः चिरजीवी क्रूरवशाक्रू
चक्रविभोगी भवति १४ अथ यस्मिन्योगे जातो मात्रा त्यक्तो विनश्यति तद्वसंततिलकेनाह पापेक्षित इति तुहिनगौ चंद्रे पापेक्षिते पापग्रहदृष्टे सौरेण
केणवेत्यर्थः तथाभूते उदये लग्ने स्थिते कुजे भौमे क्षेसप्तमस्थानस्थे जातो मात्रा त्यक्तो विनश्यति म्रियत इत्यर्थः कुजार्कजयोरिति तथा तेनैव प्रका-
रेण लग्नगते चंद्रमसि पापेक्षिते सूर्यदृष्टे कुजार्कजयोर्भौमशनैश्चरयोरायं एकादशस्थितयोर्जातो मात्रा त्यक्तोपि विनश्यति म्रियत इत्यर्थः सौम्येपि प-
श्यतीति पूर्वोक्तयोगस्थे चंद्रमसि पापदृष्टे सौम्ये शुभग्रहेपि पश्यति स तु जातो मात्रा त्यज्यते त्यक्तोपि यादृग्वर्णप्रभुणा सौम्यग्रहेण चंद्रमा दृष्ट-
स्तयाविधस्य हस्तमेति तादृग्वर्णस्य ब्राह्मणादेर्हस्तं गच्छति तेन उत्थापितो जीवति च अथास्मिन्नवयोगे स्थितश्चंद्रमा पापेन कुजेन सूर्येण सौरेण वा दृश्यते ज्येन

आरार्कजयोस्त्रिकोणगे चंद्रे ऽस्ते च विसृज्यते ंबया दृष्टेमरराजमंत्रिणा दीर्घायुः क्रूरवशाक्रुचसस्सुतः १४ पापेक्षिते तुहि-
नगावुदये कुजेस्ते त्यक्तो विनश्यति कुजार्कजयोस्तथाये सौम्येपि पश्यति तथाविधहस्तमेति सौम्येतरेषु परहस्तगतोप्यना

सुः १५ सौम्यग्रहेण च दृश्यते तदा जातो तयोर्दृष्टग्रहयोर्यो बलवान् तादृग्वर्णस्य ब्राह्मणादेर्हस्तं गतोपि विनश्यति यदुक्तं सौम्येतरेषु परहस्त-
गतोप्यनाशुरिति ननु यथा योगस्थे चंद्रमसि सौम्यैः पापैश्च दृश्यमाने मात्रा त्यक्तो विनश्यतीत्यभिहितं तत्र क्षत्रियवैश्यशूद्रवर्णसंकरादिषु हस्तगतः सर्व एव
विनाशमाप्नोति बहवश्च मात्रा त्यक्ताः क्षत्रियादिवर्णसंकरगताश्च जीवमाना दृश्यंते तस्मात्पूर्वश्लोकात् दृष्टेऽमरराजमंत्रिणा दीर्घायुः क्रूरवशाक्रुचसस्सुत इत्येन
द्विशेषभूतमवगंतव्यं तस्माद्बुधेन शुक्रेण वा यथा दर्शितयोगस्थश्चंद्रमा दृश्यते जीवेन न दृश्यते तदा परहस्तगतोपि म्रियते यदा पापेन सौम्येन वा दृश्यमानोपि-
जीवेन दृश्यते तदा दृश्यग्रहबलवशात्तद्वर्णस्य ब्राह्मणादेर्हस्तगतो जीवति तथा च सारावल्याम् म्रियते पापैर्दृष्टः शशिनि विलग्ने कुजेस्तगे त्यक्तः लग्नाच्च लाभगत-
योर्वसुधासुतमंदयोरेवम् पश्यति सौम्यो बलवान् यादृग्गृण्हाति तादृशो जातं शुभपापग्रहदृष्टे परैर्गृहीतोप्यसौ म्रियते सर्वेष्वेतेषु यदा योगेषु शशि शुक्र-
ज्यसंदृष्टः भवति तदा दीर्घायुर्हस्तगतः सर्ववर्णेषु १५ अथ नामप्रसवगृहज्ञानं वैतालीयेनाह पितृमातृ इति पितृमातृग्रहात् दिवार्कशुक्रौ वरात्र्यादितः क्रमाः



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तद्वलात्सितृमातृग्रहवीर्यात्पितृमातृगृहेषु प्रसूयत इति वदेत् तदार्कशनैश्चरयोरन्यतमे बलवति पितृगृहे पितृष्वसृपितृव्यादिसंबंधिगृहे प्रसूतिः
एवं मातृग्रहयोश्चंद्रशुक्रयोरन्यतमे बलवति मातृग्रहे मातृष्वसृमातुलादिगृहे प्रसूतिः तरुशालादिषु नीचगैः शुभैरिति बहुवचनात्सर्व एव शुभग्रहाः यत्र
दानीचस्था भवंति तदा तरुषु वृक्षेषु शालासु प्रकारसमीपेषु प्रसवो वाच्यः आदिग्रहणान्नदीकूपारामपर्वतादिप्रदेशेषु वनादिदेशेषु इति यदि नैकगतैरिति नी
चगैः शुभैरित्यनुवर्तते सर्वे शुभग्रहाः नीचगताः स्वलग्नं द्रूदय चंद्रावुभावप्येकराशिगतौ ग्रहैर्बहुवचनात्त्रिप्रभृतिभिर्यदा न दृश्येते तदा विजने ज
नरहिते स्थाने ऽटव्यां प्रसूतिरिति यदा पुनरेकस्थैर्बहुभिर्ग्रहैर्यदा लग्नेंदू दृश्येते तदा जनाकीर्णे प्रसूतिरिति तथा च सारावल्याम् पितृमातृग्रहवर्गेण
स्वजनगृहेषु बलयोगात् प्राकारतरुनदीषु च प्रसूतिर्नीचाश्रितैः सौम्यैः नेक्षेते लग्नेंदू यद्येकस्था ग्रहास्तदाटव्याम् १६ अधुना दीपसंभवासंभ-
वभूप्रदेशप्रसवज्ञानं गर्भमोक्षं मातुः क्लेशज्ञानं मंदाक्रांतयाह मंदर्क्षांशे इति शशिनि चंद्रे यत्र तत्र राशौ मंदर्क्षांशे शनैश्चरस्य नवभागे मकरकुंभयो
रन्यतमांशकस्थे तमस्यंधकारे सूतिकाशयनं वक्तव्यं हिबुके लग्नाच्चतुर्थस्थे चंद्रेंधकार एव शयनं यत्र तत्रावस्थिते चंद्रे मंदेन सौरेणादृष्टेंधकार एव

पितृमातृगृहेषु तद्बलात्तरुशालादिषु नीचगैः शुभैः यदि नैकगतैस्तु वीक्षितौ लग्नेंदू विजने प्रसूयते १६ मंदर्क्षांशे श
शिनि हिबुके मंददृष्टेऽब्जगे वा तद्युक्ते वा तमसि शयनं नीचसंस्थैश्च भूमौ

अब्जगे वा अब्जराशौ अत्र कर्कटमीनौ द्वौ विज्ञेयौ मकरकुंभ
योरुक्तत्वात् मंदर्क्षांशे स्यादिति तेन यत्र तत्र राशौ कर्कटनवांशकस्थे चंद्रे [illegible] मीननवांशकस्थे वा तमस्यंधकार एव तद्युक्ते वेति नादित्ससौरः परा
मृश्यते यत्र तत्रावस्थिते चंद्रे सौरयुक्तेंधकार एव एवं निषेककालेन शयनमपि सर्वेष्वेतेषु योगेषु यदार्कदृष्टः चंद्रमा भवति तदांधकार एव यस्माद्यवनेश्वरः
सौरांशकस्थे शशिनि प्रलग्ने जले जलाख्यांशकमाश्रिते वा स्वांशस्थिते केंद्रगते ऽर्कजे वाज्ञानरश्मिः स्त्री यदि नार्कदृष्टः १ अन्येषां मतं यथा सूर्ये बलवति भौमे-
न दृष्टे सत्स्वपि योगेष्वंधकाराभावः तथा च सारावल्याम् बलवति सूर्ये दृष्टे बहुप्रदीपा धरार्कपुत्रेण अन्यैर्व्यपगतवीर्यैः सूतौ ज्योतिस्तृणैर्भवति सौरांशे-
जलजांशे चंद्रे ऽर्कयुते ऽथवा हिबुके न दृष्टे वा कुर्यात्तमसि प्रसवं न संदेहः नीचसंस्थैश्च भूमौ शयनमित्यनुवर्तते बहुवचनाद्यथासंभवं त्रिप्रभृतिभिर्ग्रहै
र्नीचस्थैर्भूमौ शयनं वाच्यम् भूशब्देनात्र तृणास्तृता भूर्ज्ञेया केचिल्लग्नस्थे चतुर्थस्थे वा नीचगते चंद्रे भूशयनमिच्छंति यथा सारावल्याम् नीचस्थैर्भूशय
नं चंद्रे ऽप्यथवा क्रूरवर्गे विलग्ने वा यद्वदिति प्रसवल्लग्नराशिर्यद्वद्येन प्रकारेण हरिजं व्रजत्युदयलेखां परित्यजति तद्वत्तेनैव प्रकारेण नार्या गर्भमोक्षो वाच्यः

दो ३

भाव ९६

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यत्राकाशंभूम्यासहासक्तंसमंतादृश्यतेनेन्दुरिजं उक्तंच हरिजमिति गगनभवनोसंसृष्टमिवलक्ष्यतेयथोक्तेषु तद्यथा शीर्षोदयेषुलग्नेषुस्नाना
स्योरंदर्शयतोगर्भस्यमोक्षोवाच्यः पृष्ठोदयेष्वधोमुखस्यपृष्ठंदर्शयतः मीनोदयेपार्श्वंदर्शयतः तथाचसारावल्याम् शीर्षोदयेविलग्नेमूर्ध्नाप्रसवोन्य
थोदयेचरणैः उभयोदयेनहस्तैः शुभदृष्टेशोभनोन्यथाकष्टः केचिदेवंव्याचक्षते यथालग्नाधिपोनवांशकाधिपोवा लग्नस्थोवायद्ग्रहोवक्रीभवति तदावि
परीत्येनगर्भमोक्षोभवति तथाचमणित्थः लग्नाधिपेंशकपतौलग्नस्थेवक्रितेग्रहेप्यथवा विपरीतगतोमोक्षोवाच्योगर्भस्यसंक्लेशः पापैरिति
पापग्रहैश्चंद्रगतैः शशिनासहव्यवस्थितैः स्मरगतैर्लग्नात्सप्तमस्थैर्वा क्रूरखगतैश्चतुर्थस्थैर्वाप्रसवकालेजनन्याः मातुःक्लेशमाहुः कष्टंकथयंति
सूरयः तथाचसारावल्याम् क्लेशोमातुःक्रूरैर्बंधुस्मरगतैः शशांकयुक्तैर्वा १७ अथदीपगृहद्वारज्ञानमिंद्रवज्रयाह स्नेहः शशांकादिति शशांकाच्चंद्रा
त्स्नेहोवाच्यः जन्मकालेपूर्णेचंद्रमसिस्नेहेनपूर्णंदीपभाजनंवक्तव्यं क्षीणेक्षीणस्नेहोक्तमिति तथाचसारावल्याम् दीपः पूर्णः पूर्णेशशिनिक्षीणेक्ष
यरूक्षतेलस्य यद्येवंतदामावास्यायांसर्वेषामंधकारेप्रसवोभवति तस्मादयुक्तमेतत् तेनयत्रराशौचंद्रमाव्यवस्थितस्तत्रयदिराशिप्रारंभेस्थितोभव

यद्वाशिर्व्रजनिहरिजंगर्भमोक्षस्तनदृष्टोपैश्चंद्रात्स्मरक्रूरखगतैःक्लेशमाहुर्जनन्याः१७स्नेहःशशांकादुदयाच्चवर्तिर्दीपोर्कयुक्तर्क्षव
शाच्चराद्यः॥

तिनदादीपभाजनंस्नेहेनपूर्णंवक्तव्यं यत्रराश्यवसानेस्थितस्तत्रस्नेहांतंदीपंस्नेहरहितं मध्यंप्राप्तेर्धम् अन्यत्रानुपातादिति उद
याच्चवर्तिः उदयाल्लग्नाद्दीपवर्त्तिरादेश्या लग्नारंभेतत्क्षणदत्तावर्त्तिरादेश्या मध्येअर्धदग्धावर्त्तिः लग्नावसानेवर्तिर्दाहावाच्यः अंतरनु
पातः तथाचसारावल्याम् यावल्लग्नादुदितंवर्त्तिर्दग्धातुतावतीभवति दीपोर्कयुक्तर्क्षवशादिति अर्कोरविस्तद्युक्तराशिवशाच्चराद्योदीपोवा
च्यः तत्रचरराशिव्यवस्थितेर्केसंचार्यमाणोदीपआदेश्यः स्थिरराशिस्थेर्केएकदेशस्थःदीपः द्विस्वभावस्थेर्केचालितः प्रतिष्ठितइति केचि
द्वदंति यथायस्मिन्राशावर्कः स्थितः सराशिर्यस्यांदिशिस्थितः प्रागादीशाः क्रियवृषनृयुक्कर्कटेत्यादिनाप्रदर्शितस्तस्यांदिशिदीपआदेश्यः
अन्येएवंवदंति यथायस्यांदिशिअर्कोभ्रमवशेनाष्टप्रहरकल्पनयाष्टासुदिक्षुपरिभ्रमतितेनैवक्रमेणयस्यांदिशिव्यवस्थितः तस्यांदिशिगृह
स्यदीपस्थानमिति तथाचसारावल्याम् द्वादशभागविभक्तेवास्तगृहेव्यवस्थितेसहस्रांशौ दीपश्चरस्थिरादिषुतथैववाच्यःप्रसवकाले अत्रभान्यादि २९
गृहंद्वादशधाविभज्यमेषादिगणनयार्कराशिर्यत्रभवतितत्रदीपस्थानमिति केचिल्लग्नस्ययादृशोवर्णस्तादृग्वर्णोदीपवर्त्तिमिच्छंति तथाचमणित्थः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

लग्नस्ययोत्रवर्णोनिर्दिष्टः स्तेनवर्निर्गादेश्या द्वारंवद्वास्कनीति तद्वास्कनिसूतिकागृहेलग्नात्केंद्रस्थैर्ग्रहैर्द्वारादेशमः कार्यः तस्यग्रहस्ययादिक्प्राच्या
द्यारविशक्रकोहितनमेत्यादिनोक्ता तद्दिगभिमुखंसूतिकागृहंवक्तव्यं बहुषुकेंद्रेषुबलवद्ग्रहवशात् शून्येषुकेंद्रेषुतल्लग्नराशिवशात् लग्नस्ययादिक्
तदभिमुखंयस्मादनेनैवस्वल्पजातकेउक्तम् द्वारंवास्कनिकेंद्रोपगताद्ग्रहाद्सतिवाविलग्नर्क्षात् अन्येवदंति यथालग्नद्वादशभागराशिदिगभि
मुखंसूतिकागृहद्वारं तथाचमणित्थः लग्नेयोद्विरसस्तदभिमुखंसूतिकागृहेद्वारं एतच्चसंवादेनापिदृष्टमिति वीर्यसमन्वितादित्यत्रत्रसंबध्यते-
केचिद्वदंति यथावीर्यसमन्वितात् ग्रहाद्ग्रहद्वारंवदेत् तथाचसारावल्याम् गसगृहोद्यानगतंद्वारंदिक्पालकाद्बलोपेतादिति १८ अथतासूति
कागृहस्वरूपज्ञानंशार्दूलविक्रीडितेनाह जीर्णसंस्कृतमिति वीर्यसमन्वितादित्यनुवर्तते सर्वग्रहेभ्योर्कजेसौरेवीर्यवतिसबले जीर्णमितिचिरं
तनम् भूयःसंस्कृतंसूतिकागृहंवक्तव्यंक्षितिसुते भौमेबलवत्यग्निनादग्धं शीतगौचंद्रेनवं शुक्लपक्षेउपलिप्तंवदेत् यस्माद्यवनेश्वरः संवर्ध
तांचंद्रमसोपलिप्तमिति काष्ठाद्यंनदृढंरवावितिरवावादित्येकाष्ठाढ्यंदारुबहुलं नदृढमसारं शशिसुतेबुधेतद्गृहं अनेकशिल्प्युद्भवं बहुविधशिल्पिरचितं

द्वारंचतद्वास्कनिकेंद्रसंस्थैर्ज्ञेयंग्रहैर्वीर्यसमन्वितैर्वा १८ जीर्णंसंस्कृतमर्कजेक्षितिसुते दग्धंनवंशीतगौकाष्ठाढ्यंन
दृढंरवौशशिसुतेतन्नैकशिल्प्युद्भवम् रम्यंचित्रयुतंनवंचभृगुजेजीवेदृढंमदिरंचक्रस्थैश्चयथापदेशरचनांसामंतपूर्वां
वदेत् १९ रम्यंचित्रयुतमिति भृगुजेशुक्रेरम्यंरमणीयंमनोरमंचपरं नवंनूतनंचित्रयुतंचित्रकर्मयुक्तं जीवेगुरौदृढंचिरकालस्थायिचक्र
स्थैर्भचक्रादिस्थैर्गृहदातृग्रहसमीपस्थैरन्यग्रहैः सामंतपूर्वांसमंतात्सर्वदिक्षुयथोपदिष्टांवदेद्ब्रूयात् सामंतपूर्वांप्रतिवेश्मिकवेश्मनांसामंतात्क्रमेणोत्प
र्थः यथागृहदातृग्रहस्यपुरतः पश्चाद्वापार्श्वयोर्वान्येग्रहाव्यवस्थितास्तेनैवक्रमेणसूतिकागृहेस्थानानिप्रतिवेश्मगृहाणिवाच्यानि अन्येसामंतपूर्वां
मितिपठंति सामंतात्गृहपर्यंतपूर्वविक्रांरचनामिति तथाचसारावल्याम् भवनपग्रहसंयोगैः प्रतिवेश्माश्रितंतोयाश्च देवालयांबुपावककोशविद्या
राद्यवस्करस्थानं निद्रागृहंचभास्करशशिकुजगुरुभार्गवार्किबुधयोगात् अत्राचार्येणभूमिकाप्रमाणंनोक्तं त्रिशालद्विशालज्ञानंचतदुच्यते गृह
स्पतौकर्कटस्थेपरमोच्चाद्भ्रष्टेलग्नात् दशमगेद्विभूमिकंसुच्चभागेषर्वाक्ंस्थितेत्रिभूमिकंउच्चभागस्थेचतुर्भूमिकंधनुषिसबलेदशमस्थानस्थेगुरौत्रि
त्रिशालंतद्गृहंमिथुनकन्यामीनस्थेद्विशालं उक्तंचस्वल्पजातके गुरुरुच्चेदशमस्थेद्वित्रिचतुर्भूमिकंकरोतिगृहं धनुषिसबलेत्रिशालंद्विशालमन्येषु

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मु.टी. शुविमलेष्विति १९ अथसमस्तवास्तुनिकसूतिकागृहमितिनतद्विज्ञानंदोधकेनाह मेषेति मेषः प्रसिद्धः कुलीरः कर्कटः तुलातुलएवअलिर्वृ वि.ज.
३० श्चिकः घटः कुंभः एषामन्यतमेलग्नेवास्तुनिप्राग्भागेसूतिकास्थानंवक्तव्यं अंशेवा उत्तरतोगुरुसौम्यगृहेषुगुरुगृहेधन्विमीनौ सौम्यगृहे- ५
मिथुनकन्येएतेषुलग्नेषुतदंशकेवोत्तरतोवास्तुनिसूतिकागृहंवाच्यम् वृषेणतदंशकेनचगृहपश्चिमभागेसूतिकागृहं मृगसिंहौमकरकेस-
रिणौदक्षिणभागकराविति दक्षिणभागेसूतिकागृहंकुरुतः २० अथसूतिकागृहेकशयनमितितज्ज्ञानंवैतालीयेनाह प्राच्यादिगृहेति गृहसू
तिकावेश्मनिप्राच्यादिदिशिपूर्वाद्यास्वष्टसुदिक्षुक्रियाद्योमेषाद्योराशयः द्वौद्वौचतसृषुदिक्षुकोणगताविदिक्स्थाद्विमूर्त्तयोद्विस्वभावाः
तद्यथा मेषवृषयोर्लग्नयोर्गृहस्यप्राग्विभागेसूतिकाशयनं मिथुनेआग्नेय्यांकर्कसिंहयोर्दक्षिणे कन्यायांनैरृत्यांतुलावृश्चिकयोःपश्चिमेधनुषि

मेषकुलीरतुलालिघटैःप्रागुत्तरतोगुरुसौम्यगृहेषु
पश्चिमतश्चवृषेणनिवासोदक्षिणभागकरौमृगसिंहौ २०
प्राच्यादिगृहेक्रियाद्योद्वौद्वौकोणगताद्विमूर्त्तयः शय्या
स्वपिवास्तुवदुद्देसादेःषट्त्रिनवांत्यसंस्थितैः २१ ७

वायव्येमकरकुंभयोःउत्तरेमीनेऐशानेइति एषएवविधिःशय्यास्वपिवक्तव्यः अतउक्तंशय्यास्वपिवास्तुवदुद्देदिति किंत्वयंविशेषः पादैःषट्त्रिनवां
त्यसंस्थितैरिति इहएवषट्चापादाः षट्त्रिनवांत्यराशयः लग्नात्षष्ठत्रितयनवमद्वादशराशयः पादाःपरिकल्प्याः तत्रेनज्ज्ञानंयेनलग्नेनप्रसवस्तदु-
क्तदिक्शय्यायाःशिरस्तस्मादेवषट्त्रिनवांत्याःपादाः तत्रद्वादशतृतीयौपूर्वपादौ तत्रापितृतीयोदक्षिणःपादोद्वादशोवामःषष्ठनवमौपश्चिमपादौ त
त्रापिषष्ठोदक्षिणोनवमोवामः लग्नद्वितीयौशीर्षभागःचतुर्थपंचमौदक्षिणांगंसप्तमाष्टमौपादांतभागः दशमैकादशौवामांगंप्रयोजनंविनतत्वंयमलक्षैः
क्रूरैस्तुल्यउपघातइति यत्राद्विस्वभावराशयःस्थितास्तत्रविनतत्वंयत्रपापास्तत्रस्तत्सदृशोवोपघातः एवंसंदेहानुपपन्नएवद्वागप्रसंगःयस्मादवश्यंक्वचि ३०
दपियमलक्षैःपापग्रहैर्भावितव्यं तस्माद्यत्रयमलक्षैःसौम्यग्रहस्वामियुतदृष्टंतत्रविनतत्वंपापग्रहोपिस्वोच्चराशित्रिकोणमित्रक्षेत्रस्थोशुभफलकृत्नभवती
ति २१

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अधुनोपसूतिकासंख्यामनुष्टुभाह चंद्रलग्नेति लग्नादारभ्ययत्रराशौ चंद्रमाव्यवस्थितस्तदंतरेतयोर्मध्येयावंतोग्रहाव्यवस्थितास्तेचंद्रलग्नांत
रगताग्रहास्तैरुपसूतिकाःस्युः तावत्संख्याउपसूतिकाः समीपवर्तिन्यःस्त्रियः स्युर्भवेयुः ताश्चग्रहजातिवयोवर्णरूपाः तथाचसारावल्याम् शशि
लग्नविवरसुक्ताग्रहतुल्याः सूतिकाश्चविज्ञेयाः अनुदितचक्रार्धसुतेरंतर्बहिरन्यथावदंत्येके लक्षणरूपविभूषणयोगास्तासांशुभैर्योगात् क्रूरैर्विरूपदं
हालक्षणहीनाःश्चरौद्रमलिनाश्च मिश्रैर्मध्यमरूपावलसहितैः सर्वमेतदवधार्यबहिरंतश्चेति तत्रयावंतोग्रहादृश्यंतेचक्रार्धेव्यवस्थितास्तावत्संख्याउप
सूतिकागृहबाह्येवक्तव्याः यावंतश्चादृश्येचक्रार्धेव्यवस्थितास्तावत्संख्याआभ्यंतरेवक्तव्याः तत्रलग्नस्ययावंतउदिताभागास्तथाद्वादशैकादशदश-
मनवमाष्टमाराशयस्तथासप्तमराशेर्लग्नोदितभागतुल्यांशादृश्यमर्धशेषमदृश्यमिति अन्ययापरेअपरेअन्येआचार्याअन्यथाऽन्येनप्रकारेणदृश्य-
चक्रार्धेअभ्यंतरगतावर्णयंतिअदृश्येबाह्यस्थाज्ञेयाः तथाचजीवशर्माउदयशशिमध्यस्थैर्ग्रहैःस्फुरुपसूतिकास्तत्र उदगर्धस्थैर्बाह्येदक्षिणगैरंतरे
ज्ञेयाः एतदाचार्यस्यनाभिमतम् यतोनेनैवस्वल्पजातकेउक्तम् शशिलग्नांतरसंस्थायहतुल्याःसूतिकाश्चवक्तव्याः उदगर्धेभ्यंतरगाबाह्याश्चकक्ष्य

चंद्रलग्नांतरगतैर्ग्रहैःस्फुरुपसूतिकाः बहिरंतश्चचक्रार्धेदृश्यादृश्येन्यथापरे २२ लग्ननवांशपतुल्यतनुस्याद्वीर्ययुत
ग्रहतुल्यतनुर्वा चंद्रसमेतनवांशपवर्णःकादिविलग्नविभक्तभगात्रः २३

दृश्येर्धे अत्रचायुर्दायविधिनास्वतुंगवक्रोपगतैस्त्रिसं
गुणमित्यादिनाद्वित्रिगुणत्वंकृत्वाग्रहस्यानवशादुपसूतिकानिश्चयःकार्यः यदिबहुजनप्रसूतियोगानभवंति तथापिग्रहसंख्यासूतिकासंभवायत्र
बहुजनप्रसूतियोगेनभावितव्यमिति २२ अथजातस्यस्वरूपादिज्ञानंदोधकेनाह लग्नेति जन्मकालेलग्नेयोनवांशकउदितस्तस्ययः स्वामीसलग्नन
वांशपः तत्तुल्यतनुस्तदाकारोजातोवक्तव्यः यथामधुपिंगलदृगित्यादि अथवाजातकालेसर्वग्रहेभ्योयोग्रहोवीर्ययुतोबलवांस्तत्तुल्यतनुर्वाच्यः
यदिलग्ननवांशकस्योराशिर्बलवान्भवतितदातदीशतुल्यातनुर्भवति अथसर्वग्रहेभ्योयोवीर्यवान्ग्रहस्तत्तुल्यतनुरिति चंद्रसमेतइतियोनवांशः
शशिनाचंद्रेणसमेतश्चंद्रोयस्मिन्नवांशकेस्थितइत्यर्थः तस्यनवांशराशेर्योधिपतिः सचंद्रसमेतनवांशपतिः तस्ययोवर्णस्तद्वर्णोजातोभवति अत्र
चवर्णोरक्तः श्यामोभास्वरोगौरइति अन्येचंद्राक्रांतराशिवर्णमेवाहुः यथारक्तः श्वेतः शुकतनुनिभइत्यादि अत्रशुकवर्णस्यासंभवादयुक्तमेतत्
एतच्चवर्णादिजातिकुलदेशान्बुध्वावक्तव्यम् उक्तंच बलिनः सदृशीमूर्तिर्बुध्वाजातिकुलदेशान्इति कादिविलग्नविभक्तभगात्रइति आधान

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विधिनाशीर्षादीनामवयवानांह्रस्वदीर्घत्वंनिरूपयति कादिभिर्विलग्नभैर्लग्नराशिभिः विभक्तानिगात्राणि यस्यसःकादिविलग्नविभक्तभगात्रः तत्रलग्नाद्योराशयः कादिषुशिरः प्रभृतिकालगात्रेषुपरिकल्प्याः यथाकालांगानि तत्रलग्नंशिरः द्वितीयोराशिर्वक्त्रम् तृतीयउरः चतुर्थोहृत् पंचमःक्रोडः षष्ठःकटिः सप्तमोबस्तिः अष्टमःशिश्नगुदे नवमोवृषणौ दशमऊरू एकादशोजानुनी द्वादशोजंघापादौ अत्रचराशीनांप्रमाणमुक्तम् पूर्वार्द्धेविषयादयइति तत्रयत्रांगस्थेदीर्घराशौदीर्घराश्यधिपोग्रहोव्यवस्थितोभवतिसदीर्घकृत् तदंगंतस्यदीर्घंवक्तव्यं तथाचसत्यःदीर्घाधिपतिर्दीर्घोग्रहः स्थितोवयवदीर्घकृद्भवति अर्थादेवाल्पप्रमाणराशौव्यवस्थितस्तदंगाल्पकृद्भवति दीर्घराश्यधिपोऽल्पराशिव्यवस्थितः समध्यमकृत् अल्पराश्यधिपोदीर्घराशौव्यवस्थितोंगमध्यमकृत् यत्रांगराशौबहवोव्यवस्थितास्तत्रबलवद्ग्रहवशाद्वाच्यम् यत्रनकश्चिद्व्यवस्थितः तत्रराशिप्रमाणतएवांगंवाच्यम् २३ इतिसूतिकाप्रकरणम् अत्रैवसूतिकाध्यायेजातस्यव्रणमशकादिनिरूपणार्थमंगप्रकरणमारभ्यते तत्रलग्नप्रथमद्वितीयतृतीयद्रेष्काणवशेनप्रथमद्वितीयतृतीयशरीरभागपरिच्छेदः तत्रशिरः प्रभृतियावद्वक्त्रंप्रथमोंगविभागः

कंदृक्‌श्रोत्रनसाकपोलहनवोवक्त्रंचहोरादयस्तेकंठांसकबाहुपार्श्वहृदयंक्रोडानिनाभिस्ततः बस्तिःशिश्नगुदेततश्चवृषणा
वूरूततोजानुनीजंघेंघ्रित्युभयत्रवामसुदितैर्द्रेष्काणभागैस्त्रिधा २४

शिरोधस्ताद्यावन्नाभिः तावद्द्वितीयः तदधस्तात्तृतीयः तेषामंगविभागानांराशिविभागंशार्दूलविक्रीडितेनाह कंदृगिति त्रिभिःप्रकारैस्त्रिधा त्रिभिर्द्रेष्काणभागैस्त्रिधाशरीरप्रविभागः तत्रलग्नस्यप्रथमद्रेष्काणेउदयति प्रथमोमूर्धाद्यंगविभागः द्वितीयेद्रेष्काणेउदयति कंठपूर्वकोद्वितीयोंगविभागः तृतीयेद्रेष्काणेउदयति बस्तिपूर्वकः तृतीयः तत्राप्यंगविभागेवामदक्षिणवर्त्यवयवज्ञानंकथमित्याह वामसुदितैरिति राशिभिरुदितैः दृश्यभागावस्थितैर्वामोंगविभागः लग्नस्योदितभागाः तथाद्वादशैकादशदशनवमाष्टमाः तथासप्तमस्यराशेर्लग्नोदिततुल्याभागाः एषभागोदितः शेषोनुदितः अर्थादनुदितैरदृश्यैर्दक्षिणइति तत्रलग्नानुदितभागास्तथा द्वितीतृतीयचतुर्थपंचमषष्ठाः सप्तमराशेर्लग्नोदिततुल्यभागाः एवंस्थितेलग्नप्रथमद्रेष्काणोदयेलग्नराशिः कंशिरः कल्पनीयं लग्नाद्वितीयद्वादशेदृक्चक्षुषी तत्रद्वितीयोदक्षिणमक्षि द्वादशोवामं तृतीयैकादशौश्रोत्रे तत्रतृतीयोदक्षिणं एकादशोवामम् चतुर्थदशमौनासापुटे चतुर्थोदक्षिणं दशमोवामम् पंचमनवमौकपोलौ पंचमोदक्षिणःनवमोवामःषष्ठाष्टमौहनू षष्ठोदक्षिणंअष्टमोवामं



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सप्तमोवक्त्रंमुखं एवंराश्याद्युपलक्षितः प्रथमोंगविभागः तेकंठांशकइति अथद्वितीयोद्रेष्काणोदयः कंठादेर्द्वितीयेंगविभागेपरिकल्प्यः तद्यथा लग्नंकंठोगलकः द्वितीयद्वादशौस्कंधौ तत्रद्वितीयोदक्षिणस्कंधोद्वादशोवामः तृतीयैकादशौबाहू तत्रतृतीयोदक्षिण एकादशोवामः चतुर्थदशमौपार्श्वे तत्रचतुर्थोदक्षिणंदशमोवामं पंचमनवमौहृद्भागौ तत्रपंचमोदक्षिणः नवमोवामः षष्ठाष्टमौक्रोडउदरभागौषष्ठोदक्षिणः अष्टमोवामः सप्तमोनाभिरिति नाभिग्रहणमुदरोपलक्षणार्थम् एवंद्वितीयोंगविभागः बस्तिः शिश्नगुदेति लग्नद्रेष्काणेतृतीयेउदयतितेएवं होरादयस्तृतीयेंगविभागेपरिकल्प्याः तद्यथा लग्नंबस्तिः नाभिलिंगयोर्मध्यभागः द्वितीयद्वादशौशिश्नगुदे तत्रद्वितीयोदक्षिणभागः द्वादशो वामः ततोनंतरंतृतीयैकादशौवृषणौतृतीयोदक्षिणः एकादशोवामः चतुर्थदशमौऊरूचतुर्थोदक्षिणः दशमोवामः पंचमनवमौजानुनीपंचमो दक्षिणः नवमोवामः षष्ठाष्टमौजंघेषष्ठोदक्षिणजंघाअष्टमोवामजंघा सप्तमः पादद्वयमिति २४ अथअंगज्ञानप्रयोजनंशार्दूलविक्रीडितेन- आह तस्मिन्पापयुतइति तत्रप्रथमद्रेष्काणेजातस्यशिरोंगविभागोद्वितीयद्रेष्काणेजातस्यकंठाद्यंगविभागः तृतीयद्रेष्काणेजातस्यबस्त्याद्यंग-

तस्मिन्पापयुतेव्रणंशुभयुतेदृष्टेचलक्ष्मादिशेत्स्वर्क्षांशेस्थिरसंयुतेषुसहजःस्यादन्यथागंतुकः मंदेश्मानिलजोग्निश
स्त्रविषजोभौमेबुधेभूभवः सूर्येकाष्ठचतुष्पदेशुहिमगोशृंग्यब्जजोन्यैः शुभम् २५

विभागः तस्मिन्पापयुतेति यत्रांगराशौपापग्रहसंयुक्ते तत्रांगेव्रणंविस्फोटकादिछिद्रंमशकादिचिन्हमादिशेत् तस्मिन्पापयुतेंगराशौपापग्रहसंयुतेशुभसंयुतेदृष्टे सौम्यग्रहसंयुक्तेऽवलोकितेवातद्राश्युपलक्षितेंगेलक्ष्मादिशेत् मशकादिचिन्हंवाच्यम् स्वर्क्षांशइति सएवग्रहोव्रणमशकादिकर्तास्वर्क्षेस्वराशौस्वनवांशकेवास्थितोभवति स्थिरराशौस्थिरांशकेवास्थितस्तदाव्रणंमशकादिकंसहजोत्पन्नंतस्यजंतोर्भवति अन्यथोक्तविपर्यस्येआगंतुकोजातस्योत्तरकालेकेनचिन्निमित्तेनवक्ष्यमाणेनस्वदशाकालेप्यवक्तव्यम् आगंतुकस्यव्रणादेर्ग्रहवशेनतस्मिन्निमित्तमाह मंदेश्मानिलजइति मंदेशनैश्चरेव्रणकर्तृत्वेप्राप्तेनद्रुणाश्मन्पाषाणहेतुकोऽनिलजोवातव्याधिहेतुकोवावक्तव्यः भौमस्यव्रणस्यकर्तृत्वेप्राप्तेऽग्निशस्त्रविषजोऽग्निहेतुकः शस्त्रहेतुकोविषहेतुकोवावक्तव्यः बुधेभूभवः भूस्थितपाषाणादुच्छ्रितपातात्भूम्यभिपातहेतुकोलोष्टप्रहारहेतुकोवासूर्येरवौकाष्ठप्रहारहेतुकश्चतुष्पदप्राणिहेतुकोवावक्तव्यः हिमगोश्चंद्रेशृंग्यब्जजः शृंग्यभिघातहेतुकः शृंगाविद्यंतेयस्यप्राणिनः शृंगीतज्जातोअब्जजोवाजलप्राणिहेतुकोवावक्तव्यः अन्यैः शुभं अन्ये-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ग्रहायत्रांगदेशस्थाभवंति तत्रशुभाव्रणादिकरानभवंति तत्रावशेषोगुरुसितौतत्किंबहुवचनंउच्यते बुधःपापफक्तोव्रणकरः क्षीणश्चंद्रमास्त्र
थाततोन्यैःशुभमित्युक्तम् २५ अथव्रणज्ञानंहरिण्याह समनुपतितानाइति यस्मिन्भागेवामेदक्षिणेवात्रयः सबुधाग्रहाः त्रयोन्येग्रहाश्चत्र
यैनबुधेनसहिताः समनुपतिताः समाश्रितास्तत्रांगेपूर्वोक्तव्रणादिर्नियमान्निश्चयादवश्यंभाविर्भवति शुभेष्वशुभेषुवा तेग्रहाः सबुधाः शुभाः
सौम्याः अशुभाः पापावाभवंति तथापितत्रांगेतस्यव्रणावाभिर्वक्तव्या तेषांमध्याद्योबलीसस्वदशामवाप्यकरोति व्रणकृदिति लग्नात्सषष्ठेस्था
नेअशुभः पापोग्रहोव्यवस्थितोदेहेशरीरेव्रणकृद्भवति कस्मिन्स्थानेततोभैसमाश्रिते ततोर्लग्नात्सषष्ठस्थोराशिः कालांगानीत्यनेनदर्शि
तांगविभागेयस्मिन्भवतितस्मिन् भसमाश्रितेराशियुक्तेदेहेशरीरेभवति अत्रापिस्वर्क्षांशास्थिरसंयुतेष्वसहजः स्यादन्यथागंतुकइत्यनुव
र्तनीयं सएवषष्ठस्थानस्थःपापः सौम्येनशुभग्रहेणयदादृष्टोभवतितदातत्रांगेतिलकमशकृद्भवति तिलकः कृष्णोबिंदुः मशकोर्बुदः अथशुभग्र
हेणसएवपापोयुतस्तदासलक्ष्मवान्भवति राश्युपलक्षितमंगंसचिन्हंभवति अत्रस्थानेधनोलोमनिचयोलक्ष्मइति २६ इतिश्रीभट्टोत्पलविर

समनुपतितायस्मिन्भागेत्रयःसबुधाग्रहाभवतिनियमात्तस्यावाप्तिः शुभेष्वशुभेषुवा व्रणकृदशुभःषष्ठेदेहेततोर्भसमा
श्रितेतिलकमसकृद्दृष्टःसौम्यैर्युतश्चसलक्ष्मवान् २६ इतिजन्मविधिनामाध्यायःसमाप्तः संध्यायांहिमदीधि
तिहोरापापैर्भांतगतैर्निधनाय प्रत्येकंशशिपापसमेतैःकेंद्रैर्वासविनाशमुपैति १ चितायांबृहज्जातकविवृतौजन्मविधिनामाध्यायःपं
चमःसमाप्तः ५ अथारिष्टाध्यायोव्याख्यायते तत्रतावज्जातस्यारिष्टसंभवेसत्यायुर्दायाष्टकवर्गादिशःकर्तव्यः तस्मात्प्रथमारिष्टाध्यायं
वक्ष्यति तत्रारिष्टद्वयंविधुमालयाह संध्यायामिति संध्यायालक्षणंसंहितायामुक्तम् अर्धास्तमयात्संध्याव्यक्तीभूतानताराकायावत् तेजःपरि-
हानिमुखाद्भानोरर्धोदयोयावत् अस्मिन्संध्याकालइति तत्रजन्मनियस्यसंध्याकालोभवतितत्काललग्नगताहिमदीधितेश्चंद्रस्यहोराभवति
यथासंभवंपापैर्भांतगतैः यत्रतत्रराशिस्थानवमांशगताःपापाभवंति तदैतद्योगोजातस्यनिधनायमरणायभवति प्रत्येकमिति एकमेकमि
तिप्रत्येकं शशीचंद्रःपापाः त्रयश्चतुर्षुकेंद्रेषुव्यवस्थिताभवंत्येकैकंप्रतियथासंभवंचत्वार्यपिकेंद्राण्याक्रांतानिभवंति तथापियस्यजन्मभवति ३२
सविनाशमुपैतिम्रियतइत्यर्थः १ अथान्यानरिष्टयोगानिंद्रवज्रयाह चक्रस्येति यावंतोभागालग्नस्योदितास्तावंतएवभागालग्नचतुर्थ-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

राशेः परित्यज्यशेषभागमारभ्यपंचमषष्ठसप्तमाष्टनवमराशयोदशमराशिलग्नोदितभागतुल्यांशाश्चक्रेपरार्धम् तत्रचक्रस्यपूर्वभागेक्रूराः पापाः इतरभागेपश्चिमेसौम्याः शुभग्रहाः कीटलग्नेवृश्चिकराशावुदयेकर्कटेचोदयस्थितेजातः शिशुः क्षिप्रमाशुएवविनाशमुपैतिमरणंप्राप्नोतीत्यर्थः नन्वत्रपूर्वंवृश्चिकः कीटसंज्ञउक्तः पुनरपिद्विपदादयोन्हिनिशिचप्रामेचसंध्याद्वयेइत्यत्रकर्कटवृश्चिकमकरमीनानांकीटत्वमभ्युपगतं तदत्रवृश्चिककर्कटावेवकथंव्याख्यातावित्यत्रोच्यते मकरमीनयोर्जलत्वादपिसपक्षत्वात्कीटसंज्ञानाभ्युपगम्यते यस्माद्बादरायणः पूर्वापरभागगतैःशुभाशुभैरलिनिकर्कटेलग्ने जातस्यशिशोर्मरणंसद्यः कथयंतियवनेंद्राः पापैर्विलग्नास्तमयाभिनस्थैति पापैः क्रूरग्रहैः विलग्नाभितः अस्तमयाभिनस्थस्थितैश्चसद्योजातः क्षिप्रंशीघ्रमेवविनाशंसमुपैति अत्रकेचिद्वयंयोगद्वयंव्याचक्षते अभितउभयतः लग्नात्पापैरुभयतइत्येकोयोगः अस्तमया[illegible]दभिनइतिद्वितीयः तत्रलग्नात्द्वादशद्वितीयस्थयोःपापयोर्जातोम्रियते तत्रलग्नौषष्ठाष्टमयोश्च

चक्रस्यपूर्वापरभागगेषुक्रूरेषुसौम्येषुचकीटलग्ने क्षिप्रंविनाशंसमुपैतिजातःपापैर्विलग्नास्तमयाभिनश्च २ पापावुदयास्तगतौक्रूरेणयुतश्चशशी दृष्टश्चशुभैर्नयदामृत्युश्चभवेदचिरात् ३ क्षीणेहिमगौव्ययगेपापैरुदयाष्टमगैः केंद्रेषुशुभाश्चनचेत्क्षिप्रंनिधनंप्रवदेत् ४

पापयोर्जातोम्रियते तथालग्नेसप्तमाच्च येद्वादशद्वितीयेनतस्थयोश्चपापयोर्जातोम्रियते अन्येपुनरभिशब्दोआभिमुख्येवर्ततेइत्यनुवर्णयंति तत्रलग्नाद्योद्वितीयेराशौग्रहः स्थितः सउदयमभिलषतेलग्नस्याभिमुखोभवति यश्चलग्नादष्टमराशौभवतिसोस्तमयमभिलषतीत्यतः सप्तमराशेरभिमुखोभवति तेनैतज्जातम् लग्नाद्वितीयाष्टमगतैः सर्वैः पापैर्जातोम्रियते वयंपुनरभिशब्दआभिमुख्यव्याहृतिंब्रूमः यस्माद्यवनेश्वरः पापेषुग्रहेषुलग्नाभिमुखेषुसर्वेष्वेवाप्रवीर्येषुशुभर्क्षगेष्वपिकिंतुयोलग्नाद्वादशस्थानेस्थितः सउदयमभिलषति लग्नाभिमुखोभवति यश्चषष्ठेस्थितः लग्नात्सोस्ताभिमुखोभवति यस्मात्क्रूरग्रहाणांप्राङ्मुखीगतिः उक्तंच भागातात्कल्पजवाग्रहाश्चस्वस्वमंडलगाइति तत्रपूर्वाभिमुखंव्रजतोगच्छतोलग्नाद्वितीयस्थस्यतदाभिमुख्यंनसंभवति नचाष्टमस्थस्यास्ताभिमुख्यंतेनैतज्ज्ञातं लग्नाद्द्वादशषष्ठाश्रितैः पापैर्यस्यजन्मसम्रियतेइति भगवतागार्ग्येणसर्वाण्येवव्याख्यातान्यभिमुखानि तथाचतद्वाक्यम् रिपुव्ययगतैः पापैर्यदिवाधनमृत्युगैः लग्नेवापापमध्यस्थेद्यूनेवामृत्युमाप्नुयादिति २ अथयोगांतरमनुष्टुभाह

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पापाविति एकःपापउदयेलग्नेस्थितोन्योऽस्तेसप्तमेगतः शशीचंद्रमाः यत्रतत्रस्थः क्रूरेणपापेनयुतोभवति सचसौम्यैः शुभग्रहैः यदि नदृष्टः तदाजातस्यमृत्युकरचिराच्छीघ्रमेवभवेत् ३ अथयोगांतरमनुष्टुभाह क्षीणेति हिमगौचंद्रेक्षीणेलग्नाद्व्ययगेद्वादशस्थेतथापापैः क्रूरग्रहैरुदयाष्टमगैः लग्नस्थैरष्टमगतैश्चकेंद्रेषुकंटकेषुचेद्यदिशुभानभवंति तदाजातस्याक्षिप्रमाशुएवनिधनंमरणंप्रवदेद्ब्रूयात् अत्रकेचित्सौम्यैरुदया ष्टमगैरितिनेच्छंति तदयुक्तम् यस्माद्भगवान्गार्गिः क्षीणेचंद्रेव्ययगतेपापैरष्टमलग्नगैः केंद्रबाह्यगतैः सौम्यैर्जातस्यनिधनंवदेत् ४ अथारिष्टां- तरमनुष्टुभाह क्रूरइति शशीचंद्रः क्रूरेणग्रहेणसंयुतस्तथाभूतः स्मरांत्यमृत्युलग्नगः सप्तमद्वादशाष्टमलग्नानामन्यतमस्थस्तथा शुभैः शुभ ग्रहैः कंटकबाह्यस्थैः केंद्रवर्जअन्यस्थानस्थैः अवीक्षितः नदृष्टोयदिभवतितदाजातस्यमृत्युदोमरणदोभवति अर्थादिवसौम्यैःकेंद्रस्थैस्तरिष्टा भावः तथाचसारावल्याम् व्ययाष्टसप्तोदयगेशशांकेपापैः समेतैः शुभदृष्टिहीने केंद्रेषुसौम्यग्रहवर्जितेषुजातस्यसद्यःकुरुतेप्रणाशम् ५

क्रूरेणसंयुतः शशीस्मरांत्यमृत्युलग्नगः कंटकाद्बहिः शुभैरवीक्षितश्चमृत्युदः ५ शशिन्यरिविनाशगेनिधनमाशु
पापेक्षितेशुभैरथसमाष्टकंदलमतश्चमिश्रैःस्थितिः असद्भिरवलोकितेबलिभिरत्रमासंशुभेकलत्रसहितेचपापविजिते
विलग्नाधिपे ६

अथारिष्टांतराणिपृथ्व्याह शशिनिइति शशिनिचंद्रे अरिविनाशगे लग्नात्षष्ठस्थानस्थेऽष्टमस्थेवा तत्रचपापा नांक्रूराणांमध्यादन्यतमेनेक्षिते दृष्टेसौम्यग्रहेणादृष्टेतस्यनिधनंमरणमाशुक्षिप्रमेवभवति शुभैरिति अथलग्नात्षष्ठाष्टमगेचंद्रेसौम्यैर्ग्रहैर्दृ ष्टेपापैरदृश्यमानेजातस्यसमाष्टकंवर्षाष्टकंस्थितिः जीवितंवक्तव्यम् ततोनंतरंमरणमिति समशब्दोवर्षपर्यायः दलमतइति लग्नात्षष्ठाष्टम गेचंद्रेमिश्रैः पापैः सौम्यैश्चदृष्टे अतोस्मात्समाष्टकाद्वर्षाष्टकाद्दलमर्द्धंवर्षचतुष्टयंस्थितिर्वदेत्ततोमरणमिति अर्थादिवषष्ठाष्टमस्थेचंद्रमसिन केनचिद्दृश्यमानेऽरिष्टयोगाभावः चंद्रमायदिषष्ठाष्टमस्थः सौम्यक्षेत्रगतोभवत्यथवापापक्षेत्रगतः सौम्ययुक्तोभवति तदानमरणप्रदः यस्माद्यवनेश्वरः लग्नाच्छशीनैधनगोशुभर्क्षेषष्ठेथवापापनिरीक्षितश्चसर्वायुराहन्तिशुभैर्विमिश्रस्तदीक्षितोब्दाष्टकमर्धकंवा तथायस्यकृ ष्णपक्षेदिवाजन्मनिशुक्लपक्षेरात्रौजन्मनिलग्नात्षष्ठाष्टमगः शशीशुभाशुभदृष्टोपिभवति तस्यनमरणप्रदः यस्मान्मांडव्यः पक्षेसितेभव ति जन्मयदिक्षपायांकृष्णेथवाहनिशुभाशुभदृश्यमानः तंचंद्रमारिपुविनाशगतोपिलग्नादापत्सुरक्षतिपितेवशिशुंनहंति असद्भिरिति



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अत्रास्मिन्नेव षष्ठेऽष्टमे वास्याल्लग्नेशुभे सौम्यग्रहे बुधगुरुसितानामन्यतमे स्थितेन स्मिंश्च सद्भिः पापैः बलिभिः वीर्ययुक्तैरवलोकिते दृष्टे जात

स्य मासं संस्थितिः जीवितं वक्तव्यं ततो मरणमिति अत्र निर्दिष्टयोगस्थे चंद्रमसि शुभदृष्टे रिष्टयोगाभावः यस्मादनेनैव स्वल्पजातकेऽक्तम्

शशिवत्सौम्याः पापैर्वक्रिभिरवलोकिता न शुभदृष्टाः मासेन मरणदास्युः पापजितो लग्नपश्चास्ते कलत्रसहिते इति विलग्नाधिपे जन्मलग्नपतौ

कलत्रसहिते सप्तमस्थानस्थे वा पापविजिते क्रूरग्रहेण युद्धे संग्रामे विजिते विजितलक्षणम् दक्षिणादिक्स्थः परुषो वेपथुरसंप्राप्य सन्निवृत्तोऽणुः

अधिरूढो विकृतो निःप्रभो विवर्णश्च यः स जितः भौमादीनां आकाशे युद्धं भवति यः दक्षिणाशास्थः स ग्रहः जितः कुमुनादीनां युद्धमित्यु-

क्त्वा चंद्रदीपिकायां परुषो रूक्षः वेपथुः कंपायमानः अन्यग्रहमप्राप्य संनिवृत्तः विपरीतगतिमापन्नः अणुः सूक्ष्मः अधिरूढः अन्येना-

क्रांतः विकृतः विकारसहितः निष्प्रभो दीप्तिरहितः विवर्णः वर्णरहितः स जित इति चशब्दाच्चासं स्थितिस्ततो मरणमिति ६ अथारिष्टांत

राणि मंदाक्रांतयाह लग्नेक्षीण इति क्षीणे शशिनि चंद्रे क्षीणे लग्ने जन्मलग्नस्थिते तथा रंध्रकेंद्रे षष्टमकेंद्रेषु पापैः क्रूरैः स्थितैर्यथासंभवमेवं

लग्ने क्षीणे शशिनि निधनं रंध्रकेंद्रेषु पापैः पापांतरस्थे निधनहिबुकद्यूनयुक्ते च चंद्रे एवं लग्ने भवति मदनच्छि

द्रसंस्थैश्च पापैर्मात्रा सार्द्धं यदि च न शुभैर्वीक्षितः शक्तिभृद्भिः ७ राश्यंतगे सद्भिरवीक्ष्यमाणे चंद्रे त्रिकोणो-

पगतैश्च पापैः प्राणैः प्रयात्याशु शिशुर्वियोगमस्ते च पापैस्तुहिमांशुलग्ने ८ विधयोगे जातस्य निधनं मरणं वक्तव्यम्

तथा चंद्रे शशिनि पापांतस्थे पापमध्यगते निधनहिबुकद्यूनयुक्ते ऽष्टमचतुर्थसप्तमस्थानानामन्यतमस्थे जातस्य मरणं वक्तव्यम् एवमिति

एवमनेनैव प्रकारेण लग्नगे पापांतस्थे शशिनि तथा मदनच्छिद्रसंस्थे सप्तमाष्टमस्थानयोरन्यतमस्थे पापे क्रूरे यदि शुभैः सौम्यग्रहैः शक्ति

भृद्भिः सबलैः चंद्रमा न वीक्षितो न दृष्टो भवति तदा जातस्य मात्रा सार्द्धं जनन्या सह मरणं वदेत् अथ निर्दिष्टयोगस्थश्चेच्चंद्रमा शुभैर्दृश्यते ब

लिभिस्तदा जातस्यैव मरणं न तन्मातुरिति ७ अथारिष्टांतराणि इंद्रवज्रयाह राश्यमिति चंद्रे शशिनि राश्यंतगे यत्र तत्र राशौ नवमनवांशकगे

तथाभूते सद्भिः शुभग्रहैरवीक्ष्यमाणे न संदृष्टे पापैः क्रूरैस्त्रिकोणोपगतैः नवपंचमस्थानस्थैः जातः शिशुः बालकः आशुक्षिप्रमेव प्राणैरसु

भिः वियोगं प्रयाति गच्छति म्रियत इत्यर्थः अस्ते च पापैरिति तुहिनांशौ चंद्रे लग्नगे अस्ते सप्तमे सप्तमस्थानस्थितैः पापैश्च शब्दाच्छिशुरसु

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वधार्थैः वियोगंप्रयाति अत्रतुहिनांशुलग्नइति कर्कटलग्नेकेंद्रेत्रिव्याख्यानंनदृष्टम् यस्मादनेनैवस्वल्पजातकेउक्तम् उदयगतोवाचं-
द्रः सप्तमराशिस्थितः पापैरिति ८ अथारिष्टांतराणिहारिण्याह अशुभसहितइति चंद्रेशशिन्यशुभसहितेयद्यपिसामान्येनोक्तंत-
थाप्यशुभेनपापेनशनैश्चरेणैवयुक्तेनतथाभूतेलग्नगतेनकेवलंयावत् लग्नगतेग्रस्तेराहौराशिगतेलग्नाच्चकुजेंगारकेनिधनाश्रितेऽष्टमस्था
नस्थेजननिसुतयोः मातृपुत्रयोः मृत्युर्भवति रवौतुसशस्त्रजइति एवंविधेयोगेरवावादित्येस्थितेजननिसुतयोर्मृत्युः शस्त्रजः श
स्त्रेणायुधेनजातोभवति एतेनैतदुक्तंभवति शनैश्चरेणबुधेनवायुक्तेकेंद्रेग्रस्ते लग्नगतेकुजेचाष्टमगेजातस्यमात्रासहशस्त्रहेतुकंमरणं
वाच्यम् नन्वशुभइतिसामान्येनोक्तंतत्केवलेनशनैश्चरेणयुक्तेचंद्रेशशिनिइतिकिंव्याख्यातं शनैश्चरेणबुधेनवायुक्तेःकेतिनोक्तम्
अत्रोच्यते असंभवादेव पौर्णमास्यांचंद्रग्रहणंभवति तत्रतावदर्कसहितेनचंद्रमसानभवितव्यंबुधेनचार्कसमीपवर्तिनाऽसदैवभवितव्यं
अष्टमस्थानत्वाद्भौमेनापिचंद्रसहितेननभवितव्यं शनैश्चरंविनाव्यवस्थितेनबुधेनसौम्येनैवभवितव्यं तस्माच्चंद्रग्रहेणशनैश्चरेणेतिव्या

अशुभसहितेग्रस्तेचंद्रेकुजेनिधनाश्रितेजननिसुतयोर्मृत्युर्लग्नेरवौतुसशस्त्रजः उदयतिरवौशीतांशौवात्रिकोणविना
शगैर्निधनमशुभैर्वीर्योपेतैः शुभैर्नयुतेक्षिते ९ असितरविशशांकभूमिजैर्व्ययनवमोदयनैधनाश्रितैः भवतिमरणमाशु
देहिनांयदिबलिनागुरुणानवीक्षिताः १०

ख्यातं अर्कग्रहणेतुपुनः बुधेनयदियुक्तोऽर्कोभवति तदार्कसहितत्वात्तस्यपापताभवती
त्यतोर्कस्यबुधसहितत्वमितिव्याख्यातं क्षीणेंदुयोगादर्कस्यपापयोगएवायंनगण्यते यस्मादवश्यममावास्यांतेऽर्कग्रहणेनभवितव्यम्
तत्रचावश्यमर्केणक्षीणचंद्रसहितेनभवितव्यम् यद्यर्कः क्षीणेंदुनायुक्तइति आचार्यस्याभिप्रेतः स्यात्तदाग्रस्तेर्केनिधनाश्रितेकुजेइति
केवलमकरिष्यत् उदयतिरवावित्यादि रवावादित्येउदयतिलग्नगतेशीतांशौचंद्रेवालग्नगतेतथाअशुभैः पापैस्त्रिकोणविनाशगैः नवपंचमा
ष्टमस्थैः सर्वैरेवयथासंभवमेवंविधयोगस्थेरवौचंद्रेवाशुभैः सौम्यग्रहैः वीर्योपेतैः बलवद्भिः नयुक्तेक्षितेनसंयुक्ते नापिदृष्टेजातस्यनिध
नंमरणंवदेत् अर्थादेवोक्तयोगस्थेरवौचंद्रेवाबलिभिः शुभैःयुतेदृष्टेचारिष्टयोगाभावः ९ अथारिष्टांतरमपवल्केणाह असितइति
असितः सौरः रविरादित्यः शशांकश्चंद्रः भूमिजोंगारकः एतैः शनिरविचंद्रभौमैर्यथाक्रमंव्ययनवमोदयनैधनाश्रितैः द्वादशनवमल-



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ग्नाष्टमस्थानस्थैः तत्रैतज्जातं शनैश्चरे द्वादशे अर्के नवमे चंद्रे लग्नगे भौमेऽष्टमस्थे एते सर्वे योगयोगकर्तारो ग्रहा यदि बलिनो वीर्यवंतो गुरुणा न दृष्टा स्तदा जातस्य जंतोराशु एव मरणं प्रवदेत् अत्र यदा योगकर्तॄन् ग्रहान् सर्वान् बलवान् गुरुः पंचमस्थः कांश्चित्पश्यति कांश्चिन्न पश्यति अथवा बलहीनः सर्वानेव पश्यति तदा जातस्य मरणाय प्रवदेत् किंतु आशु शीघ्रं न वदेत् अर्थादेव सर्वानेव गुरुः पंचमगः पश्यति तदारिष्टयोगाभावः १० अथारि ष्टांतरं सुष्ठिनाययाह सूतइति शीतरश्मिः चंद्रः स च क्षीणः अशुभफलः पापग्रहेण संयुक्तः कृतमदननवांत्यलग्नरंध्रेषु स्थितः पंचमसप्तम नवमद्वादशोदयाष्टमगतः अथवा कृतमदननवांशरंध्रे स्थित इति पाठः एतेषां अन्यतमस्थानस्थः भृगुसुत शुक्रेण शशिपुत्र बुधेन देवपूज्य बृह स्पतिना बलिभिः वीर्यसंयुक्तैर्न युक्तो नाप्यवलोकितः एषां त्रयाणां मध्ये एकतमेनापि संयुतो नापि दृष्टस्तदा जातस्य मरणाय भवति अर्थात् एव भृ गुसुत शशिपुत्र देवपूज्यानामन्यतमेन बलवता दृष्टो युक्तो वा भवति तदारिष्टयोगाभावः अत्र क्षीणचंद्रग्रहणं नास्ति तत्कथं व्याख्यातमुच्यते आग मांतरदृष्टत्वात् तथा च सारावल्याम् निधनास्तव्ययलग्नत्रिकोणगाः क्षीणचंद्रसंयुक्ताः पापबलिनः शुभदैरदृश्यमाना गतायुषं धायः ११

कृतमदननवांत्यलग्नरंध्रे ष्वशुभयुतो मरणाय शीतरश्मिः भृगुसुत शशिपुत्र देवपूज्यैर्यदि बलिभिर्न युतो वलो

कितो वा ११ योगेस्थानं गतवति बलिनश्चंद्रे स्वं वा तनुगृहमथवा पापैर्दृष्टे बलवति मरणं वर्षस्यांतः किल मुनिगदितम् १२

अथानुक्तमरणकालानामन्येष्टयोगानां कालपरिज्ञानं क्रमरविलासितेनाह योगेस्थानमिति यस्मिन्नरिष्टयोगे जातस्य मरणकालावधिर्नो क्तस्तस्मिन्नरिष्टयोगे जातस्य योगकर्तारो ये ग्रहास्तेषां मध्याद्यो बलवान् स यस्मिन्राशौ जन्मकाले व्यवस्थितः स राशिर्बलिनः तत्स्थानं तत्र चारक्र माच्चंद्रमसि प्राप्ते जातस्य मरणं वक्तव्यम् अथवा चंद्रे स्वमात्मीयस्थानं गते जन्मकाले यत्र राशौ चंद्रमा व्यवस्थितस्तमेव राशौ पुनरपि चंद्रे गते तत्र तस्य मरणं वक्तव्यम् तनुगृहमथवा तनुगृहं लग्नं वा चारक्रमागते चंद्रमसि जातस्य मरणं वक्तव्यम् कदेत्युच्यते वर्षस्यांतः संवत्सराभ्यंतरे एत दुक्तं भवति अनुक्तकालारिष्टजातो वर्षं नातिक्रमतीति नन्वत्र प्रतिमासं चंद्रमसा सर्वाण्येव स्थानानि गंतव्यानि तत्किमित्युक्तं वर्षस्यांतः उच्यते पापैर्दृष्टे बलवतीति एषु निर्दिष्टस्थानेषु मध्याद्यत्र गतश्चंद्रमा बलवान् भवति पापैश्च दृश्यते तदा जातस्य मरणं वक्तव्यं न केवलं गतमात्र एव चंद्रे किल मुनिगदितं किलेत्यागमसूचने निश्चयेन मुनिगदितमिदमरिष्टलक्षणमित्यागमपारंपर्येण श्रूयत इति अत्रान्यैराचार्यैररिष्टभंगा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

उक्तास्तेचसत्यरूपाः यतोवहवोजाताअपिसत्स्वपियोगेषुजीवंतोदृश्यंतेनेतोस्माभिः किंचिल्लिख्यते सर्वानिमानतिबलः स्फुरदंशुजालोलग्न
स्थितः प्रशमयेत्सुरराजमंत्री एकोबहूनिदुरितानिसुदुस्तराणिभक्त्यासुयुक्त इवशूलधरप्रणामः १ लग्नाधिपोतिबलवानशुभैरदृष्टः केंद्र-
स्थितैः शुभफलैरवलोक्यमानः मृत्युंविधूयविदधातिसुदीर्घमायुः सार्धंगुणैर्बहुभिरूर्जितयाचलक्ष्म्या २ लग्नादष्टमवर्त्यपिगुरुबुधशुक्र
द्रेष्काणगश्चंद्रः मृत्युप्राप्तमपिनरंपरिरक्षत्येवनिर्व्याजम् ३ चंद्रः संपूर्णतनुः सौम्यर्क्षगतः स्थितः शुभस्यांतः प्रकरोतिरिष्टभंगंविशेषतः शु
क्रसंदृष्टः ४ बुधभार्गवजीवानामेकतमः केंद्रमागतोबलवान् यद्यपिक्रूरसहायः सद्योरिष्टस्यभंगाय ५ रिपुभवनगतोपिशशिगुरुसित
चंद्रात्मजदृकाणस्थः गरुडइवभोगिदुष्टंपरिरक्षत्येवनिर्व्याजम् ६ सौम्यद्वयांतरगतः संपूर्णः स्निग्धमंडलः शशभृत् निःशेषरिष्टहंताभुजं
गलोकस्यगरुडइव ७ शशभृतिपूर्णशरीरेशुक्लेपक्षेनिशाभवेकाले रिपुनिधनस्थेरिष्टंप्रभवतिनैवात्रजातस्य ८ प्रस्फुरितकिरणजालेस्नि
ग्धामलमंडलेबलोपेते सुरमंत्रिणिकेंद्रगतेसर्वारिष्टंशमंयाति ९ सौम्यभवनोपयाताः सौम्यांशकसौम्यदृक्काणस्थाः गुरुचंद्रकाव्यशशिजाः

इत्यरिष्टाध्यायः षष्ठः समाप्तः ६ मययवनमणित्थशक्तिपूर्वैर्दिवसकरादिषुवत्सराः प्रदिष्टाः नवतिथिविषया
शिवभूतरुद्रैर्दशसहितादशभिः स्वतुंगभेषु १ सर्वेरिष्टस्यहंतारः १० चंद्राध्यासितराशेरधिपः केंद्रेशुभग्रहोवापि प्रशमयतिरि
ष्टयोगंपापानियथाहरिस्मरणं ११ पापायदिशुभवर्गेसौम्यैर्दृष्टाः शुभेशवर्गस्थैः निघ्नंतितदारिष्टंपतिंविरक्तायथाकुवतिः १२ राहुस्त्रि
षष्ठलाभेलग्नात्सौम्यैर्निरीक्षितः सद्यः नाशयतिसर्वदुरितंमारुतइवतूलसंघातं शीर्षोदयेषुराशिषुसर्वेगगनाधिवासिनः सूतौ प्रकृति
स्थैश्चारिष्टंविलीयतेघृतमिवाग्निस्थम् १४ तत्कालेयदिविजयीशुभग्रहः शुभनिरीक्षितोवश्यं नाशयतिसर्वारिष्टंमारुतइवपादपान्प्रब
लः १५ सर्वैर्गगनभ्रमणैर्दृष्टश्चंद्रोविनाशयतिरिष्टं आपूर्यमाणमूर्तिर्यथानृपः स्वन्नयद्वेषीति १६ इतिश्रीभट्टोत्पलविरचितायांबृह
ज्जातकविवृत्तौरिष्टाध्यायः षष्ठः समाप्तः ६ अथायुर्दायाध्यायोव्याख्यायते तत्रपूर्वोक्तरिष्टाध्यायेऽरिष्टवर्जिततस्यायुर्दायःक
र्तव्यः तत्रादावेवमययवनमणित्थपराशरमतेनप्रत्येकस्यग्रहस्यपरमायुः प्रमाणंप्रदर्शयितायथाह मययवनेति मयनामादानवः सूर्यलब्ध-
वरप्रसादः यवनाम्लेच्छजातीयोहोराविदः मणित्थआचार्यः शक्तिपूर्वः पराशरः शक्तिः पूर्वायस्यसशक्तिपूर्वः पूर्वशब्देनपिताउच्यते



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तैः मयपवनमणित्थशक्तिपूर्वैः दिवसकरादिषादित्यादिषुग्रहेषुवत्सराः संवत्सराः परमायुः प्रमाणाब्दाः प्रदिष्टाः उक्ताः नवतिथिविष-
याश्वीत्यादि अत्रनवादिभिर्दशसहिताइति सर्वत्रैवविशेषणभूतंतेननवभिः दशसहिताएकोनविंशतिः परमायुः प्रमाणवत्सरादिवसकर-
स्यादित्यस्यतिथिभिः पंचदशभिः सहितादशपंचविंशतिश्चंद्रस्य विषयैः पंचभिः सहितादशपंचदशभौमस्य अश्विभ्यांद्वाभ्यांदशसहि
तादशद्वादशबुधस्य भूतैः पंचभिः सहितादशपंचदशगुरोः रुद्रैरेकादशभिः सहितादशएकविंशतिः शुक्रस्यदशभिः सहितादशविंश-
तिः सौरस्य एतानिग्रहाणांपरमायुःप्रमाणंवर्षाणि स्वतुंगभेषु स्वपरमोच्चांशास्थितेषुभवंति तत्रेदृशाः परमोच्चस्थिताग्रहा आदित्यादयो-
भवंतितेयथानिर्दिष्टवर्षाणिप्रयच्छंति १९।२५।१५।१२।१५।२१।२०। अंकेनापिएतान्यर्कादीनांपरमायुःप्रमाणवर्षाणि १ अथप
रमनीचावस्थितानामायुर्दायज्ञानंमंदाक्रांतयाह नीचेति एतएवदिवसकरादयोनीचेपरमनीचेप्राप्ताअर्धंपरमायुःप्रमाणवर्षेभ्यः प्रहरं
ति अतएवोक्तंनीचे तोस्मात्पूर्वोक्तात्परमायुषोऽर्धदलंह्रसतिक्षीयते अथेदृशारव्यादयः परमनीचस्थाभवंति परमनीचस्थास्तएवपूर्वो

नीचेतोऽर्धंह्रसतिहिततश्चांतरस्थेत्वनुपाताद्धोरात्वंशमतिममपरेराशितुल्यंवदंति हित्वावक्रंरिपुगृहगतेर्हीयतेस्वत्रिभागः
सूर्योच्छिन्नद्युतिषुचदलंप्रोह्यशुक्रार्कपुत्रौ २

क्तायुषोऽर्धंदलंप्रयच्छंति तद्यथा रविः नवसार्धानिवर्षाणिप्रयच्छति चंद्रोद्वादशसा
र्धानिवर्षाणिप्रयच्छति एवंभौमः सप्तसार्द्धानि एवंबुधः षट् एवंबृहस्पतिः सप्तसार्द्धानि एवंशुक्रोदशसार्द्धानि एवंशनैश्चरोदशअंकेनापि
वर्ष ८ मास ६ अयंसूर्यस्य चंद्रस्यवर्ष १२ मास ६ भौमस्यवर्ष ७ मास ६ बुधवर्षस्य ६ मास ० गुरोः वर्ष ७ मास ६ शुक्रस्यवर्ष १०
मास ६ शनेः वर्ष १० मास ० ततश्चांतरस्थेत्वनुपातइति ततः तस्मादुच्चान्नीचाच्चांतरस्थेमध्यवर्तिनिग्रहेत्वनुपातः त्रैराशिकः कर्तव्यः सर्वेषांनी
चानि अंकतयैवलिख्यंते तत्रतावत्सर्वस्यैवग्रहस्यपरमोच्चपरमनीचांतरालंतावदेवलिप्तापिंडीकृत्यदशसहस्राण्यष्टौचशतानिभवंति तत्रस्वो
च्चादधिकंग्रहेणयदाभुक्तंभवतितदातत्रस्वोच्चंविशोध्यशेषस्यलिप्तापिंडोकार्यम् अथस्वनीचादधिकंग्रहेणभुक्तंभवति तदातत्रस्वनीचमपा
स्यावशेषंलिप्तापिंडीकार्यम् तासांग्रहलिप्तानांग्रहभुक्तलिप्तागणइत्याख्या तस्यैवग्रहस्यपरमनीचोक्तानिवर्षाणिमासयुतानिकार्याणि
कृत्यगुण्यते वर्षाणिद्वादशभिः संगुण्यतत्रमासान्योजयेत्तानिचमासीकृतान्यादित्यादीनांलिख्यते तद्यथा चतुर्दशाधिकंशतंरवेः प्राग्वद्धि

राशिषट्कंभवति ४

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भज्य सार्धशतंचंद्रस्य नवतिर्भौमस्य द्विसप्ततिर्बुधस्य नवतिर्जीवस्य षड्विंशत्यधिकंशतंशुक्रस्य विंशत्यधिकं शतंसौरस्य अंकेनापि
११४ सू॰ १५० चं १० भौ ७२ बु ९० जीव १२६ शुक्रस्य १२० शनेः तत्रत्रैराशिकं यदिभगणार्धलिप्ताभिः खखवसुदिक्संख्याभिरेता-
भिः १०८०० इष्टग्रहपरमनीचमासालभ्यंते तद्ग्रहभुक्तलिप्ताभिः कियंतइति अत्रेदंसूत्रं त्रैराशिकेप्रमाणंफलमिच्छाघ्नंतयोःसदृशरा-
शी इष्टफलेनगुणिताप्रमाणभक्ताफलंभवतितदर्थं ग्रहभुक्तलिप्ताएवग्रहपरमनीचमासैः संगुण्यभगणार्धलिप्ताभिर्विभज्यावाप्तंमासाः
मासशेषं त्रिंशद्गुणितं ३० प्राग्वद्विभज्यावाप्तंदिवसाः दिनशेषंषष्ट्यासंगुण्य प्राग्वद्विभज्यावाप्तंघटिकाः घटिकाशेषंषष्ट्यासंगुण्य प्राग्वद्वि
भज्यावाप्तंविकलापलानि एवंमासादिक्षेपकांतःकालआगतः मासानांद्वादशभिः भागमपहृत्यचावाप्तंवर्षाणिलभ्यंते तदवशेषंमासाः एव
मागतंवर्षादिपरमोच्चायुः दर्शितवर्षेभ्यः संशोध्यावशेषंग्रहेणवर्षादिरायुषः कालोदत्तोभवति एवमुच्चाद्विच्युतस्यनीचप्राप्तस्यकर्तव्यंनीचा
द्विच्युतस्योच्चप्राप्तस्यप्राग्वत्कालमानीयतस्यचग्रहस्यपरमनीचायुषिसंयोज्यग्रहस्यायुषःकालोवर्षादिर्भवति अथवायदिराशिषट्कलिप्ता-
भिरर्धायुर्वर्षाण्यपचीयंते तदैताभिः ग्रहभुक्तलिप्ताभिः किमित्यंतमध्यमराशिसवर्णीकृत्यतेनांकेनग्रहभुक्तलिप्तागुणयेत् ततःपरिवर्त्यभा
गहारच्छेदांशैः छेदसंगुणच्छेदांशांशगुणोभाज्यस्यभागहारः सवर्णितयोरित्यत्रवर्षाणामेवमस्यच्छेदापिकेनभगणार्धेनलिप्ताः संगुण्य
खखखषट्घनलिप्ताभवंति २१६०० एताभिर्भागमपहृत्यवर्षाणिलभ्यंतेशेषंद्वादशभिः सविकलंसंगुण्याधस्यस्यविकलस्यषष्ट्याभागमप
हृत्योपरितनराशौसंयोज्यप्राग्वद्विभाज्यमासालभ्यंतेएवंशेषंसविकलंत्रिंशताषष्ट्यासंगुण्यदिनघटिकाविघटिकाश्चानयितव्याः शे
षंप्राग्वत्कर्म अथलघुनोपायेनपिंडायुषआनयनंप्रदर्श्यते तद्यथेष्टग्रहादस्मात्सारुक्तमुच्चध्रुवकंविशोध्यावशेषंकर्मभूमौस्थापयेत्
अथोच्चध्रुवकंतत्शुध्यतितदाग्रहराशिद्वादशकंदत्वातस्मादुच्चमपास्यावशेषंस्थापयेत् ततस्तदवशेषंराशिषट्कादूनंभवतितदाराशिद्वादशका-
दपास्यशेषंस्थाप्यम् अथराशिषट्कादधिकंभवतितदातदेवग्राह्यम् तत्कर्मभूमौराश्यादिकंविलिप्तांतंस्वपरमायुर्वर्षैः संगुण्यस्वच्छेदेविभज्यल
ब्धमुपर्युपरियोजयेत् अवशेषंस्थापयेत् विलिप्तास्थानेपिषष्ट्याभागानांत्रिंशताराशीनांद्वादशभीराशिभ्योलब्धंवर्षाणितदवशेषंमासाः भाग
शेषंदिवसाः लिप्ताशेषंघटिकाः विलिप्ताशेषंचपलाइति एतावतैवकर्मणास्फुटंभवति तथाचसारावल्याम् स्वोच्चशुद्धोग्रहः शोध्यः षड्भाधिकोभ ३६
मंडलात् स्वपिंडगुणितोभक्तोराशिमानेनवत्सराः १ ।१२। ३०। ६०। ६० इतिहोरात्वंशप्रतिममिति होरालग्नम् सांशांशप्रमाणानिवर्षाणिद

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दानि यावंतोनवांशकालग्नेनभुक्तास्तावंत्येववर्षाणिददानि तत्करणम् यथानात्कालिकलग्नस्यराशिनपास्यशेषंलिप्तापिंडीकार्यम् तत्रशतद्व-
येनभागमपहृत्यावाप्तंभुक्तनवांशकास्तावंत्येववर्षाणिलग्नमायुर्दायंप्रयच्छंति अवशेषेणसहत्रैराशिकंकृत्वावर्षाणामधस्तान्मासाद्यंस्थापयि
तव्यम् तद्यथा यदिलिप्ताशतद्वयेनद्वादशमासालभ्यंते तदवशेषलिप्ताभिः कियंतइति तेनावशेषलिप्ताद्वादशभिः संगुण्यशतद्वयेनविभा-
ज्यावाप्तंमासास्तेचवर्षाणामधः स्थाप्यमासशेषंत्रिंशतासंगुण्यशतद्वयेनप्राग्वद्विभाज्यावाप्तांचदिवसाः तान्मासानामधःस्थापयेत् दिनशे
षंषष्ट्यासंगुण्यप्राग्वद्विभाज्यावाप्तंघटिकादिवसानामधः स्थाप्याः घटिकाशेषंषष्ट्यासंगुण्यप्राग्वद्विभाज्यावाप्तंचशेषकाघटिकानामधःस्था-
प्याः एवंलग्नायुर्दायः अपरेराशितुल्यंवदंति अपरेन्येमणित्थादयः आचार्यालग्नस्यराशितुल्यंआयुर्दायमिच्छंति लग्नेयावंत्योराशयोभु
क्तास्तावंत्येववर्षाणिलग्नायुः लग्नस्यभुक्तभागादिकंलिप्तापिंडीकृत्यमासाद्यानयनेत्रैराशिकंकर्तव्यम् यद्यष्टादशभिर्लिप्ताशतैर्द्वा
दशमासालभ्यंते तदेताभिः लग्नभुक्तलिप्ताभिः कियंतइति प्राग्वद्वर्षाणामधस्तान्मासाद्यास्थापितव्याः तथाचमणित्थः लग्नराशि
समाश्चाब्दामासाद्यमनुपाततः लग्नायुर्दायमिच्छंतिहोराशास्त्रविशारदाइति तदेवमतंशोभनमित्यस्माकमभिप्रेतम् अन्येप्येवमिच्छं
ति यथा लग्नाधिपतौबलवतिअंशतुल्यराश्याधिपेबलवतिराशितुल्यंवदंतिकथयंतीत्यर्थः तथाचसारावल्याम् लग्नाद्यायांशतुल्य-
स्याद्ंतरेचानुपाततः तत्सदेवलसंयुक्तेराशितुल्यंचभाधिपेहित्वावक्रमिति येनग्रहेणयावत्संख्ययायुर्दायोदत्तस्तत्तस्यसंभवति तस्मात्स्वाद
पक्षोभौमादिकस्यवक्रंविपरीतांगतिंहित्वावर्जयित्वायोग्रहोरिपुगृहगतः शत्रुक्षेत्रावस्थितोभवतितेनस्वादायुषस्त्रिभागोहीयते सग्रहस्त्रिभा
गमपहरतीत्यर्थः वक्रिणः पुनः शत्रुक्षेत्रगतोपिनापहरति तथाच वक्रचारंविनात्र्यंशंशत्रुराशौहरेद्ग्रहः एतद्बहूनांमतं आचार्यस्यपुनः एषएव-
पक्षोऽभिमतः अन्यथाहित्वाभौमंरिपुगृहगतेहीयतेस्वत्रिभागंइत्येवावक्ष्यत् वक्रंहित्वायोग्रहोरिपुराशिगतएतज्ज्ञायते यथावक्रगोग्रहोशत्रु
दायंबलवत्वात्त्रिगुणंददाति तथात्रापिनापिहरतीतिनिश्चयः अन्येपुनरेवंव्याचक्षते यथा वक्रमंगारकंहित्वायोग्रहोरिपुराशिगस्तेन-
स्वादायुषस्त्रिभागोहीयते भौमः शत्रुक्षेत्रगतोपिनापहरति अत्रचबादरायणः भूम्याःपुत्रंवर्जयित्वारिभस्थाहन्युः स्वस्वादायुषस्तेत्रिभाग
मिति सूर्योच्छिन्नद्युतिषुसूर्येणरविणाउच्छिन्नाकर्तितायुतिर्येषांतेसूर्योच्छिन्नद्युतयः आदित्यमंडलेअस्तमितेषुग्रहेषुदलमर्धंहीयते किंतुशुक्रा
र्कपुत्रौसितशनैश्चरौमोड्यवर्जयित्वा स्तावस्तंगतावपिनापहरतः तथाचबादरायणः अस्तंयाताः सर्वएवार्धहानिंकुर्युर्हित्वादैत्यपूज्यार्कपुत्रौ २

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथग्रहाणां स्वादायुषश्चक्रपातेनापहानिंप्रदर्शयन्नाह सर्वार्द्धमिति असत्कपापग्रहेषुव्ययभवनादारभ्यद्वादशस्थानात्प्रभृतिसप्तमांतं यावद्व्य वस्थितेषुवामव्युत्क्रमेण यथाक्रमंसर्वार्द्धादयोभागाः क्षीयंते तत्रलग्नाद्द्वादशस्थः पापग्रहः सर्वमायुरात्मीयमेवापहरति एकादशस्थोऽर्द्धंदश मस्थस्त्रिभागंनवमस्थश्चतुर्भागं अष्टमस्थःपंचमभागं सप्तमस्थःषड्भागमिति सत्स्वर्द्धमिति एतेष्वेवव्ययादिषुस्थानेषुसत्कशुभग्रहेषुव्य वस्थितेषुशुभग्रहोक्तस्यार्द्धंक्षीयते तत्रलग्नाद्द्वादशस्थः शुभग्रहः स्वादायुषोऽर्द्धमपहरति एकादशस्थश्चतुर्भागम् दशमस्थःषड्भागं नवमस्थोऽष्टमभागं अष्टमस्थोदशमभागं सप्तमस्थोद्वादशभागमिति तथैकराशिगानामिति उक्तस्थानेषुयदाग्रहद्वायंभवतिबहवोवास्यु स्तदातेषामेकसंस्थितानांमध्यादेकएवयोबलीवीर्यवान् सएवैकोंशंभागंयथापठितमपहरतिनान्येतत्रस्थापहरंतीति एतत्सत्यआहसत्याचा र्यःकथयति अंशग्रहणंयथासंभवंभागप्रदर्शनार्थम् तथाचसत्यः एकादशोत्क्रमात्सप्तमादितिभाहहरणकर्माणि एकर्क्षगेषुवीर्याधिकः स्वभागंहरेदेकम् अर्धंतृतीयमथचतुस्तथापंचमंचषष्ठंच आयुः पिंडात्पापहरंतिसौम्यास्तथार्धानि द्वादशसंस्थः पापःस्वादायंशोभनस्ततोर्द्धंतु

सर्वार्द्धत्रिचरणपंचषष्ठभागाःक्षीयंतेव्ययभवनादसत्सुवामम् सत्स्वर्द्धंह्रसतितथैकराशिगानामेकोंशंह
रतिबलीतथाहसत्यः ३ सार्द्धोदितोदितनवांशहतात्समस्ताद्भागोष्टयुक्तशतसंख्यमुपैतिनाशम् ॥ ७

अपहरतिसर्वमायुर्यथाचयोगस्तमपिवक्ष्येइति वराहमिहिरस्याप्येवंमतम् इहसत्यमतोपन्यासआगमानुस्मृतिप्रदर्शनार्थः ३ अथलग्न स्थःपापश्चक्रपातवदायुषोंशमपहरतितस्यांशप्रमाणज्ञानंवसंततिलकेनाह सार्द्धोदितइति उदितायेननवांशास्तेऽउदितनवांशाः सहार्द्धोदितेन नवांशेनवर्ततइतिसार्द्धोदितोदितनवांशाः तात्कालिकस्यस्फुटलग्नस्ययेभुक्ताभागाः तेषांलिप्ताः पिंडीकृत्यशतद्वयेनभागमपहृत्यावाप्तंतस्मि न्कालेभचक्रस्यचयावंतोनवांशकाउदिताः पश्चादर्द्धोदितोनवांशकः सतत्रउदितनवांशसमूहेयोज्यः एवंकृतेसार्द्धोदितोदितनवांशसमूहोभवति तेनगणितागतंसमस्तमेवायुः पिंडंगुणनीयम् एवंकृतेसार्द्धोदितोदितनवांशहतंसमस्तमायुःपिंडंभवति तस्मादष्टाधिकशतेनभागेहृते यदवाप्यतेवर्षादितन्नाशमुपैतिक्षयंगच्छति किंसर्वेषांनेत्याह ॥ क्रूरेविलग्नसहितइति यदाविलग्नस्थःक्रूरः आदित्यांगारकशनैश्चराणा- ३७
मन्यतमोभवतितदेवआगतंवर्षादिसमस्तायुः पिंडात्संशोध्यएवंकृतेतत्कालजातस्यजंतोरायुर्वर्षादिस्फुटंभवति किंतुप्रत्येकस्यग्रहस्यत-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्कर्मकर्तव्यंयेनाप्तः संशुद्धानिदशावर्षाणिसर्वेषांभवंति विधिनात्वनेनसौम्येक्षितइति अनेनविधिनासएवलग्नस्थः क्रूरग्रहोयदासौम्ये-
क्षितः शुभग्रहेणदृश्यते तदाविधिनात्वनेनयत्फलमाप्तः पिंडात्सार्द्धोदितोदितनवांशहृतात्समस्तायुः पिंडादष्टोत्तरशतेनभागेहृतेयत्फलं
लब्धंअतोदलमर्धंप्रलयंप्रयाति तदर्द्धीकृत्याप्तः पिंडात्पातयदेवंकृतेआयुः प्रमाणंस्फुटंभवति अन्येएवंव्याचक्षते तात्कालिकेनलग्नेन
भुक्तायेनवांशकास्तेसार्द्धोदितनवांशेनसहग्राह्याः अयमर्थः तात्कालिकस्यलग्नस्यराशीनपास्यभागालिप्ताःपिंडीकृत्यशतद्वयेनभाग
मपहृत्यावाप्तसुदिनांशकस्तैः कर्मप्राग्वत्कार्यंएतदपिस्थूलम् तेनलग्नभागाद्विप्तीकृत्यताभिः प्रत्येकंग्रहदत्तवर्षादिरायुर्दायंसंगुण्याधः
स्वच्छेदैर्भागमपहृत्योपर्युपरियोजयेत् वर्षस्थानेभगणकलाभिर्भागमपहरेल्लब्धंवर्षादि तस्यप्राग्वत्पातनंकार्यम् तथाचसारावल्याम् लग्नांश
लिप्तिकाहतात्प्रत्येकंविहगायुषा भाज्यंमंडललिप्ताभिर्लब्धंवर्षादिशोधयेत् १ स्वायुषोलग्नगेक्रूरेसौम्यदृष्टेचतद्दलमिति एतदेवशोभनम-
स्माकंप्रतिभाति नकेवलमत्र यावच्चक्रपातेष्वेवंविधिः लग्नादिष्टग्रहंविशोध्यावशेषंयदिषड्भागादूनंतदातस्यग्रहस्यचक्रेपातोऽस्तिनान्यथेति

क्रूरेविलग्नसहितेविधिनात्वनेनसौम्येक्षितेदलमतः प्रलयंप्रयाति ४ समाःषष्टिर्द्विघ्नामनुजकरिणांपंचचनिशा
हयानांद्वात्रिंशत्खरकरभयोःपंचककृतिः ॥

तेनावशेषेणायुः पिंडस्यभागमपहृत्यलब्धंप्राग्वदायुषःपातयेत् अथरूपदूनोभा
गहारोभवति तदारूपाद्भागहारंसंशोध्य शेषेणायुर्दायंसंगुण्यरूपेणभागमपहृत्यलब्धमेवाप्तः शुद्धंभवतिउक्तंच लग्नंग्रहोनकंषड्भादूनकं
यद्यसौहरः आप्तः पिंडंभजेत्तेनलब्धंवर्षादिशोधयेत् रूपाद्यदोनोहारःस्याद्रूपाच्छुद्धेननाडयेत् रूपेणविभजेल्लब्धंतदेवायुः स्फुटंभवेत् अ
स्मिन्सार्धोदितेतिकर्मणिलग्नेयदापापसौम्योभवनस्तदायोलग्नोदितांशकसमीपवर्तिसएवग्राह्योनेतरइति तत्रक्रूरशब्देनक्षीणश्चंद्रमान
ग्राह्यः तथाचबादरायणः सूर्यांगारकशनीनामेकस्मिन्लग्नगेभवतिहानिः विधिनात्वनेनसौम्येक्षितेदलंपातयेल्लब्धम् ४ अथपुरुषादीनांप
रमायुःप्रमाणज्ञानंशिखरिण्याह समाःषष्टिर्द्विघ्नाइति समाशब्देनवर्षमुच्यतेसमानांवर्षाणांषष्टिर्द्विघ्नाद्विगुणीकृताविंशत्यधिकंवर्षशतंभव
ति एवंविंशत्यधिकंवर्षशतंपंचनिशापंचरात्रयोऽहोरात्राणीत्यर्थः मनुजकरिणांमनुजानामनुष्याणांकरिणांहस्तिनांचपरमायुः हयानांअश्वा
नांद्वात्रिंशद्वर्षाणिपरमायुः खरोगर्दभः करभउष्ट्रः अनयोः पंचकृतिः पंचकस्यकृतिः पंचानांवर्गः पंचविंशतिः परमायुः विरूपासाप्याायुरिति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सापंचककृतिः विरूपाविंगतोरूपोएष्यः एकोनाचतुर्विंशतिर्वर्षाणिवृषमहिषयोः वृषाणांमहिषाणांच परमायुः गोमहिष्योरित्यर्थः शुनांसारमे-
यानांद्वादशवर्षाणिपरमायुः श्वग्रहणं सर्वेषांनखिनामुपलक्षणार्थं तेनसिंहमार्जारादिनामप्येतदेवस्मृतं छागादीनामपि निदशकसहिताषट् षोडश
वर्षाणिपरमायुः छागादीनां आदिग्रहणात्खरमृगयोरपिपरमायुरिति सर्वेषांशेषभूतम् परमायुर्दायप्रयोजनम् अश्वादीनांजातानामायुः प्रमा-
णज्ञानार्थमिति तद्यथा अश्वादेर्जातस्यपुरुषवदायुः प्रमाणमानीयतत्रस्त्रैराशिकंकर्तव्यंयदिविंशत्यधिकवर्षशतंपंचदिनाधिकंयस्यपुरुष
स्यायुः प्रमाणंतस्येदमायुस्तद्द्वात्रिंशद्वर्षायुः प्रमाणस्याश्वस्यकिंस्यादिति एवमागतमायुः प्रमाणमश्वस्यतत्कालजातस्यवाच्यंएवंसर्वेषाम-
भिहितप्राणिनांस्वायुषामपरेणत्रैराशिकंकृत्वातत्कालजातस्य स्वायुषः प्रमाणनिर्देशः कार्यः अन्येएवंवदंति यथापठितंपरमायुषः प्रमाणंनक-
श्चिज्जीवतितद्युक्तम् यस्माद्विंशत्यधिकाद्वर्षशतादभ्यधिकमप्यायुर्गणितकर्मणा भवति यस्मात्परमायुः प्रमाणपठनंत्रैराशिककार्यमेवज्ञात
व्यमिति ५ अथयस्मिन्योगेजातस्यपरमायुर्भवतितद्योगज्ञानंयवनेश्वरोप्याह अनिमिषपरमांशकेति अनिमिषोमीनः तस्यपरमांशको

विरूपासाप्यायुर्वृषमहिषयोर्द्वादशशुनांस्मृतंछागादीनांदशकसहिताः षड्परमम् ॥५॥

नवमनवांशकः तस्मिन्ननिमिषपरमांशकेविलग्नेशशिनितत्रयेबुधेगविवृषेचपंचवर्गलिप्तेस्थिते लिप्ताः पंचविंशतिभुक्ताबुधोवृषेस्थितः स-
कलाः समस्ताः ग्रहाअन्येसर्वएवयदिस्वतुंगभेषुस्थिताः परमोच्चगताभवंति तथाजातस्यपरमायुः प्रमाणंविंशत्यधिकंवर्षशतंपंचदिनाधिकमायु
र्भवति तत्रचकर्म तद्यथा आदित्यादयोग्रहाः सलग्नाईदृशाः अत्रादित्यानांबुधवर्जितानांयथापठितानिपरमायुः प्रमाणवर्षाणिभवंतिबुधस्य
पुनः क्रियते तत्रतावद्बुधोनीचान्मीनाद्विच्युतः तस्मात्तात्कालिकादस्माद्बुधात् १।०।२५ बुधपरमनीचभ्रुवकमिदम् ११।१५।०० संशो
ध्यजातमेतालिप्ता १।१५।२५ एतल्लिप्तापिंडीकृतं २७।२५ एताभिस्त्रैराशिकंयदि भगणार्धलिप्तानांएताः संगुण्य १०८०० बुधपरमनीचव
र्षाणिषट्भवंति तदातासांनीचाक्रांतलिप्तानाम् २७।२५ किंस्यादिति अत्रप्राप्तफलंवर्षादि १।६।५ एतद्बुधपरमनीचगतेषुदत्वाजा
तं ७।६।५ एतद्बुधस्यपरमायुः तत्रलग्नादेकादशस्थानत्वाद्भौमस्यचक्रपातात्परमायुः प्रमाणं वर्षपंचदशकोदर्धपातयित्वासार्धानिसप्त ३८
७।६ वर्षाणि सौरस्याष्टमस्थानस्थत्वात्परमायुः प्रमाणाद्वर्षविंशतिः पंचमभागेचत्वारिवर्षाणिपातयित्वाजातानिषोडशवर्षाणि १६

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

लग्न ११।२७

सू १ — शु १२ — ११ — चं २५ — मं १० — बु २ — ३ — ९ — गु ४ — ६ — ८ — ५ — ७ श

आदित्यचंद्रबृहस्पतिशुक्राणांपरमायुः लग्नस्यनवमनवांशकस्थत्वान्नववर्षाणिभवंति सर्वेषांस्थापनं सूर्यवर्ष १९ चंद्रवर्ष २५ भौमवर्ष ७ मास ६ बुधवर्ष ७ मास ६ दिन ५ जीववर्ष १५ शुक्रवर्ष २१ शनिवर्ष १६ लग्नवर्ष ९ सर्वेषांयोगः वर्ष १२० दिन ५ एवंदर्शितयोगेपरमायुः प्रमाणमागतमिति अत्रचादित्येमेषस्थेकन्यास्थत्वंबुधस्यनसंभवतितेनषड्भिर्ग्रहैरुच्चस्थैर्बुधेचवृषस्थेयोगोयंप्रदर्शितः अत्रचपरमोच्चगतेसूर्येबुधस्यवृषाद्भागचतुष्टयंभुक्त्वास्थितिर्भवतिनास्मादधिकं यतोमध्यमार्कोदयराशिस्थानेशून्योभवति भागाःषट्पंचाशल्लिप्ताभवंति तदातस्यस्फुटस्यपरमोच्चताभवति एषएवसूर्योमध्यमबुधअत्रचयदापरमार्कफलंपरमंचशीघ्रफलंधनगतंभवति तदाबुधोवृषेभागचतुष्केस्फुटोभवति तत्रयथादर्शितलग्नेयथावस्थितग्रहसंस्थायांवृषेचतुर्थभागेईदृशोबुधोभवति १।४ अस्मान्नीचध्रुवकमिदं ११।१५ संशोध्यजातम् १।१९ बुधोएतल्लिप्तापिंडीकृतं २९।४० एताभिस्त्रैराशिकंयदिभगणार्धलिप्तानामेतासाम् १०८०० षड्वर्षाणितदेताभिः साकां २०।४० नीतिलब्धंवर्ष १ मास ७ दिन १८ एतद्बुधपरमनीचवर्षेषुदलाजातानिवर्षाणि ७ मास ७ दिन १८ एतदादेषुयथादर्शितवर्षेषुसंयोज्यजातवर्षाणांशतं १२० मास १ दिन २३ एतद्दर्शितपरमायुःप्रमाणादधिकमप्यायुः संभवतिइति तस्मात्परमायुःप्रमाणपठनंत्रैराशिकार्थमेवव्याख्यानम् अन्येपुनः अनिमिषपरमांशकेविलग्नेयोगेएवायुर्व्याचक्षते यथामीनोवर्गोत्तमगते

अनिमिषपरमांशकेविलग्नेशशिततयेगविपंचवर्गलिप्ते भ
वतिहिपरमायुषःप्रमाणंयदिसकलाःसहिताःस्वतुंगभेषु ६

| सू | चं | मं | बु | बृ | शु | श | ल |
|---|---|---|---|---|---|---|---|
| ० | १ | ९ | १ | ७ | ११ | ६ | ११ |
| ९ | २ | २७ | २३ | ४ | २६ | १२ | २९ |

लग्नेवृषभस्थेनबुधेनपंचविंशतिलिप्ताभुक्ताभवंत्यन्येचग्रहाःस्वोच्चराशिषुपरमोच्चभागव्यतिरेकेणापियदिस्थितास्तदायोगशक्त्यैवपरमायुःप्रमाणंजातोजीवति अथबुधस्यपरमनीचध्रुवकर्मेदम् ११।१४ पूर्वंप्रदर्शितंसांप्रतंकर्मकालेकथमिदं ११।१५।० प्रदर्शितमित्यत्रोच्यते चतुर्दशभागाभुक्त्वापंचदशेपठितेपरमनीचभागेव्यवस्थितोभवतिअतश्चतुर्दशभागाः परमनीचस्थस्यप्रदर्शिताः तत्रस्थस्यपरमनीचप्रदर्शितमायुर्भवति तस्माद्यावत्पंचदशोभागोनभुक्तोबुधेनतावत्त्रैराशिकोत्पत्तिर्नकर्तव्येत्यतः कर्मकालेपंचदशभागाः प्रदर्शिताः इत्येनत्सर्वेषामेवग्रहाणांत्रैराशिककालेपठितेभोगैर्भुक्तैःप्रदर्शयितव्यानि तत्रत्रैराशिकार्थमुच्चध्रुवकाः तथात्रैराशिकार्थपरम

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नीचभवक्राः एतैः कर्मकर्त्तव्यमिति ६ अथास्यापरमतायुर्दायस्यदूषणार्थंशालिन्याह आयुर्दायमिति एतदायुर्दायंनकेवलंमययवनमणित्थशक्ति
पूर्वैरुक्तंयावद्विष्णुगुप्तेनापिचाणक्यापरनाम्नैवमुक्तम् आचार्यदेवस्वामीतथासिद्धसेनश्चैवंचक्रेकृतवानित्यर्थः तथाचविष्णुगुप्तः परमोच्चगतैः
सर्वैर्मीनेमीनांशसंस्थिते सौम्येचवृषगेजातः परमायुः सजीवति तथाचदेवस्वामी सूर्याद्यैरुच्चगतैर्मीनेमीनांशसंस्थितेलग्ने सौम्येवृषभंयाते
जातः परमायुराप्नोति तथाचसिद्धसेनः मीनेपरमांशगतेसौम्येगविपंचवर्गलिप्तास्थे सर्वैः परमोच्चगतैर्जातः परमायुराप्नोति यद्येवंबहुभिरा
चार्यैरुक्तंतत्कोऽस्यदोषः तत्रोच्यते वक्ष्यमाणंसत्याचार्यमतेप्रदर्शितमायुर्दायंबहुतराणामाचार्याणांमतमिति यस्मादाचार्यवराहमिहिरस्यप्र-
निज्ञेयं ज्योतिषमागमशास्त्रंविप्रतिपन्नोनयोग्यमस्माकं स्वयमेवविकल्पयितुंकिंतुबहूनांमतंवक्ष्ये अस्यपरमस्यबहुतरविरुद्धत्वंतावदास्ता
म् विवादसंभवोदोषोऽप्यस्तिदोषश्चैषामित्यादि एषामाचार्याणांमतेदोषोजायतेकीदृशइत्याह अष्टावरिष्टमित्यादि वर्षाष्टकंयावज्जातानाम
मरिष्टमुक्तंतद्वर्षाष्टकंहित्वात्यक्त्वावर्षविंशतेरधस्ताद्दर्शितप्रकारेणायुर्नस्यान्नागच्छति एवंवर्षाष्टकादूर्ध्वमरिष्टंनास्तितस्माद्वर्षाष्टकादूर्ध्वंवर्षविं

आयुर्दायंविष्णुगुप्तोऽपिचैवंदेवस्वामीसिद्धसेनश्चचक्रे दोषश्चैषांजायतेऽष्टावरिष्टंहित्वानायुर्विंशतेःस्यादधस्तात् ७
यस्मिन्योगेपूर्णमायुःप्रदिष्टंतस्मिन्प्रोक्तंचक्रवर्तित्वमन्यैः ॥ शतेरधस्तान्नकस्यचिन्मरणमापद्यते यद्दृश्यंतेम्रियंतइति अयंतेषां
प्रत्यक्षोदोषः ७ अथभ्रांतेषामेवाचार्याणामायुर्दूषणंशालिन्याह यस्मिन्योगेति अनिमिषपरमांशकेविलग्नइत्यस्मिन्योगेविंशत्यधिकंव
र्षशतंसपंचदिनंपरमायुः पूर्णंप्रदिष्टंतस्मिन्योगेषड्ग्रहाः परमोच्चगताभवंति षड्भिश्चपरमोच्चगतैश्चक्रवर्तीभवतीतिप्रोक्तमभिहितमन्यैरा-
चार्यैः तथाचबादरायणः षड्भिः स्याच्चक्रवर्तीत्रिभुवनमखिलंशास्तिसर्वैर्ग्रहेंद्रैरिति यवनेश्वरश्च षड्राजराजधिर्बलोपकर्षप्रदानमानेश
भिजातशक्तिः तत्रपरमोच्चगतायावंतः षड्ग्रहानभवंति तावत्परमोच्चायुर्नप्राप्नोति यदापरमोच्चगताभवंतितदाजातेनचक्रवर्तिनाभवित
व्यम् एवंपूर्णमायुः विंशत्यधिकंवर्षशतंमर्त्यैर्भूमिनैर्विनावर्जयित्वाबहवःपुरुषाजीवंति तस्मादयमपितेषुपरोदोषः एतच्चपरमतायुर्दायदूषणं
शालिनीद्वयमसंबंधत्वाद्वराहमिहिरकृतमेवनभवतीतिनप्रतिभाति तत्रतावद्यदत्रप्रथमशालिन्यादूषणमुक्तंतस्यदूषणस्यासंबंधत्वमुच्यते - ३९
सार्द्धैर्दिनोदितनवांशहतात्समस्तादिति न्यायेनयत्क्रूरेविलग्नगतेआयुषः पातनंक्रियते तस्यमतिलग्नंप्रत्यंशकवशादियत्तन्नसंभवतीति -

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तच्चपातयित्वा यदायुर्विंशिष्यतेनस्यापीयत्ता नास्तीति तस्माद्यदुक्तम् नायुर्विंशतेः स्यादधस्तात्तदयुक्तम् अत्रोदाहरणम् यथा कुंभलग्नस्याद्यं-
शकोदये आदित्यचंद्रशुक्राः परमोच्चे बुधजीवशनैश्चराः परमनीचे भौमश्च कुंभस्याप्यष्टाविंशतिमंभागंसुल्कास्थितस्तदा तात्कालिका ग्रहाः सलग्नाः

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | ल. |
|---|---|---|---|---|---|---|---|
| ० | १ | १० | ११ | ९ | ११ | ० | १० |
| ९ | २ | २८ | १७ | ७ | २६ | १९ | ५ |
| ० | ० | ० | ० | ० | ० | ७ | ० |

अत्र लग्नेन न किंचिदुक्तमिति लग्नायुर्दायो नास्ति परमोच्चगतानां परमनीचगतानां च ज्ञान एव भौ
मस्यक्रियते तात्कालिकाद्भौमादस्मात् १०।२८ भौमस्य परमोच्चं ध्रुवकमिदं १।२८ संशोध्य जा
तं १।० एतल्लिप्तापिंडीकृतं १८०० अथ त्रैराशिकं यदि भगणार्द्धलिप्तानामेतासाम् १०८००
भौमनीचमासाः नव निर्भवंति ९० तदेतासां कियंत इति लब्धा मासाः १५ एतैर्वर्षसत्रिमासं
जातं वर्ष १ मास ३ एतद्भौमपरमोच्चवर्षेषु तेषु १५ संशोध्य जातं वर्ष १३ मास ९ एष भौमायुर्दायः अथ जीवस्य लग्नाद्द्वादशस्थत्वाच्चक्रपाते
नार्द्धं पातयित्वा जातं जीवायुर्दायः वर्ष ३ मास ९ परमोच्चगतानां परमनीचगतानां च शत्रुक्षेत्रत्वात् त्र्यंशं अस्तंगतानामर्द्धं च न पात्यते यस्मादनिमिषपरमांश
के विलग्ने इत्यत्र योगे चंद्रमसो वृषभस्थत्वादायुषः त्रिभागः पात्यते तदा पूर्णमायुर्न भवतीति यस्मादन्याचार्यमतमिति तात्कालिकमित्रामित्रविधा-
वुक्तम् मूलत्रिकोणाद्धनधर्मबंधुसुतव्ययस्थानगता ग्रहेंद्राः तात्कालिकाः स्फुः सुहृदो ग्रहस्य स्वोच्चेऽपि यो यस्य विकृष्टवीर्यः १ जामित्रषष्ठाष्टम
शत्रुमूर्तिर्द्यूनत्रिकोणैकगृहे निविष्टाः तात्कालमेते रिपवो भवंति त्र्येनानि मित्राणि रिपूंश्च वक्ष्ये २ अनेनापि शुक्रश्चंद्रमसः तात्कालिकं मित्रं न भवति तस्मात्
मीनस्थे शुक्रे वृषस्थश्चंद्रमाः शत्रुगृहगो भवति तस्य च शत्रुक्षेत्रस्थत्वादायुषस्त्रिभागः पात्यते तदा अनिमिषपरमांशक इत्यत्र योगे पूर्णमायुर्न प्राप्नो
तीति तच्चाचार्येण शृंगग्राहिकयैव प्रदर्शितं तेनैतत् ज्ञापयति परमोच्चगतानां परमनीचगतानां च शत्रुक्षेत्रे त्र्यंशमस्तंगतानां चार्द्धं च न पात्यते तेन य
था दर्शितयोगं पृथक् पृथक् ग्रहायुर्दायवर्षाणि लिख्यंते सूर्यस्य वर्ष १९ चंद्रस्य वर्ष २५ भौमस्य वर्ष १३ मास ९ बुधस्य वर्ष ६ जीवस्य वर्ष ३ मास
९ शुक्रस्य वर्ष २१ शनेः वर्ष १० लग्नेन न किंचिदुक्तमिति लग्नायुर्दायो नास्ति अथैतेषां योगः वर्ष ९८ मास ६ अथांगारकस्य लग्नगतत्वात्सार्द्धो
दितेति कर्म क्रियते तत्र च लग्ने कुंभारंभत्वान्नवति ९० नवांशका भुक्ता भवंति ते च नवांशका चक्रस्योदितास्तद्यगत एकनवतिसमाः ९१ तेनैकनवत्या
सर्वायुः पिंडमिदं वर्ष ९८ मास ६ संगुण्य जातं ८९६३६ अस्याष्टाधिकशतेन भागमपहृत्याप्तं वर्षाणि ८२ मास ११ दिन २८ घटी २० अस्मा
त् ९८।६ संशोध्य जातं वर्ष १५ मास ६ दिन १ पल ४० एवमष्टम्यऽर्द्धविंशतेरधस्तादायुरुत्पन्नमिति तस्माद्यदुक्तमयुक्तं नायुर्विंशतेः स्यादध

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्यादिति अत्रान्येवदंति यथाक्रूरहीनंमीनलग्नंतद्दिक्कृत्वैतद्वराहमिहिरेणोक्तं अनिमिषपरमांशकइति अनेनापिप्रकारेणनवक्तव्यम् यथाना
युर्विंशतेः स्यादधस्तादित्यत्रधन्विलग्नेक्षीणेचंद्रेविंशानितमेभागेबुधस्तत्रास्तमितः सर्वेष्वन्येषुपरमनीचस्थेषुयस्यजन्मभवति तस्यचक्र
पातेनैवायुर्दायोबहुःपतीतिति तस्यैवतावत्प्रदर्श्यते तत्रतात्कालिकाग्रहाः सलग्नाः तत्रबुधस्यप्राग्वत्कृत्वाजातंवर्ष १० मास १० अन्येषांपरम
नीचस्थत्वात् ज्ञापयते लग्नेननकिंचिद्भुक्तमितितस्यायुर्दायोनास्ति चंद्रस्यक्षीणस्यपापत्वाल्लग्नाद्द्वादशस्थत्वाच्चक्रपातेनसर्वंपततितदात
स्यायुर्दायोनास्ति आदित्यस्यलग्नेकादशत्वाच्चक्रपातेनार्द्धपातयित्वाजातंवर्ष ४ मास १ बुधस्यास्तमितत्वादर्द्धंपातयित्वाजातंवर्ष ५ मास ५
दशमस्थत्वाच्छुक्रः स्वायुषस्तृतीयमंशमपहरतिइति सौम्यत्वात्तदर्द्धमस्मात् षड्भागादर्द्धमेकंनवमासान्पातयित्वाजातान्यष्टौवर्षाणिनवमासाश्च
शुक्रस्यवर्ष ८ मास ९ भौमस्यलग्नाष्टमस्थत्वात्पंचमभागंसार्द्धंवर्षंपातयित्वाजातानिवर्षाणिषट्इति एवंसर्वेषांवर्षाणिवर्ष ४ मास १ सूर्यस्यवर्ष०
मास० चंद्रस्यवर्ष ५ मास० भौमस्यवर्ष ५ मास ५ बुधस्यवर्ष ७ मास ६ जीवस्यवर्ष ८ मास ९ शुक्रस्यवर्ष १० मास० शनैश्चरस्यवर्ष० मास० –
लग्नस्यवर्ष० मास० सर्वेषांयोगः वर्ष ४२ मास ५ अत्रासंभवेप्यभिगम्यापिब्रूमः एवंविधायुर्दायः सर्वेष्यस्तंगतायदिभवंतितदासूर्योच्छिन्न
द्युतिषुचंद्रलंप्रोझ्यशुक्रार्कपुत्राविति कृत्वातथापिपंचत्रिंशत्वर्षाणिमासोनानियतोबुधस्यपूर्वमेवार्द्धंपातितंएवंद्विचत्वारिंशतोऽधस्तादायु–
र्नागच्छतीति तथापिविंशतेरधस्तादित्यसंबद्धंअत्राप्यन्येएवंवदंतिक्रूरहीनेविलग्नेजाता अष्टाभ्यऊर्ध्वंविंशतेः अधस्तान्म्रियमाणादृश्यंते ते
नान्याचार्यमतमसंबद्धं अत्रोच्यते अन्याचार्यमतंपूर्वापर्येणविचार्यैतद्वदंति यैरेवाचार्यैरनेनमार्गेणायुर्दायः प्रदर्शितः तैरेवायंमृत्युयोगो
भिहितः सचेहलिख्यते तथाचबादरायणः षष्ठाष्टमस्थोरिपुदृष्टमूर्तिः पापग्रहः पापगृहेयदिस्यात् स्वांतर्दशायांमरणायजंतोर्ज्ञेयः सयुद्धे–
विजितोयदान्यैः १ तथाचयवनेश्वरः षष्ठाष्टमस्थोरिपुदृष्टरोद्वोपापैः कृतत्स्थानगतश्चदृष्टः स्वांतर्दशायांप्रकरोतिमृत्युंपाशाध्वबंधादिपरि
क्षयाद्वा १ तथाचसारावल्याम् क्रूरदशायांक्रूरः प्रविश्यचांतर्दशांयदाकुरुते पुंसांस्यात्संदेहस्त
दारियोगोहिसंदेवमहान् १ रवितनयस्यदशायांक्षितिजस्यांतर्दशायदाभवति बहुकालजीवितो
मपिमरणंनिःसंशयंपुंसाम् १ क्रूरराशौस्थितः पापः षष्ठेवानिधनेपिवा तत्स्थेनवारिणादृष्टः –
स्वपाकेमृत्युकृद्ग्रहः १ योलग्नाधिपतेः शत्रुर्लग्नस्यांतर्दशांगतः करोत्यकस्मान्मरणंसत्याचार्यः

| सू॰ | चं॰ | मं॰ | बु॰ | गु॰ | शु॰ | श॰ | ल॰ |
|---|---|---|---|---|---|---|---|
| ५ | ७ | ३ | ५ | १ | ५ | ० | ८ |
| १ | २ | २७ | १४ | ४ | २५ | ११ | ० |



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

प्रभाषते १ एवंक्रूरहीने लग्ने ये जातास्तेषां वर्षाष्टकादूर्ध्वदर्शितकालादधस्तान्मरणं संभवत्येव नेचापिमृत्युयोगेनानेन मृताइतिज्ञेयाः यस्मात्त-
स्यांतर्दशादर्शितग्रहसंबंधिनाकदाभवति अत्रायंनियमः तस्मादन्याचार्यमतेनैवाष्टाभ्यऊर्ध्वंदर्शितकालादधस्तान्मरणंसंभवत्येव तस्मादेतत्-
दूषणमसंबद्धं प्रथमं अथद्वितीयस्य दूषणस्यासंबंधत्वमुच्यते अत्र चक्रवर्तित्वयोगोपिविनादीर्घमायुः संभवति अत्रोदाहरणम् यत्रता-
त्कालिकाग्रहाः सलग्नाः वृषेर्को दशभागान्भुक्त्वास्थितः एवंमिथुनेचंद्रमास्त्रीन्भागान्कुंभे भौमोष्टाविंशतिभागान् मेषेबुधः पंचदशभा
गान्सिंहेजीवः पंचभागान् मेषसप्तविंशतिः सत्रिभागान् शुक्रःकुंभेविंशतिभागान् सौरः धन्विलग्नमंत्यांशे तथैषा ईदृशाग्रहाः अत्रपूर्व-
प्रदर्शितकर्मणागतानिग्रहायुर्दायवर्षाणिलिख्यंते वर्ष १७ मास ५ सूर्यस्यवर्ष २२ मास ११ चंद्रस्यवर्ष १३ मास ८ भौमस्यवर्ष ७ मास० बुध-
स्यवर्ष १४ मास ७ जीवस्यवर्ष १८ मास ३ शुक्रस्यवर्ष १५ मास० शनेःवर्ष ८ मास० लग्नस्य अथबृहस्पतेवर्षाणांचक्रपातादष्टभागमपास्य
जातंवर्ष १३ मास ८ चंद्रस्यषड्भागमपास्यजातंवर्ष १८ मास ८ रवेःगुरुर्मित्रमतोन्यथान्यइति शुक्रः शत्रुःसचार्कमूलत्रिकोणात्सिंहान्नवमे
स्थानेस्थितः तस्मात्तात्कालिकंमित्रीभूतः तेनवृषस्थः शत्रुक्षेत्रमध्यास्थितस्तेनतस्यायुर्दायंनकिंचित्पतति चंद्रश्चमिथुनेमित्रक्षेत्रेस्थितः
तस्यापियथादर्शितान्येवायुर्दायवर्षाणि यस्मादुक्तम् इंदोर्बुधदेवगुरूचविधात् अंगारकः कुंभेशत्रुक्षेत्रेस्थितः यस्मादुक्तम् भौमस्यशुक्रः
शशिजश्चमित्रमिति शेषान्रिपून्शेषत्वाच्छनैश्चरस्तस्यशत्रुस्तात्कालिकश्चैकगृहेनिविष्टत्वाच्छनैश्चरोधिशत्रुः किंत्वंगारस्यशत्रुक्षेत्रस्थ-
स्यापिनपततियस्मादुक्तम् हित्वावक्रंरिपुगृहगतैर्हीयतेस्वत्रिभागइति तस्मादंगारकस्ययथागतमेवायुः चांद्रेरनर्कादितिवचनाद्भौमोबुधस्य
मित्रम् तेनतस्यमेषस्थत्वान्नयथागतमेवायुर्बुधस्य बृहस्पतेरप्यादित्योमित्रम् यस्मादुक्तम् गुरोश्चभौमंपरित्यज्यसर्वेइति तस्मात्सिंह-
स्थस्यबृहस्पतेः यथागतमेवायुः शुक्रस्यमेषेसचमित्रक्षेत्रे यस्मादुक्तम् भृगुनंदनस्यत्वर्केंदुवर्ज्याः सुहृदः प्रदिष्टाः तस्मात्तस्यापिय-
थागतमेवायुः शनैश्चरस्यापिकुंभेस्वक्षेत्रेस्थितत्वाद्यथागतमेवायुः लग्नस्यपातचारहीनत्वात् यथागतमेवायुः एवमायुर्दायवर्षाणिपृ-
थक्पृथक्लिख्यंते वर्ष १७ मास ५ सूर्यस्यवर्ष १८ मास ८ चंद्रस्यवर्ष १३ मास ८ भौमस्यवर्ष ७ मास० बुधस्यवर्ष १२ मास ८
गुरोःवर्ष १८ मास ३ शुक्रस्यवर्ष ९ मास० शनेःवर्ष १५ मास० लग्ने एवंविधेचतुर्दशाधिकंवर्षशतमप्यायुः संभवति ११३ मास ११
यदाचंद्रवर्ष २२ मास ९ तदासर्वेषांयोगः ११५ मास ११ एवंविधेयोगेषोडशाधिकंवर्षशतमप्यायुः संभवति केमद्रुमाख्यश्चायं-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

योगः यस्माद्वक्ष्यति हित्वार्कसुनफानफादुरुधरास्वांत्योभयस्थैर्यहैः शीतांशोः कथितोन्यथात्रबहुभिः केमद्रुमोन्यैस्त्वसौ तस्मादेवंविधेयोगेजातो दीर्घमायुः प्राप्नोति केमद्रुमत्वाच्चदरिद्रोभवति वक्ष्यतिच केमद्रुमेमलिनदुःखितनीचनिःस्वाः प्रेष्याः खलाश्चनृपतेरपिवंशजाताः केवलंदरिद्रादीर्घायुषोदृश्यंते नकेनचित्कस्यचिद्दरिद्रस्यायुःप्रमाणंज्ञातं यथायंदरिद्रोविंशत्यधिकेन वर्षशतेनसपंचदिनेनमृतः तस्मात्सोऽप्येवंदूषणंज्ञातव्यम् एवमस्यदूषणस्यासंबद्धत्वंप्रदर्शितमिति असंभाव्यत्वाद्वराहमिहिरकृतमेतच्छालिनीद्वयंनसंभाव्यते यच्चदर्शितमाचार्यमतेनायुर्दायंयत्काल त्यमतायुर्दायमंगीकरिष्यत्याचार्यस्तत्रचसत्यमतस्य बहुतराणामाचार्याणांमतांगीकरणमेवप्रयोजनं यस्मात्पूर्वमेवाचार्यमतेनायुः प्रतिज्ञाव्याख्याता ज्योतिषमागमशास्त्रंविप्रतिपत्तौनयोग्यमस्माकं स्वयमेवविकल्पयितुंकिंतुबहूनांमतंवक्ष्ये अथकश्चिदाह ननुयोगंयोगस्त्वयाप्रदर्शितः सकेमद्रुमएवनभवति यस्मादाचार्यएववक्ष्यति केंद्रेशीतकरेथवा ग्रहयुतेकेमद्रुमोनेष्यतइति लग्नात्सप्तमस्थः केंद्रस्थचंद्रमास्तस्मादयंकेमद्रुमोनभवति अत्रचब्रूमः अत्रचंद्रमानगण्यते यस्माच्चंद्रमसः सकाशाद्ग्रहेणान्येनयोगः कर्तव्यइति यद्येवंतल्लग्नात्केंद्रस्थः कथंकरोतीत्यत्रो

प्रत्यक्षोयंनेषुदोषः फरोपिजीवत्यायुः पूर्णमर्थैर्विनापि ८

च्यते चंद्रलग्नयोस्तुल्यत्वात् तथाचयवनेश्वरः मूर्तिंचहोरांशशिनंचविद्यात् अत्रचगार्गिः व्ययार्थकेंद्रगश्चंद्राद्विनाभानुंभवेद्ग्रहः कश्चित्स्याद्विनाचंद्रंलग्नात्केंद्रगतोथवा योगः केमद्रुमोनामतदास्यात्तत्रगर्हितः भवंतिनिंदिताचारादरिद्र्यामयसंयुताइति तस्माल्लग्नात्सप्तमस्थेचंद्रमस्यस्ययोगस्यकेमद्रुमतासिद्धैवेति ८ अथजीवशर्ममतेनसत्याचार्यमतेनचायुर्दायमौपच्छंदसिकेनाह स्वमतेनेति जीवशर्मानामाचार्यः स्वमतेनात्मीयमतेनपरमायुषोविंशत्यधिकस्यवर्षशतस्यसपंचदिनस्यस्वरांशं सप्तमभागंप्रत्येकस्यग्रहस्यायुर्दायमाहकथयति किलशब्दस्तथानामप्रदर्शनार्थः तद्यथापरमायुः १२०।०।५ अस्यसप्तमभिभागमपहृत्यावाप्तंवर्षादि १७।१।२२।८।३४ यथान्याचार्यैर्नवतिथिविषयेत्येवमादीनिपरमोच्चगतानामादित्यादीनांवर्षाणिपठितानि तथैतानिपरमायुः स्वरांशवर्षाण्येकैकस्यजीवशर्मपठितानि नीचेर्द्धंह्रसतीत्यत्रापिस्थितमेवतत्रार्द्धंसंतत् ८।६।२६।४।१७ एतानिपरमनीचस्थस्यैकैकस्यग्रहस्य एतैः भागवदेवत्रैराशिकंकृत्वैकैकस्यग्रहस्यायुर्दायः कर्तव्यः अत्रापिचक्रंविनाशत्रुक्षेत्रस्थस्यग्रहस्यत्र्यंशायहानिः शुक्रशनैश्चरौविनाभौमंविनाचबलवद्ग्रहस्यास्तंगतस्यार्द्धोपहानिः



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सर्वार्द्धत्रिचरणेत्यादिकाचक्रपातापहानिः क्रूरेविलग्नेसार्द्धोदिनेतिहानिः एतत्सर्वंजीवशर्मणोप्यन्याचार्यैः समानम् तथाचजीवशर्मा स
तदशै १७त्रो १द्वियमौ २२ वसवो ८ वेदाग्नयो ३४ग्रहेंद्राणांवर्षाण्युच्चस्थानानीचस्थानांअतोर्द्धस्यात् मध्येनुपातनः स्यादानयनम्
शेषमत्रयत्किंचिसिंडायुषद्वकार्यं तत्सर्वंगणिततत्त्वज्ञैरिति अत्रानयनंसुखोपायेनप्रदृश्यते स्वोच्चशुद्धोग्रहः शोध्यषड्भाद्रूनोभमंडलात्
तद्भागाः क्वचित्षड्भोगी ८६९४१ हृनावेदाग्निसायकैः ५०४ भक्तादिनादियल्लब्धंतदायुर्जीवशर्मजम् दिनैस्त्रिंशतामासामासैभ्योरविभिः
समाः नकेवलंग्रहदायंपरमायुषः स्वरांशमेतत्तेनोक्तं यावत्स्वमतेनेति अनेनैवंमतिपादयति यथैतन्मयात्मषिकृतेष्वाचार्यकृतेषुवानकेचि-
च्छास्त्रेषुदृष्टमिति तस्मादस्यायुर्दायस्यजीवशर्मणः स्वमतकरणमेवदोषः एवंसर्वाचार्यमतेनायुर्दायोव्याख्यातः अत्राचार्येणयवनमते-
नोपन्यस्तमयवनमणित्यशक्तिपूर्वैरिति नचयवनेश्वरकृतेशास्त्रेतथाविधआयुर्दायोदृष्टः यस्माद्यवनेश्वरेणोक्तम् आयंविराश्यंश
कराशियोगादिति अत्रोच्यते यवनेश्वरेणास्फुजिध्वजेनान्यच्छास्त्रंकृतं शककालस्यार्वाक्ज्ञायते तथाचस्फुजिध्वजः गतेनसाप्यर्धशते

## स्वमतेनकिलाहजीवशर्माग्रहदायंपरमायुषः स्वरांशम्

नयुक्ताप्यंकेनकेषांनगताब्दसंख्याकालः शको १०४४ नांशविशोध्यतस्मादनीनवर्षाद्युगवर्षजातम् एवंचेत्स्फुजिध्वजकृतंशककाल
स्यार्वाक्ज्ञायते अन्यच्च यवनाचार्यैः पूर्वैः कृतमिति तदर्थंस्फुजिध्वजोप्याह यवनाऊचुः येसंग्रहेदिग्गजनजातिभेदाः मोक्ताः पुराणैः
क्रमशोग्रहस्य तदेतद्ज्ञायते यथावराहमिहिरेणपूर्वयवनाचार्यमतमेवोपन्यस्तं अस्माभिस्तन्नदृष्टम् स्फुजिध्वजकृतमेवदृष्ट्वा परा
शरस्यापीयमेववानपाराशरीया संहिताकेवलमस्माभिर्दृष्टानजातकंश्रूयतेस्कंधत्रयमितिपाराशरस्येति तदर्थंवराहमिहिरः शक्तिपूर्वैरित्याह
चित्रंमोऽस्मपाराशरः कथयतेदौर्भाग्यदंयोषितामित्येवमादिमयमणित्थयोर्होराशास्त्रेविद्यते तथाच एकोनविंशतिः सूर्यश्चंद्रमाः पंचविंश
तिः तिथिसंख्याकुजः सौम्योद्वादशोच्चगतोगुरुः कुजवद्भृगुपुत्रस्यवर्षाणामेकविंशतिः एकोनसूर्यपुत्रस्यपरमोच्चगतस्यच आयुर्दायमिदंप्रो
क्तमर्द्धनीचगतस्यतु अंतरेत्वनुपाताच्चकारयेदायुःसंग्रहम् तथाचमणित्थः नवरूपाः शरयमलास्तिथयोर्काः पंचरूपाः क्रमशः रूपयमाकृ
तिसंख्याः सूर्यादीनांस्वतुंगमेषुब्दाः नीचेष्वस्मादर्द्धमन्यत्रानुपाततः कार्यम् आयुर्दायविधानंहोराराशितुल्यमपि अयवराहमिहिरस्यस्व

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मतायुर्दायोयवनेश्वरसत्यमतानुसारीव्याख्यायते ग्रहभुक्तनवांशराशितुल्यमिति यत्रतत्रराशौयस्मिन्नवांशकेग्रहोव्यवस्थितः सचनवां-
शकोमेषादेरारभ्ययावत्संख्याराशेः संबंधीभवति तावंतिएववर्षाणिग्रहः स्वायुर्दायंप्रयच्छति एवंभुक्तनवांशराशितुल्यंभवति यस्मिंश्चन-
वांशकेवर्ततेतस्माद्यद्भुक्तंग्रहेणतेनसहत्रैराशिकंकृत्वामासाद्यानयनमपिकर्त्तव्यम् त्रैराशिककरणंचवक्ष्यति एवमायुर्दायानयनंचसत्याचा-
र्येणोक्तम् तथाचतद्वाक्यम् राश्यंशकसंयोगादायुरिहसमासतोग्रहाद्दद्युः एतच्चसत्यवाक्यम् बहुसाम्यंसमुपैति बहुसंमतंबहूनामाचा-
र्याणांसंमतं तथाचयवनेश्वरः आयूंषिराश्यंशकचारयोगादिति अत्रतावत्सत्ययवनेश्वरवाक्यव्याख्याने किंचिद्विप्रतिपन्नं राशेरंशकचा-
रयोगादितिव्याचक्षते यथायस्मिन्राशौग्रहोवर्त्तते तत्रतेनयावंतोनवांशकाभुक्तास्तावंत्येववर्षाण्यायुः सग्रहोददाति अत्रचव्याख्यानेपरमं-
ग्रहदायसाध्यमानेनवर्षाणिभवंति एतच्चव्याख्यानंबादरायणादिभिरंगीकृतम् तथाचबादरायणः राश्यंशकालागुणिताद्द्वादशतवभि-
र्ग्रहस्यभगणेभ्यः द्वादशहृतावशेषेब्दमासदिननाडिकाः क्रमशः इयमाचार्यवाराहमिहिरेणाविनष्टेवस्वल्पजातकेभिहिताएतदनुसारेणसत्य

ग्रहभुक्तनवांशराशितुल्यंबहुसाम्यंसमुपैतिसत्यवाक्यम् ९

यवनेश्वरेणव्याख्यानंक्रियते आयूंषिराश्यंशकचारयोगादिति राशीनामंशकाराश्यंशकाः तेषुचारयोगादिति यत्रतत्रराशौमेषांशकस्थो
ग्रहोवर्षएकंप्रयच्छति वृषनवांशकस्थोग्रहोवर्षद्वयंप्रयच्छति एवमुत्तरोत्तरांशकवृद्ध्यावर्षवृद्धिर्यावन्मीनांतेद्वादशइति पूर्वव्याख्यानेन
यवनेश्वरसत्यवाक्ययोराशिग्रहणमनर्थकंभवति अवश्यमेवराश्यंशकैर्भवितव्यमिति ९ अथानेनैवव्याख्यानानुसारेणाचार्यः सएवायुर्दा-
यानयनमार्ययाह सत्योक्तेति सत्योक्ते सत्यमतायुर्दायकरणेतात्कालिकमिष्टमभिप्रेतम् ग्रहंलिप्तीकृत्यलिप्तापिंडंकृत्वातस्यशतद्वयेनभाग-
मपहृत्ययदवाप्तंतदवाप्ताख्यंस्थाप्यम् अवशेषमधःस्थाप्यम् आवाप्तमंडलभागविशुद्धेब्दाः स्युः मंडलभागशब्देनद्वादशभागउच्य-
ते तेनावाप्तस्यद्वादशभिर्भागमपहृत्यावाप्तंत्याज्यम् यदवशिष्यतेतेब्दाः स्फुटास्तावद्वर्षाणितेनग्रहेणायुषोदत्तानिभवंति शेषात्तुमासाद्याः
यदवशेषंस्थापितं तस्माद्द्वादशगुणितात्तेनैवच्छेदेनविभक्तान्मासालभ्यंते तच्छेषात्त्रिंशद्गुणितांद्दिनानि तच्छेषात्षष्टिघ्नाद्घटिकाः
पुनरपिषष्टिघ्नात्प्राग्वद्भक्ताच्चविकलाः लभ्यंतेइति एवमागतंग्रहस्यायुर्दायंभवति तत्रोदाहरणम् तात्कालिकोग्रहः १।८।४५



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सर्वार्द्धत्रिचरणेत्यादिका चक्रपातापहानिः क्रूरे विलग्ने सार्द्धोदितेनेति हानिः एतत्सर्वं जीवशर्मणोप्यन्याचार्यैः समानम् तथा च जीवशर्मा स
प्तदशे १७ क्ष्मा १ द्वियमौ २२ वसवो ८ वेदाग्नयो ३४ ग्रहेंद्राणां वर्षाण्युच्चस्थानानां नीचस्थानानां अनोर्द्धस्थानात् मध्येनुपातनतः स्यादानयनम्
शेषमत्र यत्किंचित्सिंडायुषइवकार्यं तत्सर्वं गणिततत्त्वज्ञैरिति अत्रानयनं सुखोपायेन प्रदृश्यते स्वोच्चशुद्धो ग्रहः शोध्यः षड्भाद्दूनो भमंडलात्
तद्भागाः कुध्विषड्गोगी ८६४१ हता वेदाभ्रसायकैः ५०४ भक्तादिनादियल्लब्धं तदायुर्जीवशर्मजम् दिनैस्त्रिंशता मासा मासैस्तथा रविभिः
समाः न केवलं ग्रहदायं परमायुषः स्वरांशमेतत्तेनोक्तं यावत्स्वमतेनेति अनेनैवं प्रतिपादयति यथैतन्मया ऋषिकृतेषु आचार्यकृतेषु वा नकेचि-
च्छास्त्रेषु दृष्टमिति तस्मादस्यायुर्दायस्य जीवशर्मणः स्वमतकरणमेष दोषः एवं सर्वाचार्यमतेनायुर्दायो व्याख्यातः अत्राचार्येण यवनमते-
नोपन्यस्तं मय यवन मणित्थशक्तिपूर्वैरिति न च यवनेश्वरकृते शास्त्रे तथाविधआयुर्दायो दृष्टः यस्माद्यवनेश्वरेणोक्तम् आर्कं विराश्यंश
कराशियोगादिति अत्रोच्यते यवनेश्वरेण स्फुजिध्वजेनान्यच्छास्त्रं कृतं शककालस्यार्वाक् ज्ञायते तथा च स्फुजिध्वजः गतेन साप्यर्धशते

स्वमतेन किलाह जीवशर्मा ग्रहदायं परमायुषः स्वरांशम्

नत्युन्त्याप्यंकेन केषांनगताब्दसंख्या कालः शको १०४४ नांशाविशोध्य तस्माद्तीतवर्षाद्युगवर्षजातम् एवं चेत्स्फुजिध्वजकृतं शककाल
स्यार्वाक् ज्ञायते अन्यच्च यवनाचार्यैः पूर्वैः कृतमिति तदर्थं स्फुजिध्वजोप्याह यवनाऊचुः येसंग्रहेदिग्गजनजातिभेदाः मोक्ताः पुराणैः
क्रमशो ग्रहस्य तदेतद्ज्ञायते यथा वराहमिहिरेण पूर्वयवनाचार्यमतमेवोपन्यस्तं अस्माभिस्तन्न दृष्टम् स्फुजिध्वजकृतमेव दृष्ट्वा परा
शरस्यापीयमेव वार्ता पाराशरीया संहिता केवलमस्माभिर्दृष्टा न जातकं श्रूयते स्कंधत्रयमिति पाराशरस्येति तदर्थं वराहमिहिरः शक्तिपूर्वैरित्याह
चित्रं मोऽज्ञ पाराशरः कथयते दौर्भाग्यदं योषिताम् इत्येवमादि मय मणित्थयोर्होराशास्त्रे विद्येते तथा च एकोनविंशतिः सूर्यश्चंद्रमाः पंचविंश
तिः तिथिसंख्या कुजः सौम्यो द्वादशोच्चगतो गुरुः कुजवद्दैत्यपूज्यस्तु वर्षाणामेकविंशतिः एकोन सूर्यपुत्रस्य परमोच्चगतस्य च आयुर्दायमिदं प्रो
क्तमर्द्धं नीचगतस्य तु अंतरे तु अनुपाताच्च कारयेदायुः संग्रहम् तथा च मणित्थः नवरूपाः शरयमलास्तिथयो र्काः पंचरूपाः क्रमशः रूपयमाकृ
तिसंख्याः सूर्यादीनां स्वतुंगमेष्वब्दाः नीचेष्वस्माद्दलमन्यत्रानुपाततः कार्यम् आयुर्दायविधानं होराराशितुल्यमपि अथ वराहमिहिरस्य स्व

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मतायुर्दायोयवनेश्वरसत्यमतानुसारीव्याख्यायते ग्रहभुक्तनवांशराशितुल्यमिति यत्रतत्रराशौयस्मिन्नवांशकेग्रहोव्यवस्थितः सचनवां-शकोमेषादेरारभ्ययावत्संख्याराशेः संबंधीभवति तावंतिएववर्षाणिग्रहः स्वायुर्दायंप्रयच्छति एवंभुक्तनवांशराशितुल्यंभवति यस्मिंश्चन-वांशकेवर्त्तते तस्माद्यद्भुक्तंग्रहेणतेनसहत्रैराशिकंकृत्वामासाद्यानयनमपिकर्त्तव्यम् त्रैराशिककरणंचवक्ष्यति एवमायुर्दायानयनंचसत्याचा-र्येणोक्तम् तथाचतद्वाक्यम् राश्यंशकसंयोगादायुरिहसमासतोग्रहाद्दद्युः एतच्चसत्यवाक्यम् बहुसाम्यंसमुपैति बहुसंमतंबहूनामाचा-र्याणांसंमतं तथाचयवनेश्वरः आयूंषिराश्यंशकचारयोगादिति अत्रतावत्सत्ययवनेश्वरवाक्यव्याख्याने किंचिद्विप्रतिपन्नं राशेरंशकचा-रयोगादितिव्याचक्षते यथायस्मिन्राशौग्रहोवर्त्तते तत्रतेनयावंतोनवांशकाभुक्तास्तावंत्येववर्षाण्यायुः सग्रहोददाति अत्रचव्याख्यानेपरमं-ग्रहदायसाध्यमानेनवर्षाणिभवंति एतच्चव्याख्यानंबादरायणादिभिरंगीकृतम् तथाचबादरायणः राश्यंशकालागुणितात्द्वादशनवभि-र्ग्रहस्यभगणेभ्यः द्वादशहृतावशेषेब्दमासदिननाडिकाः क्रमशः इयमाचार्यवाराहमिहिरेणापिनिष्टेवस्वल्पजातकेभिहिता एतदनुसारेणसत्य

ग्रहभुक्तनवांशराशितुल्यंबहुसाम्यंसमुपैतिसत्यवाक्यम् ९

यवनेश्वरेणव्याख्यानंक्रियते आयूंषिराश्यंशकचारयोगादिति राशीनामंशकाराश्यंशकाः तेषुचारयोगादिति यत्रतत्रराशौमेषांशकस्थो ग्रहोवर्षमेकंप्रयच्छति वृषनवांशकस्थोग्रहोवर्षद्वयंप्रयच्छति एवमुत्तरोत्तरांशकवृद्ध्यावर्षवृद्धिर्यावन्मीनांतेद्वादशइति पूर्वव्याख्यानेन यवनेश्वरसत्यवाक्ययोराशिग्रहणमनर्थकंभवति अवश्यमेवराश्यंशकेर्भविनव्यमिति ९ अथानेनैवव्याख्यानानुसारेणाचार्यः सएवायुर्दा-यानयनमार्ययाह सत्योक्तेति सत्योक्ते सत्यमतायुर्दायकरणेतात्कालिकमिष्टमभिप्रेतम् ग्रहंलिप्तीकृत्यलिप्तापिंडंकृत्वातस्यशतद्वयेनभाग-मपहृत्ययदवाप्तंतदवाप्तसंख्यंस्थाप्यम् अवशेषमधःस्थाप्यम् आवाप्तमंडलभागविशुद्धेऽब्दाः स्युः मंडलभागशब्देन द्वादशभागउच्य-ते तेनावाप्तस्यद्वादशभिर्भागमपहृत्यावाप्तंत्याज्यम् यदवशिष्यतेतेब्दाः स्फुटास्तावद्वर्षाणितेनग्रहेणायुषोदत्तानिभवंति शेषात्तुमासाद्याः यदवशेषंस्थापितं तस्माद्द्वादशगुणितात्तेनैवच्छेदेनविभक्तान्मासालभ्यंते तच्छेषात्त्रिंशद्गुणितांद्दिनानि तच्छेषात्षष्टिघ्नाद्घटिकाः ४२
पुनरपिषष्टिघ्नात्साग्रवत्भक्तात्च्चविकलाः लभ्यंतेइति एवमागतंग्रहस्यायुर्दायंभवति तत्रोदाहरणम् तात्कालिकोग्रहः १।८।४५

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

लिप्तापिंडीकृताः २३२५ अस्यशतद्वयेन २०० भागमपहृत्यावाप्तं ११ जातंअवशेषं १२५ अवाप्तस्यास्य द्वादशभिर्भागंनप्रयच्छति इतिएतदेवा
वशेषंतस्माद्गृहेणैकादशवर्षाणिदत्तानिभवंति अवशेषं १२५ द्वादशभिर्गुणितंजातं १५०० अस्यशतद्वयेनभागमपहृत्यावाप्तं ७ जातंएवंस
प्तमासाः अथमासशेषम् १०० जातंएतत्त्रिंशता ३० गुणितंजातं ३००० अस्यशतद्वयेनभागमपहृत्यावाप्तं १५ दिवसाःपंचदशइति शेषस्याभावात्
घटिकाभावः एवमागतमेवंविधात्ग्रहाद्वर्षादिवर्ष ११ मास ७ दिन १५ घटिका० अथैतदेवराश्यंशकलागुणितेतिन्यायेनप्रदर्श्यते तद्यथा राश्या
दिग्रहाः ११।८।४५ अस्यराशिभागलिप्ताः पृथक्पृथक्द्वादशहताः अथभूयोनवाहताः १२।८६।५४०।१०८।८६४।४८६० अत्रलिप्तानामेतासां
४८६० षष्ट्याभागेहृतेलब्धं ८१ अवशेषं० एताघटिकालब्धमिदं ८१ भागेलब्धे ८६४ संयोज्यंजातं ८४५ अस्यत्रिंशताभागेहृतेलब्धं ३१ अव
शेषं १५ एतेदिवसाः अथलब्धमिदं ३१ राशिषेनेषु १८ संयोज्यंजातं १३८ अस्यद्वादशभिर्भागेहृतेलब्धं ११ शेषं ७ एतेमासाःलब्धस्यास्य ११
द्वादशभिर्भागंनप्रयच्छतीत्यएतदेवात्रशेषं ११ एतानिग्रहायुर्दायवर्षाणि एवंवर्ष ११ मास ७ दिन १५ घटी० एतत्पूर्वकृतायुर्दायेसंविहितमिति

सत्योक्तेग्रहमिष्टंलिप्तीकृत्वाशतद्वयेनाप्तं मंडलभागविशुद्धेब्दाःस्युःशेषात्तुमासाद्याः १० स्वतुंगवक्रोपगते-
स्त्रिसंगुणंद्विरुत्तमस्वांशकभत्रिभागगेः इयान्विशेषस्तुभदत्तभाषितेसमानमन्यत्प्रथमेप्युदीरितम् ११ ॥

एवंयवनेश्वरसत्याचार्यबादरायणवराहमिहिरेणायुर्दायःप्रदर्शितइति १० एवमागतस्यायुर्दायस्यसत्याचार्यमतेनैवकर्मविशेषार्थंवंशस्थेनाह
स्वतुंगवक्रेति स्वतुंगस्थैः स्वोच्चगतैर्ग्रहैः वक्रोपगतैः विपरीतगत्याश्रितैश्चयत्स्वदत्तमायुःस्तत्त्रिंशत्संगुणंकार्यम् उत्तमांशोपगतैः वर्गो
त्तमांशस्थितैः स्वांशकस्थितैः स्वनवमभागगतैः स्वभस्थैः स्वराश्युपगतैः स्वत्रिभागगैः स्वद्रेक्काणस्थैः एतैः यद्दत्तमायुः तद्विसंगुणंकार्यम्
इयान्विशेषइति भदत्तशब्देनसत्याचार्योभिधीयते यस्मात्तन्मतमिहप्रमाणीक्रियते पूर्वोक्तविधिनामययवनमणित्थशक्तिपूर्वैरित्यादिमतेना
युर्दायः कृतः तस्मात्सत्यभाषिते सत्याचार्यकृतेइयानेतावान्विशेषः यदेतत्स्वतुंगवक्रोपगतैः त्रिसंगुणमिति तत्सत्योक्तमेवसमानमन्य
दिति अन्यद्यच्छेषंतत्प्रथमेप्युदीरितं प्रथमेमययवनादिमतेयदुदीरितमुक्तं तत्समानमन्यत्रापितत्तुल्यं एतदुक्तंभवति सत्याचार्यमतेना
युर्दायंकृत्वा वक्रवर्ज्यंशत्रुक्षेत्रगतस्यत्र्यंशंपातनीयं शुक्रसौरौवर्ज्यंअस्तगतस्यार्द्धंपातनीयं सर्वार्धत्रिचरणेत्यादिचक्रपातोपहानिःकार्या ११

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एवंसत्याचार्यमतेनग्रहायुर्दायमुक्त्वाधुनालग्नायुर्दायकरणंक्रूरोदयेपापहानिः मासानदपवादार्थमिदंवज्रयाह किमिति अत्रास्मिन्सत्यमतायु र्दायेहोरालग्नंभांशप्रतिमंददाति मेषादेरारभ्ययावत्संख्यास्यराशेः संबंधिनवांशकोलग्नेनमुक्तस्तावंतिसंख्यानिवर्षाणिलग्नायुर्दायोददाति शे षाङ्गभागादिकांत्रैराशिकेनमासाद्यानयनमपिकर्तव्यं एतदुक्तंभवति सत्योक्तेग्रहमिष्टांलिप्तीकृत्येतिन्यायेनलग्नायुर्दायः कर्तव्यः एवंकृतायदि वीर्यान्विताहोराभवति तदाराशिसमानानिराशितुल्यानिवर्षाणिप्रयच्छतीति होरास्वामिगुरुज्ञवीक्षितायुतानान्यैरिति नान्येनयदिवीर्यान्विता बलवतीहोरालग्नंभवति तदाराशिसमंददाति तत्तुल्यानिवर्षाणिप्रयच्छति भागादिकांत्रैराशिकेनमासाद्यानयितव्यं कथमुच्यते भागाश्चलि प्तापिंडीकृत्यद्वादशभिः संगुण्याष्टादशभिः शतैः भागमपहृत्यावाप्तमासाः अवशेषंत्रिंशतासंगुण्यतेनैवच्छेदेनभागमपहृत्यावाप्तंदिवसाः तदवशेषंषष्ट्यासंगुण्यतथैवघटिकाः पुनरपिशेषंषष्ट्यासंगुण्यतथैवचषकाः लब्धंमासादितत्रैवयोजयेदेवंलग्नायुर्दायोभवति वीर्यान्वितस्यल ग्नस्ययत्कर्मतद्वीर्यवर्जितस्यचनकर्तव्यम् अत्रचबादरायणः होरादयोप्येवंबलयुक्तान्यानिराशितुल्यानिवर्षाणिसंप्रयच्छत्यनुपाताच्चांशका

किंत्वत्रभांशप्रतिमंददातिवीर्यान्विताराशिसमंचहोरा क्रूरोदयेचापचयःसनात्रकार्यंचनाब्दैःप्रथमोपदिष्टैः

१२ दिफलम् एतच्चाचार्यवराहमिहिरेणस्वल्पजातके विनष्टेवाभिहितम् क्रूरोदयइति मयपवनादिमतायुर्दायेक्रूरोदयेक्रूरेलग्न गतेसान्द्रोंदितोपितवांशहतात्समस्तादितिन्यायेनयदायुषोपचयःक्रियते तदत्रास्मिन्सत्यमतायुर्दायेनकर्तव्यम् अन्यत्सर्वंकर्तव्यम् कार्यंच- नाब्दैरिति प्रथमोपदिष्टैः पूर्वकथितैरब्दैः नवतिथिविषयेतियेशब्दायवनबादरायणाचार्यमतेनपठिता जीवशर्ममतेनचग्रहदायंपरमायुषः स्वरांशमिति तैरब्दैस्त्रैराशिकमुक्तंतदिहनसंभवति यथादित्यस्यद्वादशकानामंशकानामेकोनविंशत्यब्दाभवंति तदेकस्मिन्नंशकेकिमि तिसत्यायुर्दायेनकर्तव्यम् १२ अथमयादिमतमुपन्यस्यजीवशर्ममतंचोपन्यस्यसत्यमतस्यैवांगीकरणमिदंवज्रयाह सत्योपदेशइति- अत्रास्मिन्मतत्रयेसत्योपदेशोवरंश्रेष्ठइत्यर्थः किंतुतदप्यन्येबहुवर्गिणाभिः बह्वीभिः गुणनाभिरयोग्यंकुर्वंतिविनाशयंति कास्ताःगुणनाः स्वतुंगवक्रोपगतेत्रिसंगुणमित्यादिकाः तत्रयदिस्वगृहेग्रहोभवतितदाद्विगुणमायुःकुर्वंति सएवस्वगृहांशकेयदिभवतितदाभूयोपिद्विगुणंकु- ४३
र्वंति सएवस्वद्रेष्काणेयदाभवतितदाभूयोपिद्विगुणंवर्गोत्तमांशेसएववक्रीयदिभवतितदाभूयस्त्रिगुणंकुर्वंतिसएवस्वोच्चस्थोभवतितदाभूयोपि

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्रिगुणंकुर्वंति एवमनवस्था अनेनानवस्थाप्रसंगेन सत्योक्तमप्यायुर्दायमयुक्तंबहुवर्गणाभिः कुर्वंति तथाचमयः वर्गोत्तमेस्वराशौद्रेष्काणेस्वे नवांशकेद्विगुणं वक्रोच्चगतेत्रिगुणंद्विगुणंकार्यंयथासंख्यं तथाचसारावल्याम् बहुताडनसंप्राप्तोयांकुरोत्येकवर्गिणास् वराहमिहिराचार्यः सानदृष्टाचिरंतनैरिति एतदुक्तम् तदत्रकिंकार्यमित्याह आचार्यकत्वंतुबहुघ्ननायामिति एतदाचार्यकत्वमत्रागमः बहुघ्नतायांप्राप्तायामे कंतुयद्भूरिबहुतरंगुणनंतदेवकार्यमिति बहुगुणनाप्राप्तास्वैकैवक्रियतेइति बहुवारंयत्रद्विगुणंप्राप्तंतत्रसकृदेवद्विगुणमायुः कर्तव्यम् यत्रद्वि गुणत्वंत्रिगुणत्वंचप्राप्तंतत्रसकृदेवत्रिगुणंकर्तव्यम् यत्रवारद्वयंत्रिगुणत्वंप्राप्तंतत्रसकृदेवत्रिगुणंकर्तव्यम् येकंतुयद्भूरितदेवकार्यमितिवच नात् स्वल्पजातकेप्युक्तमाचार्येण वर्गोत्तमेस्वराशौस्वद्रेष्काणे स्वनवांशकेस्वकेसकृत्द्विगुणम् वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वेसकृत्त्रिगुणमि ति चक्रपातंवर्जयित्वाबहुवर्गणान्यायेनैतदेवकर्म शत्रुक्षेत्रस्थोनीचस्थश्चयदाग्रहोभवति अस्तंगतोवातदासकृदेवार्द्धापहानिःकार्या नीचे तोर्द्धक्तसतीत्यत्रापिजनुवर्तनीयम् उक्तंचस्वल्पजातके शत्रुक्षेत्रेत्र्यंशंनीचेर्द्धंसूर्यलुप्तकिरणाश्चक्षपयंतिस्वादायान्मासंयातोरविजशुक्राविति

सत्योपदेशोवरमत्रकिंतुकुर्वंत्ययोग्यंबहुवर्गणाभिः आचार्यकत्वंचबहुघ्नतायामेकंतुयद्भूरितदेवकार्यम् १३

एवंकृतस्य सत्याचार्यमतस्यस्पष्टताभवतीत्याचार्यस्यमतं यत्रापिहानिः प्राप्तागुणनाचप्राप्तातत्रसकृदेवापहानिंकृत्वासकृदपिगुणनाकार्या किं त्वपहानौकर्तव्यायांचक्रपातापहानिंकृत्वाततः शत्रुक्षेत्रस्थस्यापहानिः सकृदेवकर्तव्या ततः सकृदेवगुणनाकार्या अत्रचभगवान्गार्गिः राशितुल्यांशसंख्यानिग्रहोब्दानिप्रयच्छति लग्नश्चसबलोन्यानिभुक्तराशिसमानितु मासाद्यानयनंकार्यंमनुपातादतःपरं सर्वार्द्धत्रिच तुर्थांशान्वामपंचचतुःसमिन् हरंतिपापाः स्वादायात्तदर्धमितरेग्रहाः व्ययाच्चक्रापहानिस्तकथितेयंतथाध्रुवं एकस्त्वेकर्क्षगेष्वेवकरोतिबल वान्ग्रहः शत्रुक्षेत्रगतस्त्र्यंशंनीचेर्द्धंसूर्यगस्तथा हंतिस्वाद्वयाद्विगावसितादित्यनंदनौ नचावनिसुतस्त्र्यंशंशत्रुक्षेत्रगतस्तथा ध्रुवापहानिः कर्तव्यानतोन्यासुबहुष्वपि प्राप्तास्वेकैववर्तव्यायास्यात्तासुमहत्तरा ततोपिगुणनाकार्याप्येकैवमहतीसकृत् द्वाभ्यांवर्गोत्तमेस्वांशेस्वद्रेष्काणे स्वकेगृहे त्रिभिर्वक्रगतस्याथस्वोच्चराशिगतस्यच ग्रहदायोभवत्येवंशोध्यक्षेपकृतस्त्वयः अत्रयद्यप्याचार्येणांशायुः प्रमाणीकृतम् तथा पिलग्नोयदिसम्यग्बलीभवतितदांशायुःकर्तव्यम् अथार्कोबलवांस्तदापिंडायुः तथाचमणित्थः विलग्नेतिबलोपेतेशुभदृष्टेंशसंभवः र

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वौ पिंडोद्भवं कुर्यादिति भूमाश्रिरंनना: तथाचसारावल्याम् अंशोद्भवंविलग्नासिंद्ध्यं भानोर्निसर्गजं चंद्रादिति अन्येप्येवमाहुः यथांशायुः पिं
डायुर्षादिअपिकार्ये द्वाभ्यामपिदशांतर्दशाविभागपरिकल्पनाकार्या तत्रयदल्पं तस्यायांतिमंतर्दशासैवयद्यपिकस्यतत्कालं वर्तते तदाधिक
मायुर्जीवति शत्रुदशाचेत्तदातत्रैवमरणंमित्रदशाचेत्तदापिजीवति मध्यमदशाचेत्तदा पीडाभवतितनोपिजीवति अस्माकंसत्याचार्यमभि
मतमिति १३ अथयस्मिन्योगेजातस्यायुः प्रमाणंनज्ञायतेतद्योगज्ञानंशुषितायथाहु गुरुरिति कुलीरलग्नेकर्कटोदयेगुरुशशिसहितेजी
वचंद्रयुक्तेतथाशशितनयेबुधेभृगुजेचशुक्रेकेंद्रयातेकटकगतेशेषैः परिशिष्टैः रविभौमसौरैः भवरिपुसहजोपगतैः भवस्थानमेकादशंरि
पुस्थानंषष्ठंसहजस्थानंतृतीयं एतेषुभवरिपुसहजेषुउपगतैः स्थितैः इहास्मिन्योगेजातस्यायुःक्रमाद्धिनागणितकर्मांतरेणापिविनामितं-
अपरिमितायुः स्यादेवेत् एतदुक्तंभवति यदाकर्कटलग्नंभवतितत्रैवचंद्रजीवौव्यवस्थितौभवतः बुधशुक्रौसहितौपृथक्स्थौवालग्नचतुर्थ
सप्तमदशमस्थानानामन्यतमेयथासंभवंभवतः परिशेषाः आदित्यांगारकशनैश्चराः पृथक्सहितावायथासंभवमेकादशषष्ठतृतीयगाः

गुरुशशिसहितेकुलीरलग्नेशशितनयेभृगुजेचकेंद्रयाते भवरिपुसहजोपगैश्चशेषैरमितमिहायु
रनुक्रमाद्धिनास्यात् १४ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौआयुर्दायाध्यायः सप्त
मः ७ भवंतितदा ईदृग्योगेयोजातः तस्यामितप्रमाणमायुर्भवति अनुक्रमाद्गणितानीतंविनैवअयमर्थः एवंविधेयोगेदृष्टेआयुर्द
यगणनानकर्तव्या यस्मात्तस्यासंभवइति अतोन्यथाजातस्ययथागतेनायुषावश्यमेवभवितव्यम् नाकः पिंडस्यार्वाक्तस्यमृत्युर्भवति नचायुः
पिंडमतिक्रम्यते नजीवितव्यमिति यस्मिन्योगेजातस्यानाचारस्यैवापकर्षोध्वंसोभवतिइति तथाचस्मृत्युक्तम् पारदारनापध्यंतइत्येवमादिकैर्दो
षैर्नजीवति एतद्योगेजातस्यायुर्वेदोक्तैर्विधिसंविहितैः रसायनैः प्रयोगैर्यथाभिहितैर्दीर्घमायुरवाप्नोतीति १४ इतिश्रीभट्टोत्पलविरचिता-
यांबृहज्जातकविवृतौआयुर्दायाध्यायःसप्तमः ७ अथातोदशांतर्दशाध्यायोव्याख्यायते परिज्ञातसमस्तायुषः पुरुषस्यजीवि
ताभ्यंतरेस्थितयोः सुखदुःखयोः परिच्छेदः क्रियते तत्रचशोध्यक्षेपविशुद्धमायुर्यावक्ष्यमाणंयेनग्रहेणदत्तंतावक्ष्यमाणेवतस्यसंबंधिनीद
शाभवति तत्रदशाक्रमोनज्ञायतेतज्ज्ञानंमालिन्याह उदयोलग्नंतनुः रविरादित्यआत्मा शशांकश्चंद्रोमनः एषामुदयरविशशांकानांमध्या ४४

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यः प्राणी बलवान् तद्बलवशात्तस्य संबंधिनी प्रथमा दशा भवति प्राधान्याद्देहवतां तथा च यवनेश्वरः निशाकरादित्यविलग्नमध्ये तत्कालयोगादधिकं बलं यः बिभर्ति तस्यादिदशेष्यते सा शेषास्ततः शेषबलक्रमेणेति उदयश्च रविश्च शशांकश्च उदयरविशशांकाः उदयरविशशांकानां प्राणी उदयरविशशांकप्राणी उदयरविशशांकप्राणी च केंद्रादिसंस्थाश्च उदयरविशशांकप्राणिकेंद्रादिसंस्थाः एवमेषां मध्यादाद्येन प्रथमादशा दत्ता तस्यैव केंद्रादिसंस्थाः केंद्रपणफरापोक्लिमेषु स्थिता ग्रहाः वीर्यापचयक्रमेण दशा दद्युः एवं लग्नार्कशशांकानां मध्यादेकस्य बलवतो दशा आदौ परिकल्प्या ततस्तस्य केंद्रस्थास्तेषां दशाः परिकल्प्याः तैः केंद्रस्थैः प्रथमे वयसि फलं दत्तं भवति यदुक्तम् प्रथमवयसि मध्येंत्येचदद्युः फलानीति तथा च यवनेश्वरः पूर्वं तु केंद्रोपगताः फलंति मध्ये वयः पाणफरं निविष्टाः आपोक्लिमस्थाः फलदा वयोंत्येय यथाबलं स्वं समुपेति पूर्वम् अथ यदि केंद्रस्था ग्रहाः न भवंति तदा कः प्रथमे वयसि फलं प्रयच्छतीत्याह नहि न फलविपाक इत्यादि केंद्रस्थाद्यभावे केंद्रस्थानां ग्रहाणामभावे असंभवे सति प्रथमे वयसि यः फलविपाकः स न हि न यतो ह्यौ नयौ प्रकृत्यर्थं गमयतः पणफरस्थानामप्यभावे मध्ये वयसि फलविपाको न

उदयरविशशांकप्राणिकेंद्रादिसंस्थाः प्रथममवयसिमध्येंत्येचदद्युः फलानि नहि न फलविपाकः केंद्रसंस्थाद्यभावे भ
वति हि फलपंक्तिः पूर्वमापोक्लिमेपि १

हि न एतदुक्तं भवति यदा केंद्रस्था ग्रहा न भवंति तदा पणफरस्थाः पूर्वं फलं प्रयच्छंति तत आपोक्लिमस्थाः अथ केंद्रस्थाः पणफरस्थाश्च न भवंति तदा सर्वस्मिन्नेव वयसि आपोक्लिमस्थाः फलं प्रयच्छंति यत उक्तं भवति हि फलपंक्तिः पूर्वमापोक्लिमेपि इति एवमापोक्लिमस्थानामभावे प्रथमं केंद्रस्थाः फलं प्रयच्छंति ततः पणफरस्थाः आपोक्लिमस्था न भवंति न च पणफरस्थास्तदा सर्वस्मिन्नेव वयसि केंद्रस्थाः फलं प्रयच्छंति एतदुक्तं भवति लग्नार्कशशांकानां यो बलवांस्तद्दशा प्रथमा प्रथमां दशां कल्पयित्वा ततः केंद्रगानां सर्वेषां कल्पनीया तेषां परिकल्प्य पणफरस्थानां परिकल्पनीया ततः परमापोक्लिमस्थानां केंद्रस्थानामभावे प्रथमं दशापतेरनंतरं पणफरस्थानां कल्पनीया ततः आपोक्लिमस्थानां केंद्रस्थानामभावे पणफरस्थानामप्यभावे आपोक्लिमस्थानामेव कल्पनीयाः अथ केंद्रस्था भवंति पणफरस्था न भवंति आपोक्लिमस्था एव भवंति तदा केंद्रस्थानां कल्पयित्वा आपोक्लिमस्थानामेव कल्पनीयाः अथ केंद्रस्था एव केवलं भवंति तदा तेषामेव कल्पनीयाः अथ पणफरस्था भवंति तदा पणफरस्थानामेव कल्पनीयाः अथापोक्लिमस्था भवंति तदा तेषामेव कल्पनीयाः तथा च स्वल्पजा-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नकेउक्तम् लग्नार्कशशांकानांयोबलवांस्तद्दशाभवेत्प्रथमा तत्केंद्रपणफरापोक्लिमोपगानांबलाच्छेषाः १ अथदशाकालप्रमाणंकेंद्र
स्थानानामपिदशाक्रमज्ञानमिंद्रवज्रयाह आयुःकृतमिति शोध्यक्षेपविशुद्धमायुर्यावद्वर्षप्रमाणंयेनग्रहेणदत्तंतस्यग्रहस्यसंबंधिनीदशा
कल्प्यापरिकल्पनीया तत्रलग्नार्कशशांकानांयोबलवांस्तद्दशाभवेत्प्रथमेतिन्यायेनतद्दशांप्रथमंकल्पयित्वाततस्तत्केंद्रगानांमध्यात्सेवद
शाप्रबलस्यापिबलस्यपूर्वंप्रथमंकल्प्याअनंतरंतस्मादूनबलस्यएवंक्रमेणयथायथाऊनबलाभवंतितथातथापश्चात्तदीयदशाःकल्पनी
याः एवंकेंद्रस्थानांदशाः परिकल्प्याततः पणफरस्थानांअनेनैवक्रमेणपरिकल्प्याः ततःआपोक्लिमस्थानांअनेनैवक्रमेणेति साम्येबहूनामि
ति केंद्रस्थानांबहूनांग्रहाणांबलसाम्येसतिबहुवर्षदस्यबहूनिवर्षाणियेनदत्तानितस्यप्रथमंदशापरिकल्प्यनन्वत्रकथंग्रहाणांबलसाम्यंभवति
यदिद्वावपिकेंद्रत्रिकोणोच्चगतौभवतस्तदानैसर्गिकेनबलेनयोधिकःसएवबलीस्यात् किंतुस्थानदिक्चेष्टाकालबलग्रहदर्शनादिबलानिया
वद्गणितविधिनैकीक्रियंते तावद्बलसाम्यंभवति ग्रहाणांयथासामान्येनोदाहरणम् यदिशनैश्चरोबलत्रयेणसंयुक्तोभवति भौमोबलद्वये

आयुःकृतंयेनहियत्तदेवकल्प्यादशासाप्रबलस्यपूर्वम् साम्येबहूनांबहुवर्षदस्यतेषांचसाम्येप्रथमोदितस्य २

ततदातत्रभौमस्यनिसर्गबलवत्त्वात्बलसाम्यंभवत्येवं सर्वेषामपिज्ञेयं तेषांचसाम्येप्रथमोदितस्येति तेषांवर्षाणांसाम्येवर्षदानतुल्येपिप्रथमो
दितस्यदशापरिकल्प्याप्रथममादावर्कमंडलाद्यउदितउक्तस्तस्ययदाबलसाम्यंनभवतितदाबहुवर्षदेपिग्रहेस्थितेतथाप्रथमोदितेपिस्थितेब
लाधिकस्यैवपूर्वंदशापरिकल्प्यातेषांचबलसाम्येप्रथमोदितस्येत्यत्रद्विविधउदयः मत्यहंचक्रभ्रमवशादेकः आदित्यविप्रकर्षेणापरः तत्रेहादित्यविप्रक
र्षेणउदयोगणितस्कंधोक्तकालांशकवशाज्ज्ञेयः अत्रचभागवान्गार्गिः बलीलग्नेंदुसूर्याणांदशामाद्यांप्रयच्छति तस्मात्ततःप्रयच्छंतिकेंद्रादिस्थाः
क्रमेणतु तत्रापिबलिनः पूर्वंतत्साम्येबहुदायकाः तत्साम्येपिप्रयच्छंतियेपूर्वंरविविच्युताः २ एवंदशाव्यवस्थायांजातायामंतर्दशापाकग्रहज्ञा
नंवसंततिलकेनाह एकर्क्षगोर्द्धमिति दशापतिनासहैकर्क्षगोग्रहः एकस्मिन्राशौव्यवस्थितः दशापतिः दत्तांतर्दशाकालस्ययदर्द्धंतदपहृत्यस्वैरात्मी
यैर्दशागुणैःपरिपाचयति त्र्यंशमिति त्र्यंशंत्रिकोणगृहगः दशापतेस्त्रिकोणगृहगोनवपंचमस्थानयोरन्यतमस्थितोदशापतिर्दत्तांतर्दशाकाला ४५
त्र्यंशंतृतीयभागमपहृत्यस्वैरात्मीयैः दशागुणैः परिपाचयति स्मरगःस्मरांशमिति दशापतेः स्मरगः सप्तमस्थानस्थः दशापतिः दत्तांतर्दशा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कालात्स्वरांशंसप्तमभागमपहृत्यस्वैर्दशागुणैःपरिपाचयति पादंफलस्यचतुरस्रगनः दशापतेः चतुरस्रगोष्टमचतुर्थस्थानस्थोदशापतिः दत्तां
तर्दशाकालात्पादंचतुर्थभागमपहृत्यस्वैर्दशागुणैः परिपाचयति सहोराः होरालग्नंतयासहिताःपरस्परमन्योन्यमनेनप्रकारेणव्यवस्थिताः स्वैःस्वै
र्दशागुणैःपरिपाचयंति एतदुक्तंभवति यथादशापतेः सकाशादेकर्क्षादिस्थोग्रहोयथास्वंपठितमंशंपरिपाचयति तथालग्नमपिपाचयति अ-
त्रदशापतेः प्रथममंशपरिकल्पनांकृत्वापश्चादेकर्क्षादिस्थितानांकर्तव्याः यस्माद्दशापतेर्योभागआगच्छतितदनुसारेणान्येषांयोभागाः परिशे
षाणांभवंति अथैकस्मिन्स्थानेयदाबहवोग्रहाभवंतितदानेषांमध्ये योबलवान्सएवैकः परिपाचयतिनान्ये कथमेतदवगम्यते उच्यते एकव
चननिर्देशात् एकर्क्षगोर्धमपहृत्यददातितुसप्तमित्याद्येकवचनात् नकेवलंमिहिराचार्येणैकवचननिर्देशः कृतोयावस्वल्पजातकेपितथाचोक्तम्
एकर्क्षगोर्द्धंत्र्यंशंत्रिकोणयोः सप्तमेतुसप्तांशंचतुरस्रयोस्तुपादंपाचयतिगतोग्रहः स्वगुणैरितिगर्गादीनामप्येकवचननिर्देशोस्ति तथाचभगवान्

एकर्क्षगोर्द्धमपहृत्यददातितुस्त्र्यंशंत्रिकोणगृहगःस्मरगःस्वरांशं पादंफलस्यचतुरस्रगनःसहोरास्त्वेवं
परस्परगताःपरिपाचयंति ३ स्थानान्यथैतानिसवर्णयित्वासवर्णान्यधश्छेदविवर्जितानि दशाब्दपिंडेगुण
कायथांशंछेदस्तदैक्येनदशाप्रभेदः ४ गार्गिः एकर्क्षसंस्थितश्चार्द्धंत्रिभागंतुत्रिकोणगः सप्तमस्थःस्वरांशंतुपादंतुचतुरस्रगः
लग्नेनसहिताः सर्वेह्यन्योन्यंफलदायकाः यवनेश्वरश्चाप्येवम् कालोर्धभागेकग्रहाश्रितस्यतदर्धभागंलभतेचतुर्थे त्रिभागभागीचत्रिकोणसंस्थ-
स्तदर्धभाक्स्याच्चपृथक्त्रिकोणे स्यात्सप्तमेसप्तमभागभागीस्थितोग्रहश्चारवशाद्ग्रहस्य एवंसर्वत्रैकवचननिर्देशः तस्माद्देवंज्ञायते यतएक-
एवांशहारीभवतिनसर्वइति तथाचसत्यः अर्धंतृतीयमर्धत्तियार्द्धंस्वोच्चसप्तमंभागं एकर्क्षनवपंचमचतुर्थनिधनाद्यसप्तानां दद्युर्ग्रहाग्रहाणां
स्वदशास्वदर्शाख्यानां फलकालान्मिश्रविविधंक्रमेणभेद्याश्चतेप्येवम् एकर्क्षगेषुबलवान्भागहारोमित्रतोरिपोर्वापि मित्रंचपुष्टफलंत-
स्मिन्कालेरिपुर्नैवं तथाचयमः एकर्क्षोपगतानांयोभवतिबलाधिकोविशेषेण एकःसएवहर्त्तानान्येतत्रस्थिताविहगाइति लग्नेपियत्रांशाप
हारित्वंप्राप्तस्तत्रचलग्नेयदाग्रहःस्थितोभवति तदालग्नग्रहयोर्योबलवान्सएवैकःपठितमंशमपहरति नेतरइति अन्येसर्वेषामेकादिराशि
गानामंतर्दशाभागमिच्छंति अन्येपुनः एकमेवभागंगृहीत्वाभागस्यैकर्क्षगानांभागीकृत्यतद्भागमिच्छंति ३ अथदशापरिकल्पनाज्ञानमिदंव

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथाह स्थानानीति अर्द्धादिकाभागाः स्थानशब्देनोच्यंते तेषामर्द्धादिकानांभागानांसवर्णनाकार्या सवर्णनासदृश छेदनाछेदनामादृश्यमुत्पाद्य
तनरूपानिसर्वाणिस्थानानि अधः छेदैः विवर्जितानिकार्याणि छेदानपास्य इत्यर्थः उपरिस्थितारा शयोयथासंभवंप्रत्यंशंगुणकाराभवंति छेदस्तदैक्येन
तेषांराशीनामैक्येनसंयोगेनछेदोभागहारोभवति कस्मिन्गुणकाराभागहाराइत्याह दशाब्दपिंडेदशावर्षसमूहेतेनेनदुक्तंभवति दशाब्दान्पृथक्
पृथक्गुणकारैः संगुण्यछेदेनविभज्यावाप्तमंवर्षाद्यंतर्दशाभवति तयथोदाहरणम् दशापतिनैवकेवलंकश्चिद्ग्रहः स्थितः अन्यस्थानेषुनकश्चित्स्थित
स्तदात्सएवापहारीतत्रदशापतेःरूपस्यैकस्यैवाधोरूपमेकन्यसेत् एवमर्द्धहारस्यरूपस्याधोरूपद्वयंन्यासः १।१
 १।२ अत्रपरस्परछेदगुणावेतोराशी
कर्तव्यौकृतौजातौ २।१
 २।१ एतौसमछेदौमूतौछेदहीनौ १।२ एतौगुणकारौअनयोर्योगः ३ एषभागहारः अत्रदशापतिदत्तायुर्दायः ३।०।०
एतद्द्वाभ्यांसंगुण्यत्रिभिर्विभज्यावाप्तंफलम् २ इयंमूलदशापतेरंतर्दशा अथपुनरेवमूलदशापतिवर्षाणि २ व॰मा॰दि॰घ॰ एकेनसंगुण्यत्रिभिर्वि
भज्यावाप्तंफलंवर्षादि १ व॰ मा॰ दि॰ घ॰ इयंदशापतिनासहैकराशव्यवस्थितस्यांतर्द्दशा एवंमूलदशापते दत्तांतर्दशाकालएकराशिगतग्रहेणार्द्ध
पाचितोभवति अस्यांतर्दशाकालद्वयस्ययोगोवर्षादिः ३।०।०।० जातासैवमूलदशेति अथदशापतेः नवपंचमस्थानयोरेकस्मिन्स्थानेकश्चिद्ग्र
हःस्थितोभवति नद्वितीयेनचदशापतिनासहनचतुरस्रयोः नचसप्तमेतदान्यासः १।१
 १।३ एतौपरस्परछेदहतौ ३।१
 ३।१ छेदेनहीनौ ३।१ एतौ
गुणकारौएकीकृतौ ४ एषभागहारः मूलदशापतेःदायः ४।०।०।० अस्यत्रिगुणस्यचतुर्भिर्भागमपहृत्यावाप्तं ३।०।०।० अयंमूलदशापते
रंतर्दशाकालः अथमूलदशापतिदायस्यास्य ४।०।०।० एकगुणस्यचतुर्भिर्भागमपहृत्यावाप्तं १।०।०।० एषात्रिकोणस्थस्यांतर्दशेति एवं
मूलदशापतिदत्तांतर्दशाकालंत्रिकोणस्थेनग्रहेणात्रिभागमपहृत्यपाचितंभवति अस्यांतर्दशाकालद्वयस्ययोगःजातः ४।०।०।० सैवमूल
दशेति अथदशापतेश्चतुर्थाष्टमयोरेकस्मिन्स्थानेकश्चिद्ग्रहोभवति नद्वितीयेनचदशापतिनासहनत्रिकोणयोःनसप्तमे तदान्यासः १।१
 १।४
परस्परछेदहतौ ४।१
 ४।१ छेदहीनौ ४।१ एतौगुणकारौएकीकृतौ ५ एषभागहारः मूलदशापतेः दायः ५।०।०।०अस्यचतुर्गुण्यस्य २०।०।०।०
पंचभिर्भागमपहृत्यावाप्तं ४,०।०।० अयंमूलदशापतेरंतर्दशाकालः अथमूलदशापतिदायस्यास्य ५।०।०।० एकगुणस्यपंचभिर्भागमपहृ
त्यावाप्तं १।०।०।० एषाचतुरस्रस्थस्यांतर्दशेति एवंमूलदशापतिदत्तांतर्दशाकालाच्चतु रस्रस्थेनपादमपहृतंभवति अस्यांतर्दशाकालद्वय
स्ययोगः ५,०।०।० जातासैवमूलदशेति अथदशापतेः सप्तमेस्थानेकश्चिद्ग्रहोभवति नदशापतिनासहनत्रिकोणेनचतुरस्रयोस्तदान्यासः

४५

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

१।१ परस्परछेदहतावेतौ ७।१ छेदहीनौ ७।१ एतौगुणकारौएकीकृतौ ८ एषभागहारः दशापतेःदायः ८।०।०।० अस्यसप्तगुणस्या ५६ ष्टभिः
भागमपहृत्यावाप्तंवर्षादि: ७।०।०।० इयंमूलदशापतेरन्तर्दशापुनरपिमूलदशापतेः दायः ८।०।०।० अस्यैकगुणस्याष्टभिः भागमपहृत्यावाप्तं
१।०।०।० इयंमूलदशापतेः सप्तमस्थानस्थस्यांतर्दशा एवंमूलदशापत्यंतर्दशाकालात्सप्तमो भागः सप्तमस्थेनग्रहेणपाचितोभवति अस्यांत
र्दशाकालद्वयस्ययोगः ८।०।०।० जातासैवमूलदशेति एवमेकस्मिन्दशाविकल्पाः अत्रादौमूलदशापतेरंतर्दशाभवति तदनंतरमंशहरस्य
अथदशापतिनासहैकस्मिन्राशौकश्चिद्ग्रहोभवेत्सपरश्चनवमपंचमयोर्मध्यादेकस्मिन्भवतिनद्वितीयेनान्येषुस्थानेषुनचतुरस्रयोः नसप्तमेन
दान्यासः १।१।१ एतेराशयः परस्परछेदहताजाताः ६।२।१ छेदहीनाः ६।३।२ एतेगुणकाराः एकीकृतः ११ एषभागहारः अथदशाप
दायः ११।०।०।० अस्यषड्गुणस्यैकादशभिःभागमपहृत्यावाप्तम् ६।०।०।० एवंमूलदशापतेरंतर्दशा पुनरपिमूलदशापतिदायस्यास्य ११।०
।० त्रिगुणस्यैकादशभिः भागमपहृत्यावाप्तं ३।०।०।० इयमर्द्धपाचकस्यांतर्दशापुनरपिमूलदशापतिदायस्यास्य ११।०।०।० द्विगुणस्यैका
दशभिः भागमपहृत्यावाप्तं २।०।०।० इयंत्रिकोणावस्थितस्यांतर्दशाअत्रदशापतेः यदर्द्धंतदेकगृहावस्थितः पाचयतित्रिभागंचत्रिकोण
गः अंतर्दशात्रयस्यास्ययोगः ११।०।०।० जातासैवमूलदशेति अथदशापतिनासहैकस्मिन्सशोकश्चिद्भवत्सपरश्चतुरस्रयोः मध्यादेकस्मिन्द्विती
येनचान्येषुस्थानेषुनत्रिकोणयोः नसप्तमेतदान्यासः १।१।१ एतेपरस्परछेदहताजाताः ८।४।२ छेदहीनाः ८।४।२ एतेगुणकाराः एकीकृताः १४
एषभागहारः अथदशापतिदायस्यास्य १४।०।०।० अष्टगुणस्यचतुर्दशभिभागमपहृत्यावाप्तम् ८।०।०।० इयंमूलदशापतेरंदर्दशापुनरपिमूलद
शापतिदायस्यास्य १४।०।०।० चतुर्गुणस्यचतुर्दशभिः भागमपहृत्यावाप्तं ४।०।०।० इयमर्द्धपाचकस्यांतर्दशा पुनरपिमूलदशापतिदायस्यास्य
१४।०।०।० द्विगुणस्यचतुर्दशभिः भागमपहृत्यावाप्तं २।०।०।० इयंचतुर्थभागपाचकस्यांतर्दशा अत्रदशापतेः यदर्द्धंतदेकगृहावस्थितः पाचयति च
तुर्थभागंचतुरस्रगतः अंतर्दशात्रयस्यास्ययोगः १४।०।०।० जातासैवमूलदशेति अथयत्रदशापतिनासहैकस्मिन्राशौकश्चिद्भवत्सपरश्च सप्तमे
नान्येषुस्थानेषुनदान्यासः १।१।१ एतेपरस्परछेदहताजाताः १४।७।२ छेदहीनाः १४।७।२ एतेगुणकाराः एकीकृताः २३ एषभागहारः
अथदशापतिदायस्यास्य २३।०।०।० चतुर्दशगुणस्यत्रयोविंशत्याभागमपहृत्यावाप्तम् १४।०।०।० इयंमूलदशापतेरंतर्दशा पुनरपिमूलदशा
पतिदायस्यास्य २३।०।०।० सप्तगुणस्यत्रयोविंशत्याभागमपहृत्यावाप्तम् ७।०।०।० इयंपाचकस्यैनसहावस्थस्यांतर्दशापुनरपिमूलदशापतिदाय

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

बृ.टी. ४७ स्यास्य २३।०।०।० द्विगुणस्यत्रयोविंशत्याभागमपहृत्यावाप्तं २।०।०।० इयंससमभागपाचकस्यांतर्दशा अस्यांतर्दशात्रयस्ययोगःजातः २३। द.द. ८
०।०।० सैवमूलदशेति अथदशापतेस्त्रिकोणयोः अपिग्रहोव्यवस्थितः नान्येषुस्थानेषुनदान्यासः [१।१।१ / १।३।५] एतेराशयः परस्परछेदहताजाता
[१५।५।३ / १५।१५।१५] छेदहीनाः १५।५।३ एतेगुणकाराः एकीकृताः १५ एषभागहारः दशापतिदायस्यास्य ५।०।०।० नवगुणस्यपंचदश
भिः भागमपहृत्यावाप्तं ३।०।०।० इयंमूलदशापतेरंतर्दशा पुनरपिमूलदशापतिदायस्यास्य ५।०।०।० त्रिगुणस्य १५।०।०।०
पंचदशभिः भागमपहृत्यावाप्तम् १।०।०।० इयंत्रिकोणस्यस्यांतर्दशाद्वितीयस्यैवं अस्यांतर्दशात्रयस्ययोगः ५।०।०।० जातासैवमूलदशेति
अथदशापतेस्त्रिकोणयोः मध्यादेकस्मिन् कश्चिद्ग्रहोव्यवस्थितः चतुरस्रयोः मध्यादेकस्मिन्नपिनान्येषुस्थानेषुनदान्यासः [१।१।१ / १।३।४] एतेपर
स्परछेदहताजाताः [१२।४।३ / १२।१२।१२] छेदहीनाः १२।४।३ एतेगुणकाराः एकीकृताः १९ एषभागहारः अथदशापतिदायस्यास्य १९
०।०।० द्वादशगुणस्यै कोनविंशत्याभागमपहृत्यावाप्तं १२।०।०।० इयंमूलदशापतेरंतर्दशा पुनरपिदशापतिदायस्यास्य १९।०।०।०
चतुर्गुणस्यैकोनविंशत्याभागमपहृत्यावाप्तम् ४।०।०।० इयंत्रिकोणभागपाचकस्यांतर्दशापुनरपिदशापतिदायस्यास्य १९।०।०।० त्रिकोणस्यै-
कोनविंशत्याभागमपहृत्यावाप्तम् ३।०।०।० इयंचतुर्भागपाचकस्यांतर्दशाअस्यांतर्दशात्रयस्ययोगः १९।०।०।० जातासैवमूलदशेति अथयत्रद
शापतेस्त्रिकोणयोर्मध्यादेकस्मिंस्थानेकश्चिद्ग्रहोऽन्यः सप्तमेनदान्यासः [१।१।१ / १।३।७] एतेराशयः परस्परछेदहताजाता [२१।७।३ / २१।२१।२१] छेदहीनाः
२१।७।३ एतेगुणकाराः एकीकृताः ३१ एषभाहारः दशापतिदायस्यास्य ३१।०।०।० एकविंशत्यासंगुणितस्यै कत्रिंश
ताभागमपहृत्यावाप्तम् २१।०।०।० इयंमूलदशापतेरंतर्दशापुनरपिदशावर्षाणि ३१।०।०।० सप्तभिः संगुण्यैकत्रिंशताभागमपहृत्यावाप्तम् ७।
०।०।० इयंत्रिभागपाचकस्यांतर्दशापुनरपिदशावर्षाणि ३१।०।०।० त्रिभिः संगुण्यैकत्रिंशताभागमपहृत्यावाप्तम् ३।०।०।० इयंसप्तमभागपाच
कस्यांतर्दशा अस्यांतर्दशात्रयस्ययोगः ३१।०।०।० जातासैवमूलदशेति यत्रदशापतेः चतुरस्रयोः द्वयोरेवग्रहौस्थितौनान्यत्रतदान्यासः —
[१।१।१ / १।४।४] एतेराशयः परस्परछेदहताजाताः [१६।४।४ / १६।१६।१६] छेदहीनाः १६।४।४ एतेगुणकाराः एकीकृताः २४ एषभागहारः मूलदशापति
वर्षाण्येतानि १६।०।०।० षोडशभिः संगुण्य १६।०।०।० चतुर्विंशत्या २४ भागमपहृत्यावाप्तम् ४।०।०।० इयंमूल ४७
दशापतेरंतर्दशापुनरपिदशापतेः दायस्यास्य १६।०।०।० चतुर्गुणस्यचतुर्विंशत्याभागमपहृत्यावाप्तम् १।०।०।० इयंचतुर्थभागपाचकस्यां

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नर्दशा द्वितीयस्याप्येषैव अस्यांतर्दशात्रयस्ययोगः ६।०।०।० सैवमूलदशेति अथयत्रदशापतेश्चतुरस्त्रयोः मध्यादेकस्मिन्कश्चिद्ग्रहो भवति-
सप्तमेन्यस्तदान्यासः
१।१।१
१।४।७
एतेराशयः परस्परछेदहताजाताः
२८।७।४
२८।२८।२८
छेदहीनाः २८।७।४ एतेगुणकाराः एकीकृताः ३९
एषभागहारः अथमूलदशापतिवर्षाणि ३६।०।०।० एता न्यष्टाविंशत्यासंगुण्यैकोनचत्वारिंशताभागमपहृत्यावाप्तम्
२५।१०।४।३६ इयंमूलदशापतेरंतर्दशा पुनरपिदशावर्षाणि ३६ सप्तभिः संगुण्यैकोनचत्वारिंशताभागमपहृत्यावाप्तम्
६।५।१५।८ इयंचतुर्भागपाचकस्यांतर्दशा पुनरपिदशावर्षाणि ३६ चतुर्भिः संगुण्यैकोनचत्वारिंशताभागमपहृत्यावाप्तम् ३।८।९।२५
इयंसप्तमभागपाचकस्यांतर्दशा अस्यांतर्दशात्रयस्ययोगः ३६।०।०।० जातासैवमूलदशेति एवंत्रिविकल्पाः अथयत्रदशापतिनासहैकरा
शौकश्चिद्व्यवस्थितोद्वयोरपित्रिकोणयोः तदान्यासः
१।१।१।१।१
१।२।३।३
एतेराशयः परस्परछेदहताजाताः
१८।९।६।६
१८।१८।१८।१८
छेदहीनाः १८।९।६।६ एतेगुणकाराः एकीकृताः ३९ एषभागहारः अथमूलदशापतिवर्षाणि १३।०।०।० अतः प्रागवदं
नर्दशान्यासः
६ ३ २ २
० ० ० ०
० ० ० ०
० ० ० ०
अस्यांतर्दशाचतुष्टयस्य योगः १३।०।०।० जाता सैवमूलदशेति अथयत्रदशापतिनासहैकराशौकश्चि
द्व्यवस्थितः
त्रिकोणयोः मध्यादेकस्मिन्कश्चिद्व्यवस्थितश्चतुरस्त्रयोर्मध्यादेकस्मिन्नेव नान्यत्रतदान्यासः—
१।१।१।१।१
१।२।३।४
एतेराशयः परस्परछेदहताजाताः
२४।१२।८।६
२४।२४।२४।२४
छेदहीनाः २४।१२।८।६ एतेगुणकाराः एकीकृताः ५० एषभागहारः मूलदशा ३६।०।०।० अतः प्रागवच्चतस्त्रोंतर्दशाः
१७।३।१०
४८।८।७।२०।२४।५।८।३।३६।४।३।२५।१२
अस्यांतर्दशाचतुष्टयस्ययोगः ३६।०।०।० जातासैवमूलदशेति अथदशापतिनासहैकस्मिन्राशौकश्चित् व्यवस्थितस्त्रिकोणयोः मध्यादेक-
स्मिन्नन्यः सप्तमेव्यवस्थितोनान्यत्रतदान्यासः
१।१ १।१
१।२ ३।७
एतेराशयः परस्परछेदहताजाताः
४२।२१।१४।६
४२।४२।४२।४२
छेदहीनाः ४२।२१।१४।६ एतेगुणकाराः एकीकृताः ८३ एषभागहारः मूलदशावर्षाणि १६।०।०।० अतः प्रागवच्चतस्त्रोंतर्दशाः आनीताः
८ ७ २ २
० ० ० ०
० ० ० ०
० ० ० ०
अस्यांतर्दशाचतुष्टयस्ययोगः १६।०।०।० जातासैवमूलदशेति अथदशापतिनासहैकस्मिन्राशौकश्चिद्व्यवस्थितः अन्यौ द्वयोश्चतुरस्त्रयोस्तत्रन्यासः
१।१।१।१।१
१।२।४।४
एतेपरस्परछेदहताः
३२।१६।८।८
३२।३२।३२।३२
छेदहीनाः ३२।१६।८।८

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एतेगुणकारा एकीकृता. ६४ एषभागहारः मूलदशा ३६।०।०।० अतः भागवच्चतस्त्रोंतर्दशाः

| | | | |
|---|---|---|---|
| १८ | ९ | ४ | ४ |
| ० | ० | ६ | ६ |
| ० | ० | | |

अस्यांतर्दशाचतुष्टयस्ययोगः ३६।०।०।० जातासैवमूलदशेति अथयत्रदशाधिपतिनासहैकस्मिन्राशौकश्चिद्ग्रहस्थितोन्यश्चतुरस्त्रयोः मध्यादेकस्मिन्नन्यः सप्तमेनदान्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | २ | ४ | ७ |

एतेपरस्परछेदहनाजाताः

| | |
|---|---|
| ५६।२८। | १४।८ |
| ५६।२६। | ५६।५६ |

छेदहीनाः ५६।२८।१४।८ एतेगुणकाराः एकीकृताः १०६ एषभागहारः मूलदशा ३६।०।०।० अतः भागवच्चतस्त्रोंतर्दशाः १।१।६।

| |
|---|
| ४८।१।६।३।२४।४।१।१।४२।२।८।१८।६ |

अस्यांतर्दशाचतुष्टयस्ययोगः जातासैवमूलदशेति ३६।०।०।० अथयत्रत्रिकोणयोर्द्वयोः कश्चिद्ग्रहः स्थितः चतुरस्त्रयोः मध्यादेकस्मिन्नन्तदान्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | ३ | २ | ४ |

[illegible]परस्परछेदहताजाताः

| | | | |
|---|---|---|---|
| ३६ | १२ | १२ | ९ |
| ३६ | ३६ | ३६ | ३६ |

छेदहीनाः ३६।१२।१२।९ एतेगुणकाराः एकीकृताः ६९ एषभागहारः मूलदशा २३।०।०।० अतः भागवच्चतस्त्रोंतर्दशाः

| |
|---|
| १२।०।०।०।४।०।०।०।४।०।०।०।३।०।०।०।० |

अस्यांतर्दशाचतुष्टयस्ययोगोनानः २३।०।०।० सैवमूलदशेति अथयत्रदशापतेस्त्रिकोणयोर्मध्यादेकस्मिन्स्थितः कश्चिद्द्वयोश्चतुरस्त्रयोश्चतदान्यासः

| |
|---|
| १।१।१।१ |
| १।३।४।४ |

एतेपरस्परछेदहताजाताः

| | | | |
|---|---|---|---|
| ४८ | १६ | १२ | १२ |
| ४८ | ४८ | ४८ | ४८ |

छेदहीनाः ४८।१६।१२।१२ एतेगुणकाराः एकीकृताः ८८ एषभागहारः मूलदशा २२।०।०।० अतः भागवच्चतस्त्रोंतर्दशाः

| |
|---|
| १२।०।०।०।४।०।०।०।३।०।०।०।३।०।०।० |

अस्यांतर्दशाचतुष्टयस्ययोगः जातासैव २२।०।०।० मूलदशेति अथयत्रदशापतेस्त्रिकोणयोर्मध्यादेकस्मिन्कश्चित्स्थितः चतुरस्त्रयोरप्येकस्मिन्सप्तमेचकश्चित्स्थितस्तदान्यासः

| |
|---|
| १।१।१।१ |
| १।३।४।७ |

एतेराशयः परस्परछेदहताजाताः

| |
|---|
| ८४।२८।२१।१२ |
| ८४।८४।८४।८४ |

छेदहीनाः ८४।२८।२१।१२ एतेगुणकाराः एकीकृताः १४५ एषभागहारः मूलदशा ३६।०।०।० अतः भागवच्चतस्त्रोंतर्दशाः

| | | | |
|---|---|---|---|
| २० | ६ | ५ | २॥ |
| १० | ११ | २ | ११ |
| ७ | १२ | १६ | २२ |
| ५१ | २८ | ५८ | ३३ |

अस्यांतर्दशाचतुष्टयस्ययोगः ३६।०।०।० जातासैवमूलदशेति अथयत्रदशापतेश्चतुरस्त्रयोः द्वयोरपिग्रहस्थितः सप्तमेचतदान्यासः

| | | | |
|---|---|---|---|
| १ | १ | १ | १ |
| १ | ४ | ७ | ४ |

एतेपरस्परछेदहताजाताः

| | | | |
|---|---|---|---|
| ११२ | २८ | २८ | १६ |
| ११२ | ११२ | ११२ | ११२ |

छेदहीनाः ११२।२८।२८।१६ एतेगुणकाराः एकीकृताः १८४ एषभागहारः मूलदशा ३६।०।०।० अतः भागवच्चतस्त्रोंतर्दशाः

| | | | |
|---|---|---|---|
| २१।१०।२८।४२ | ५।५।२२।११ | ५।५।२२।१० | ३।१।१६।५७ |



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अस्यांतर्दशाचतुष्टयस्ययोगः ३६।०।०।० जातासैवमूलदशेति एवंचतुर्विकल्पाः अथपंचविकल्पेषुन्यासादेवग्रहावस्थानंबोद्धव्यं न्यासः
१।१।१।१।१।१ छेदेनानेन २४ हताजाताः गुणकाराः २४।१२।८।८।६ भागहारः ५८ न्यासः १।१।१।१।१।१ छेदेनानेनगुणकाराः
१।२।३।३।४ ४२।२१।१४।१४।६ भागहारः ९७ न्यासः १।१।१।१।१।१ छेदेनानेन २४ १।२।३।३।४ गुणकाराः २४।१२।
८।६।६ भागहारः ५६ न्यासः १।१।१।१।१।१ छेदेनाने १।२।३।४।४ न ५६ गुणकाराः ५६।२८।१४।१४।८ भागहारः १२०
न्यासः १।१।१।१।१।१ छेदेना १।२।४।४।७ नेन ८४ गुणकाराः ८४।४२।२८।२१।१२ भागहारः १८७ न्यासः १।१।१।१।१।१
छेदेना १।२।३।४।७ नेन १४४ गुणकाराः १४४।४८।४८।३६।३६ भागहारः ३१२ न्यासः १।१।१।१।१।१ छेदे १।३।३।४।४
नानेन ८४ गुणकाराः ८४।२८।२८।२१।१२ भागहाराः १७३ एवंपंचविकल्पाः अथषड्विकल्पाः न्या १।३।३।४।७ सः १।१।१।१।१।१।१
छेदेनानेन २५२ गुणकाराः २५२।१२६।८४।८४।६३।३६ भागहारः ६४५ न्यासः छेदेनानेन १६८ गुणकाराः १६८ १।२।३।३।४।७
८४।५६।४२।४२।२४ भागहारः ४१६ न्यासः १।१।१।१।१।१।१ छेदेनानेन ९६ गुणकाराः ९६।४८।३२।३२।२४।२४ भाग
हारः २५६ न्यासः १।१।१।१।१।१।१ छेदेना १।२।३।३।४।४ नेन ८४ गुणकाराः ८४।२८।२८।२१।२१।१२ भागहारः १९४
इतिजाताः षड्वि १।३।३।४।४।७ कल्पाः श्चत्वारः अथसप्तविकल्पाः न्यासः १।१।१।१।१।१।१।१ छेदेनानेन १६८ गुणा
काराः १६८।८४।५६।५६।४२।४२।२४ भागहारः ४७२ एवंयावंतोदायहाराभ १।२।३।३।४।४।७ वंति तावदेवतत्कर्मउप
पद्यते यावंतोनभवंतितावत्कर्मनोपपद्यतइति एकविकल्पोनास्ति द्विविकल्पाश्चत्वारः ४ त्रिविकल्पाः ७ सप्त चतुर्विकल्पानव ९ पंचवि
कल्पाः सप्त ७ षड्विकल्पाश्चत्वारः ४ सप्तविकल्पएकः एवंद्वात्रिंशद्विकल्पाः ३२ यत्रबहवः पाचकाभवंति तत्रप्रथमंमूलदशापतिरेवांतर्द
शापाचकोभवति ततः परंय एव दशाविभागक्रमः सएवांतर्दशाविभागक्रमः यस्यादौ दशापाचकत्वंतस्यैवांतर्दशापाचकत्वंयस्यपश्चा
त्तस्यपश्चादितिदशाक्रमपाचनेयस्यांतर्दशापाचकत्वंनप्राप्तंतस्यनवक्तव्यम् तदनंतरंयस्यप्राप्तंतस्यैववक्तव्यम् अत्रान्येमूलदशापतेरंतर्द
शांदत्वाततः परंएकर्क्षगस्यददाति ततस्त्रिकोणगतस्य ततश्चतुरस्रगतस्य ततः सप्तमगस्य त्रिकोणचतुरस्रयोर्यदाग्रहोतदातयोर्बलाधिकत्व
स्यादौतच्चासुक्तम् यस्माद्भगवान्गार्गिः आदावंतर्दशापाकोभवत्येवदशापतेः ततः परंतुवक्तव्यंदशापाकक्रमेणतु ४ ७ ७

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एवंदशांतर्दशाविभागेज्ञानेकस्यसंबंधिनीदशांतर्दशावाशुभफलाभवति कस्याशुभफलेत्येतन्नज्ञायते तदर्थंदशादेःस्वफलानुरूपाः संज्ञावे-
त्तालीयेनाह सम्यग्बलिनइति प्रसूतौपुरुषस्यजन्मकालेयोग्रहः सम्यग्बलवान्भवति पूर्वोक्तैः बलैः सर्वैः युक्तोभवति तत्संबंधिनीसं
पूर्णानाम्नीदशाभवति नकेवलंयावत्स्वतुंगभागेऽवस्थितस्य परमोच्चभागगतस्यैवसंपूर्णानाम्नीदशाभवति सम्यग्बलिनइत्युक्त्वा
पुनःस्वतुंगभागइत्यनेनैतज्ज्ञापयति यथापरमोच्चगतोग्रहोऽन्यैःबलकारणैःयुक्तोनभवति तथापितस्यसंबंधिनीदशासंपूर्णैव
संपूर्णायांदशायामंतर्दशायांचकालेशरीरारोग्यधनवृद्धिभिःपुरुषोभिवर्द्धते अथसमस्तबलैःयुक्तोनभवतिकिंचिदून
बलस्तदातस्यसंपूर्णानाम्नीदशाभवति अथपरमोच्चगतोनभवति केवलमेवोच्चराशिगतोभवति तदातस्यदशापूर्णैवभवति पू-
र्णायांचदशायांकालेधनलाभमवाप्नोति तत्रारोग्यं बलवर्जितस्यग्रहस्यरिक्तानाम्नीदशाभवति यश्चनीचराशौस्थितः तस्यरिक्तै-
वरिक्तादशाकालेंतर्दशाकालेधनहानिमवाप्नोति नीचांशगतस्येतिनीचांशेनीचराशिनवभागेयोग्रहोगतःस्थितोभवति यश्चशत्रुभागेश

सम्यग्बलिनःस्वतुंगभागेसंपूर्णाबलवर्जितस्यरिक्ता नीचांशगतस्यशत्रुभागेज्ञेयानिष्टफलादशाप्रसूतौ

५
त्रुनवांशेचस्थितस्तस्यदशानिष्टफलाज्ञेयाज्ञातव्या अनिष्टफलदशांतर्दशाकालेधनहानिमनारोग्यंचप्राप्नोति अत्रचभग
वान्गार्गिः सर्वैर्बलैरुपेतस्यपरमोच्चगतस्यच संपूर्णाख्यादशाज्ञेयाधनारोग्यविवर्धिनी सर्वैर्बलैर्विहीनस्यनीचराशिगतस्यच रि
क्तानामदशाज्ञेयाधनारोग्यविनाशिनी स्वोच्चराशिगतस्याथकिंचिद्बलयुतस्यच पूर्णानामदशाज्ञेयाधनवृद्धिकरीशुभा यःस्यात्पर
मनीचस्यस्तथाचारिनवांशके तस्यानिष्टफलानामव्याध्यनर्थविवर्द्धिनी ५ अथदशांतर्दशासंज्ञाःपुनरपींद्रवज्रयाह भ्रष्टस्येति तुं
गात्परमोच्चात्भ्रष्टस्यच्युतस्यावरोहिसंज्ञा अवरोहिणीनाम्नीदशाज्ञेया दशापरमोच्चभागादारभ्ययावत्परमनीचभागादि अत्रांतरेयद्राशि
षड्कंतत्रावस्थितेनग्रहेणयादत्तादशांतर्दशावासावरोहिणीसंज्ञाभवति यस्मात्परमोच्चात्भ्रष्टःप्रत्यहमधोवतरतीतिविकल्प्यते यावत्परमनीचमिति
अवरोहिसंज्ञादशाऽधमफलाभवति यस्माद्धस्यति संज्ञानुरूपाणिफलान्ययेषामिति मध्याभवेत्साशुभदुच्चभागइति सैवारोहिणी ४९
यत्रतत्रराशौव्यवस्थितेनशुभदृग्भागेनमित्रांशकस्थेनदत्तादशामध्यानाम्न्येवभवति एवंयत्रतत्रराशौअथर्दिवस्वांशकस्थेनदशामध्यैव

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एवंयत्रतत्रराशौस्तोच्चनवांशकस्थेनदशामध्यैव आरोहिणीति निम्नान्नीचास्परिच्युतस्यचलितस्यग्रहस्यारोहिणीनाम्नीदशाभवति
परमनीचांतर्भागादारभ्ययावत्परमोच्चभागादिरत्रांतरेयद्राशिषट्कंतत्रावस्थितेनग्रहेणयादत्तादशांतर्दशावासारोहिणीनाम्नीदशाभवति
यस्मात्परमनीचाद्भ्रष्टः प्रत्यहंतावदारोहतीतिग्रहःपरिकल्प्यते यावत्परमोच्चमिति आरोहिणीश्रेष्ठफलाभवति नीचारिभांशाद्गति-
सैवारोहिणी यत्रतत्रराशौस्वनीचराश्यंशोपगतेनदत्ताधमानाम्नीदशाभवति एवंयत्रतत्रराशावरिभांशकस्थेनशत्रुनवांशकस्थेनदत्ता
धमैवदशाभवति पूर्वंशत्रुनवांशकस्थेनदत्तानिष्टफलेत्युक्तमधुनासैवाधमेति तत्किमेतदित्यत्रोच्यते अवरोहिणीशत्रुनवांशकस्थेन-
दत्तापिअनिष्टफलाज्ञेया आरोहिण्यधमा अनयोः कः फलभेदः अत्रोच्यते अनिष्टफलाफलमशुभंप्रयच्छति अधमाशुभमेवाल्प-
मिति एवमवरोहिणीसंज्ञायदाधमसंज्ञाभवति तदासैवानिष्टफलसंज्ञांलभते आरोहिणीयदामध्यसंज्ञाभवति तदासैवपूर्णसंज्ञाज्ञेया
अत्रचभगवान्गार्गिः उच्चनीचांतरस्थस्यदशास्यादवरोहिणी तस्यामल्पमवाप्नोतिफलंक्लेशाच्छुभंनरः मित्रोच्चात्मांशकस्थस्यमध्याम-

भ्रष्टस्यतुंगादवरोहिसंज्ञामध्याभवेत्सा शुभदुच्चभागे आरोहिणीनिम्नपरिच्युतस्यनीचारिभांशेष्वध-
माभवेत्सा ९. नीचारिभांशेसमवस्थितस्यशस्तेगृहेमिश्रफलाप्रदिष्टा संज्ञानुरूपाणिफलान्यथैषांदश
शुभवक्ष्यामियथोपयोगम् ७ ध्यफलातुसा नीचोच्चमध्यगस्योक्तायेष्ठाचारोहिणीदशा सैवाधमाख्याभवतिनीचराश्यंश-
गस्यतु अवरोहिणीचेदधमाभवेत्कष्टफलातदा आरोहिणीमध्यफलासंपूर्णापरिकीर्तितेति ९. अथदशांतर्दशासंज्ञाःपुनरप्युपजातिकयाह नी
चाद्गति शस्तानिगृहाणिस्वोच्चमूलत्रिकोणात्मक्षेत्रमित्रक्षेत्राणि तेष्ववस्थितेननीचराश्यंशकेरिभागेशत्रुनवांशकेसमवस्थितेनवाग्रहेणद-
त्तायादशांतर्दशावासामिश्रफलानाम्न्येव मिश्रफलाशुभमशुभंचफलंप्रयच्छति व्याधिसमेनमर्थागममेवमादिशेत् अर्थादेवाशस्तराशिगे
नअशस्ताअशस्ताः शत्रुनीचराशयः तत्स्थेनस्वोच्चमित्रमूलत्रिकोणात्मवर्गोत्तमनवांशकस्थेनापिदत्ता मिश्रफलैवभवति संज्ञानुरूपाणि
स्वनामसदृशानिफलानिस्वांतर्दशासुचज्ञेयानि तद्यथा संपूर्णात्यंतश्रेष्ठफलप्रदा पूर्णाश्रेष्ठफलदा अधमाशुभाल्पफलदा रिक्तार्थापहा
रिणी अनिष्टफलदात्यंतमशुभकारिणी मिश्रफलाशुभमशुभंचफलंप्रयच्छति अथैषांदशास्थितिः अथशब्दआनंतर्ये एषामादित्यप्र

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

र्वाणां दशासु यथोपयोगस्तत्र तत्र वक्ष्यामि यथा येनैव प्रकारेणैव युज्यते तथा तत् कथयिष्यामि कस्यां तद्दशायां किंफलमुपयुज्यत इ-
ति ७ अथ लग्नदशायां शुभाशुभज्ञानं वैतालीयेनाह उभयेति उभये द्विस्वभावे राशौ लग्नगते द्रेष्काणक्रमेणाधममध्यपूजिता दशा-
ज्ञेयाः प्रथमद्रेष्काणे जातस्याधमाऽशोभनानिष्टफला द्वितीये द्रेष्काणे मध्यमा मिश्रफला तृतीये द्रेष्काणे पूजिता श्रेष्ठफला चरभे चरराशौ
तदुत्क्रमेण वैपरीत्येन तेन प्रथमद्रेष्काणे जातस्य पूजिता द्वितीये मध्यमा तृतीये धमानिष्टफला अशुभेष्टसमाः स्थिरे क्रमादिति स्थिरे स्थिरराशौ
प्रथमद्रेष्काणे शुभा द्वितीये द्रेष्काणेऽनिष्टाश्रेष्ठा तृतीये द्रेष्काणे समा मध्यफला एवं होरायाः लग्नस्य दशाः परिकल्पिता उक्ता इति ८
अथ नैसर्गिकाणां ग्रहाणां दशाकालं शार्दूलविक्रीडितेनाह एकमिति एकाद्याः समाः एकादीनि वर्षाणि चंद्रादीनां यथाभिहितानि नैसर्गिका-
णि तद्यथा जन्मसमयादारभ्यैका समाः संवत्सरा यैकश्चंद्रस्य ततः परं द्वावारस्यांगारकस्य एवं त्रयः ततः परं नवेंदुजस्य बुधस्य एवं द्वा-
दश ततः परं विंशतिः शुक्रस्य एवं द्वात्रिंशत् ततः परं द्वे तयोष्टादश जीवस्य गुरोः एवं पंचाशत् ततः परं कृतिसंख्या विंशतिः दिनकृतः सू-

उभये धममध्यपूजिता द्रेष्काणैश्चरभेषु चोत्क्रमात् अशुभेष्टसमाः स्थिरे क्रमाद्धोरायाः परिकल्पिता दशा ८

र्यस्य एवं सप्ततिः ततः परं पंचाशत् दैवाकरेः सौरस्य एवं विंशत्यधिकं वर्षशतम् १२० एतेषु निसर्गदशाधिपेषु ग्रहेषु बलवत्सूपचयस्थि-
तेषु च तद्दशासु शोभनानि दशाफलानि भवंति हीनबलेष्वनुपचयस्थिष्वशोभनानि एतच्च सर्वदा चिंत्यं यतो निसर्गदशास्विति संवादव्रति
तथा च यवनेश्वरः स्तन्योपभोगः शशिनो वयः स्यांभौमस्य विद्यादशनानुजन्म बौधं तु शिक्षापदकालमाहुः शमैथुनेच्छाकुलितप्रवृत्ति शौ-
क्रं सुवत्त्वं विधिपूर्वदृष्टमामध्यमाद्वै गुरोर्वदंति रवेर्वयो ह्रासरमन्यदस्मात्सौरं जरादुर्भगकालमाहुरिति नैसर्गिकस्य दशाकालस्य प्रयोजन-
माह स्वैः स्वैरिति तत्र यस्य ग्रहस्य संबंधिनी पूर्वविधिना कृता दशा तद्दशावासाय दिनैः सर्गिकसमाप्तिः निसर्गकाधितवर्षैः स्वैः स्वैः आत्मी-
यैः युज्यते स्वदशाकालेन समकालं भवति तदा यावत्कालं तस्य दशा उक्ता भवति निसर्गवर्षसमयं यदि प्राप्नोतीत्यर्थः कालद्वयस्यैक्यसु-
द्बुतौ तदा यावत्कालं तस्य संबंधिनी दशां तद्दशा भवति तस्याः पुष्टफलापंक्तिः भवति तस्याः पुष्टापरिपूर्णफलापंक्तिः पाको भवति क्रमात्प्रति-
पाद्या यावद्वर्तते तावच्छुभफलेत्यर्थः अत्र केचिद्वदंति पूर्वविधिना जाता शुभा न दाशुभफलमत्यर्थं प्रयच्छत्यन्यथा शुभा न दाशुभमत्यर्थं-



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मिति एतच्चायुक्तम् यस्माद्यवनेश्वरः श्रेष्ठादशास्त्वेवयसिग्रहस्येति तथाचसत्यः एकाब्दिकः शशी त्र्यब्दिकः कुजोद्वादशाब्दिकः सौ-
म्यः द्वात्रिंशद्गुरुपुत्रोगुरुरुक्तकथितः शतस्यार्द्धम् ५० समत्यब्दः सूर्योविंशत्यधिकः शनैश्चरोब्दशतः वयसोंतराणिचैषांस्वदशानैसर्गि-
कः कालः स्वंस्ववयसः सदृशंग्रहः समासाद्यदेहिनांकालं रक्षणपोषणचेष्टास्वभावदाः स्फुर्यथासंख्यम् अथलग्नदशानैसर्गिककालंपु-
राणयवनमतेनाह अंतेलग्नदशाइति विंशत्यधिकाद्वर्षशतादूर्ध्वंयदिकस्यचिदायुषः कालोभवति तदासकालः सर्वएवलग्नस्यनैसर्गिकोभव-
ति तस्मिन्कालेपुराणयवनानांमतेनलग्नदशाशोभनाभवति विंशत्यधिकाद्वर्षशतादूर्ध्वमित्येतत्कुतोवगम्यते उच्यते तदर्वाक्कालस्यान्यग्रह-
परिगृहीतत्वात् लग्नस्यानवकाशादेव अथान्यःकश्चिदाह यथाननुविंशत्यधिकाद्वर्षशतादधिकंयस्यायुर्नास्ति किंतस्यलग्ननैसर्गिकोद-
शाकालोनास्ति उच्यते नास्त्येवनकेवलंयावद्वर्षसप्ततेरप्यधिकंयस्यायुर्नास्तितस्यशनैश्चरसंबंधीनैसर्गिकोदशाकालोनास्ति यस्यपंचा-
शतोधिकंनास्तितस्यादित्यस्यकिमपिनास्ति एवमन्येषामपियोज्यम् ननुविंशत्यधिकंवर्षशतंपरमायुस्तदूर्ध्वंजीविताभावात्कोलग्नस्य

एकंद्वौनवविंशतिर्धृतिकृतीपंचाशदेषांक्रमाच्चंद्रारेंदुजशुक्रजीवदिनकृद्दैवाकरीणांसमाः स्वैःस्वैःपुष्टफलानिसर्गजनि-
तैःपक्तिर्दशायाःक्रमादंतेलग्नदशाशुभेतियवनानेच्छंतिकेचित्तथा १

नैसर्गिकोदशाकालः उच्यते पूर्वमेवव्याख्यातं य-
थाविंशत्यधिकंवर्षशतंपरमायुः त्रैराशिकार्थमश्वादीनामायुर्ज्ञानार्थंप्रदर्शितम् ततःतावत्प्रमाणादायुषःपरंसंभवतीति तथाच यद्यामी-
नलग्नेबलवतिमीनांशकांतेचकश्चिज्जातोभवति सर्वेचग्रहाः यत्रतत्रराशौमीनांशकावस्थिताभवंति केचिदुच्चगताः केचिच्चवक्रितास्तदा
मीनलग्नोद्वादशवर्षाणिददाति सएवबलस्तुनस्तदान्यानिद्वादशवर्षाणिग्रहस्त्वेकैकोमीनांशकांतस्थत्वाद्द्वादशवर्षाणिददाति तानिचवक्रोच्च-
स्थत्वात्त्रिगुणानिषड्त्रिंशद्भवंति आदित्यवर्ज्यम् आदित्यस्यमेषमध्यमांशकस्थितस्यसप्तविंशतिवर्षाणिभवंति एवंचंद्रादीनांषण्णांशतद्वयं
षोडशाधिकंभवति आदित्यस्यसप्तविंशतिः लग्नस्यचतुर्विंशतिः एवमेकीकृतंशतद्वयंसप्तषष्ट्यधिकंभवति तत्त्वेतावत्प्रमाणंकालंकश्चिज्जी-
वमानोनदृश्यते योगस्यातिदुर्लभत्वात् उच्यते कश्चित्तुदृश्यतएवजंत्वादिकः नेच्छंतिकेचित्तथेति तांलग्नदशांमंतंकेचिदाचार्याः श्रु-
तकीर्तिप्रभृतयः तथातेनैवप्रकारेणशुभामितिनेच्छंति नोवांछंतीत्यर्थः यस्मादबलत्वेलग्नस्यवयोंतेतद्दशाभवति साशुभा आचा-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

र्येणलग्नदशायांशुभाशुभत्वंबलवशान्नोक्तम् द्रेष्काणवशादुक्तं उभयेधममध्यपूजिताइति यस्माद्बलहीनस्यापिलग्नस्यवर्योनेदशाद्रे
ष्काणवशाच्छुभाभवति तस्माद्येआचार्याअंतेलग्नदशांनेच्छंति तेनिष्कारणमेवनेच्छंति ननुकिमागमग्रंथानांकारणेन उच्यते यएवाचा
र्याअंतेलग्नदशांनेच्छंति तएवागमान्सत्का यथादर्शितकारणंउपन्यस्यनेच्छंति तेनकारणेनदोषउक्तः तथाचश्रुतकीर्तिः अंतेलग्न
दशाशुभेतियवनानेनडूहूनांमतं तस्मिन्हीनबलेयतोंऽत्यसमयेसाम्यादतोनेष्यते एतच्छ्रुतकीर्तिनाकारणमुपन्यस्तं तच्चदुष्टमतेनै
सर्गिकेलग्नदशाकालेंतर्दशाशुभैवेत्यवगंतव्यम् ९ अथदशांतर्दशाशुभाशुभज्ञानंशार्दूलविक्रीडितेनाह पाकस्वामीति सौरसावनचां
द्रनाक्षत्राणिचत्वारिमानानि तत्रसौरमानं रविभगणभोगः यावताकालेनार्कीभमेकंभुक्तेनत्सौरंदिनं यावताकालेनराशिद्वादशकंभुंक्ते
तत्सौरंवर्षं तच्चपंचषष्ठ्याधिकैस्त्रिभिः शतैः दिनानांघटिकापंचदशकेनसार्द्धंभवति सावनमुदयादुदयः अर्कोदयात्पुनरेवार्कोदयः साव
नमहोरात्रं तच्चषष्टिघटिकमहोरात्रं अहोरात्रत्रिंशन्मासः मासाद्वादशवर्षं एवंषष्ठ्यधिकैस्त्रिभिः शतैः दिनानांसावनंवर्षंचांद्रंतिथि
भोगः तच्चस्वमानेनषष्ठ्यधिकंशतत्रयंभवति सावनेनमीयमानंशतत्रयंचतुःपंचाशदधिकंदिनानांतच्चवर्षंभवति एवंसौरसावनचांद्राणित्रीणि
मानानिप्रत्येकंस्वमानेनषष्ठ्यधिकंशतत्रयंभवति नाक्षत्रंचंद्रनक्षत्रभोगः तच्चदिनानांसप्तविंशत्यामासोभवति शतत्रयेणचतुर्विंशत्यधिकेन-
दिनानांवर्षमुक्तं रव्यंशभोगोहोरात्रः सौरश्चांद्रमसस्तिथिः चंद्रनक्षत्रभोगस्तुनाक्षत्रः परिकीर्तितः ससावनोग्रहर्क्षाणामुदयादुदयावधि
नाक्षत्रमानेमासस्यासप्तविंशतिवासराः शेषमानेषुनिर्दिष्टोमासस्त्रिंशद्दिनात्मकइति तस्मात्सावनमानेनायुर्दायगणनाकार्या यस्माच्छो-
ध्यक्षेपविशुद्धमायुः कर्तव्यम् तच्चसावनमानं सौरमानेनसंक्रांत्यवधिकोमासः सावनस्त्रिंशद्रात्रः चांद्रोमावास्यांतिकः नाक्षत्रोरेवत्यंति
कः सौरमधिमासयुतंचांद्रंभवति चांद्रमूनरात्रोनंसावनंभवति चांद्रशब्देननाक्षत्रंउक्तंच युगवर्षमासपिंडंरविमानंसाधिमासकंचांद्रम् -
अवमविहीनंसावनमेदवमब्दान्वितंवर्षमिति एवंशोध्यक्षेपविशुद्धंसावनमानेनायुर्दायविधिः तथाचमयूरचित्रकेभगवान्गार्गिः आयुर्दाय
विभागश्चभायश्चिन्नक्रियास्तथा सावनेनैवकर्तव्यासत्राणामप्युपासनम् नन्वर्कोदयादारभ्यार्कोदयंयावदहोरात्रम् तत्पुलिशतंत्रेसौर
महोरात्रंपठ्यते वसुसप्तरूपनवमुनिनगतिथयः शतगुणाश्चसौरेणेति एतच्चपुलिशएवजानाति यस्मात्पुलिशतंत्रंवर्जयित्वा सर्वसिद्धांते
षुतंत्रेषुसौरमानेनरविभगणभोगः सौरमानमधिमासयुक्तंचांद्रंभवति चांद्रमवमरात्रोनंसावनंभवति एवंशोध्यक्षेपविशुद्धंसावनमानंस



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

र्वसंहितास्फुचार्कोदयादारभ्यार्कोदयंयावदहोरात्रंतत्सावनमहोरात्रमितिसंज्ञा तथाचभगवान्पराशरः सावनमहोरात्रं गार्गिश्च सावनेनस्मृतोमा
सस्त्रिंशद्दुष्णकरोदयः तथाचश्रीमद्ब्रह्मगुप्तः सावनमुदयादुदयइति एवंपुरुषस्यजन्मसमयेसावनमहर्गणंकृत्वातस्मात्तिथिनक्षत्रछे
दंतात्कालिकंग्रहलग्नादिकंकृत्वानथादशांतर्दशाःकर्तव्याः ततआगामिदशाफलंवक्तव्यं तत्रप्रथमजन्मनि अहर्गणंतात्कालिकंकृत्वा त
तस्तत्रांतर्दशाकालंवर्षादिकंदिनीकृत्ययोजयेद्वर्षाणि द्वादशभिःसंगुण्यतेषुमासान्संयोज्यत्रिंशतापुनः संगुण्यतेषुदिनानिक्षिपेत् एवं
कृतेदशाकालोदिनरूपोभवति तच्चतात्कालिकेजन्माहर्गणेसविकलेसविकलंसंयोज्याहर्गणोभवति तत्राद्योयद्घटिकादिःकालोभवति तस्या
तीतार्द्धरात्रात्सरतोगणनाकार्या तस्मादिष्टदिनमानमानयेदनेनाचार्यसूत्रेण द्युगणोधोभवगुणितोद्दिनवरसाप्तावमाधिकश्चांद्रः चांद्रोधस्तु
वेदानागाप्ताअधिमासदिनैर्हीनाइति एतत्खंडखाद्यकरणेनैवभवति कोसौरविद्युगणइत्याह शाकोगवसशरोनोर्कगुणःचैत्रादिमाससंयुक्तः
त्रिंशद्गुणःतिथियुतइति अस्यपक्षअधिकेनशतत्रयेणभागमपहृत्यावाप्तम् करणाब्दाः शेषास्त्रिंशद्गुक्ताश्चैत्रसितादायामासाः शेषावर्तमानमा

पाकस्वामिनिलग्नगेसुहृदिवावर्गस्यसौम्येपिवाप्रारब्धाशुभदादशात्रिदशषड्लाभेषुवापाकपे मित्रोच्चोपचयस्त्रि
कोणमदनेपाकेश्वरस्यास्थितश्चंद्रःसत्फलबोधनानिकुरुतेपापानिचातोन्यथा १०

सेसितादयास्तिथयः करणाब्देषुगवसु
शराल्संयोज्यातीतः शककालोभवति तस्मिन्शाकेतस्मिन्मासेतस्मिन्दिनेसोऽहर्गणइति तत्रैवदशाप्रवेशः पुनरप्यन्यमंतर्दशाकालं
दिनीकृत्यतस्मिन्योजयेत् एवंयावंत्योंतर्दशाभवंतितावंत्योनेनैवप्रकारेणयोजनीयाः ततोग्रहान्लग्नंचगणयेत् अथवान्येनप्रकारेणका
लानयनं आदित्येक्रियमाणेयावंतोगतभगणाभवंति तावंतःकरणप्रारंभादारभ्यगताब्दाः तेषुकरणपरिणतशककालंसंयोज्येष्टशकका-
लोभवति वर्तमानेवर्षेयावंतोराशयःस्फुटोर्कोभवति तावंतोमासाः सूर्यभोगानीताः शुक्लपक्षंकृष्णपक्षंवातिथिनक्षत्रंचंद्रार्काभ्यांज्ञायतएव
पाकस्वामिनीत्यादि यस्यग्रहस्यांतर्दशाप्रवेशः सपाकस्वामीतावच्चासोपाकस्वामीयावत्तस्यांतर्दशामेवसचपाकस्वाम्यंतर्दशाप्रवेशकालेलग्न
गोयदिभवति तदातस्यसंबंधिन्यंतर्दशाप्रारब्धाशुभदाशोभनफलदाभवति अथवातात्कालंपाकस्वामिनोयत्सुहृन्मित्रंतस्मिन्नपिदशाप्र
वेशकालेलग्नगेशोभनादशावक्तव्या अथवास्यदशापतेः पूर्वव्याख्यातोयोवर्गः तस्मिन्नपिलग्नगेशोभना अथवान्यस्मिन्सौम्येशुभ

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ग्रहेतत्काललग्नगेदशाप्रारब्धाशोभनैव अथवापाकपेदशाधिपतौग्रहे तात्कालिकलग्नात्त्रिदशपञ्चमेषु तृतीयषड्दशमैकादशस्थानाना मन्यतमस्थेशोभनैवदशावक्तव्या यद्यप्यत्रसामान्येनोक्तंप्रारब्धाशुभदादशा तथापि शत्रुअधिशत्रुदशायांप्राप्तानिष्टफलप्रदा अधिमित्रोपिमित्रस्यदशांप्राप्तोतिशोभनः समःसमदशामेत्ययथोक्तफलदोहिसः एतदपिचिंतनीयम् अनेनप्रकारेणयदिशुभफलदांतर्दशाभवति तदाशुभैव अन्यथाऽशुभैव अथशुभफलायामंतर्दशायांकिमप्यनवरतमेव सर्वकालंशुभफलावाप्तिर्भवति किंवाकस्मिंश्चित्कस्मिंश्चिद्दिवसेएवमशुभायामंतर्दशायामशुभफलावाप्तिरित्युभयत्रसंदेहव्यवच्छेदार्थमाह मित्रोच्चोपचयेत्यादि पाकेश्वरस्यदशापतेः प्रतिराशौसंचरतः तत्कालेयोग्रहोमित्रंतत्क्षेत्रस्थितश्चंद्रमायदाभवति तदासत्फलबोधनानिकुरुते शुभफलानिप्रकटीकरोति अत्रयस्मिन्नहनियस्मिन्गृहेचारवशात्चंद्रमाभवति तस्यगृहस्ययोधिपतिर्भवति सचेत्तस्मिन्नहनिपाकपतेस्तात्कालिकमित्रंभवति तदाचंद्रमापाकपतेर्मित्रक्षेत्रस्थोज्ञेयः तथापाकपतेः स्वोच्चस्वराशिस्थः सत्फलबोधनानिकुरुते नकेवलंयावत्पाकपतेरुपचयस्थानगतोपि

प्रारब्धाहिमगौदशास्वगृहगेमानार्थसौख्यावहाकौजेदूषयतित्रियंबुधगृहेविद्यासुहृद्वित्तदा

त्रिषडेकादशदशमस्थानानामन्यतमस्थानस्थस्त्रिकोणगोपिनवपंचमस्थानगतोपितथामदनस्थः सप्तमेचस्थितः एतेषुनिर्दिष्टस्थानेष्वन्यतमस्थानस्थश्चंद्रमाः शुभफलायांदशायांसत्फलबोधनानिकुरुते तज्ज्ञायतेतेषांफलानामित्यत्रोच्यते मित्रोच्चोपचयत्रिकोणमदनेयस्मिन्स्थानेपाकेश्वरश्चंद्रमाः स्थितः सराशिः जन्मनियोभावआसीत्तदुद्भूतंसत्फलंबोधयति विशेषेणतयादशापठितमिति अतोस्मादुक्तप्रकारादन्यथापाकपतेस्तत्कालंशत्रुगृहेनीचराशौवादशापतिनासहैकराशौस्थितस्तथाद्वितीयचतुर्थाष्टमद्वादशस्थानानामन्यतमस्थानस्थोभवतितदाशुभफलायांदशायांपापानिफलानिप्रकटीकरोति सचराशिर्योभावआसीत्तदुद्भूतंफलंबोधयति विशेषेणदशापठितमिति अनिष्टमप्यष्टकवर्गोद्भूतंचमिश्रदशायांमित्रोच्चोपचयादिषु सत्फलबोधनानिकुरुते शत्रुनीचादिषु अशुभफलानामिति तथाचभगवान्गार्गिः यद्राशिसंस्थशीतांशोः शुभकृत्सरिकीर्त्तितः सराशिर्जन्मकालेतुयोभावस्तत्कृतंचतत् शर्मादिकृतंसौख्यंवक्तव्यंबलयोगतः अनिष्टराशिसंस्थंतुतद्भावानामशोभनइति १० अथांतर्दशाकालेचंद्राक्रांतराशिवशेनशुभज्ञानंशार्दूलविक्रीडितेनाह प्रारब्धाहिमगाविति यस्यतस्यग्रहस्यां ५२

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तद्दशाप्रवेशसमये हिमगौ चंद्रे स्वगृहगे आत्मीयक्षेत्रस्थे कर्कटगे प्रारब्धा प्रविष्टा तदा सौख्यार्थमानावहा भवतीति सौख्यं सुखस्वभावः अर्थो धनं मानं पूजा आवहति करोति कौजे भौमक्षेत्रे मेषवृश्चिकयोरन्यतमे व्यवस्थिते चंद्रे प्रवृत्तां तद्दशा स्त्रियं दूषयति परपुरुषकृतं स्त्रीदोषमुत्पादयति बुधगृहे मिथुनकन्ययोरन्यतमस्थे चंद्रे प्रवृत्तां तद्दशा विद्यासुहृद्वित्तदा विद्या शास्त्राभ्यासः सुहृदो मित्राणि वित्तं धनं ददाति सिंहस्थे चंद्रे-दुर्गे गिरौ अरण्ये पथि च मार्गे आलये च गृहसमीपे एतेषु स्थलेषु कृषिं करोति सितर्क्षे शुक्रराशौ वृषतुलयोरन्यतमस्थे चंद्रे अन्नदा मिष्टभोज्यप्रदा भवति मृगकुंभयोर्मकरघटयोरन्यतमस्थे चंद्रे प्रवृत्ता तद्दशा कुस्त्रीदा कुत्सितां स्त्रियं ददाति गुरुगृहे जीवक्षेत्रे धन्विमीनयोरन्यतमस्थे चंद्रे प्रवृत्तां तद्दशा मानार्थसौख्यावहा मानं पूजा अर्थो धनं सौख्यं सुखस्वभावः एतान्यवहति ददाति एवं शुभदशा शुभकालप्रवृत्ता शुभतरा भवति एवं शुभाशुभकालप्रवृत्ता मध्या अशुभाशुभकालप्रवृत्ता मध्या अशुभाशुभकालप्रवृत्ता अशुभतरा मध्या शुभकालप्रवृत्ता शोभना मध्या अशुभकालप्रवृत्ता अशोभना एवं शुभाशुभत्वकरणानि यान्युक्तानि तानि विख्याय तां तद्दशानां शुभाशुभमुख्यामिश्रफलत्वं परिकल्प

दुर्गारण्यपथालये कृषिकरी सिंहे सितर्क्षेऽन्नदा कुस्त्रीदा मृगकुंभयोर्गुरुगृहे मानार्थसौख्यावहा ॥११॥ सौर्यां स्वं नखदंतचर्मक
नककौर्याध्वभूपाहवैस्तैक्ष्ण्यं धैर्यमजस्रमुद्यमरतिः ख्यातिः प्रतापोन्नतिः । भार्यापुत्रधनारिशस्त्रहुतभुग्भूपोद्भवा व्यापद
स्त्यागी पापरतिः स्वभृत्यकलहो हृत्क्रोडपीडामयाः ॥१२॥

नीयमिति ॥११॥ अथार्कदशायां शुभाशुभफलप्रदर्शनं शार्दूलविक्रीडितेनाह सौर्यामिति सूर्यस्येयं दशा सौरी तस्यां दशायामंतर्दशायां वा नखदंतचर्मकनककौर्याध्वभूपाहवैः कारणभूतैः स्वं धनं प्राप्नोति नखं सुगंधिद्रव्यं-प्राणिकरजं वा दंतो हस्तिदंतादिः चर्म व्याघ्रादीनां कनकं सुवर्णं कौर्यं क्रूरता अध्वा मार्गः भूपो राजा आहवः संग्रामः एतैः धनं प्राप्नोति तैक्ष्ण्यं उग्रस्वभावता धैर्यं शुभाशुभफलप्राप्तौ हर्षविषादैः अनभिभवः अजस्रमनवरतं उद्यमरतिः उत्थानपरत्वं ख्यातिः कीर्तिः प्रतापोन्नतिः प्रतापेन शौर्येणोन्नतिः शत्रूणामन्यशत्रुनिग्रहजनिता भीतिः एतान्यादित्यशुभदशायां पुरुषस्य भवंति अथाशुभदशायां भार्यापुत्रेति भार्या जाया पुत्राः सुताः धनं वित्तं अरिः शत्रुः शस्त्रमायुधादि हुतभुगग्निः भूपो राजा एभ्य उद्भूता उत्पन्ना व्यापदो विशेषेणापदो भवंति त्यागी त्यागशीलता भवति शुभदशायां शुभस्थाने त्यागी अशुभदशायां चाशुभत्वादशुभस्थाने त्यागी भवति पापरतिः पापासक्तश्च भवति स्वभृत्यकलहः आत्मीये

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मूर्त्यैः सहकलहोभवति हृत्क्रोडपीडनेभवतः हृत् हृदयं क्रोडं उदरं हृदयोदरपीडा आमयाः रोगाश्चास्यभवंति मिश्रायामुभयमपि इति
सूर्यदशांतर्दशाफलम् १२ अथचंद्रदशायांशुभाशुभफलंशार्दूलविक्रीडितेनाह इंदोरिति इंदोः चंद्रमसोदशांवयोवस्थांप्राप्यलब्धा-
मंत्रद्विजात्कृद्भवानिफलानिलभते मंत्रशैववैष्णवादिश्चाणक्यविहितोवावैदिकोवा द्विजातयोब्राह्मणाः एभ्यउद्भूतानिउत्पन्नानि नकेव
लंघावदिक्षीरविकाराद्दुग्धादिकान्क्षीरविकाराद्दध्यादिकाद्वस्त्रेभ्योंबरेभ्यः कुसुमेभ्यःपुष्पेभ्यः क्रीडायाः क्रीडाभ्यः तिलेभ्यः अन्नात् श्रमा
द्व्यायामात् एतैःशुभदशायांशुभानिफलानिप्राप्नोति अथाशुभायामशुभदशायांनिद्रालस्यमृदुद्विजामररतिरिति निद्रयामाल-
स्यचरतिरासक्तिर्भवति मृदुद्विजामररतिर्भवति मृदुः स्वभावान्द्विजानांब्राह्मणानाममराणांदेवानांचाराधनेरतिरासक्तिर्भवति स्त्रीज
न्मकन्याप्रसूतिः मेधाविनाशुबुद्धिह्रासिः कीर्तिः यशसः अर्थानांधनानामुपचयक्षयौ शुभदशायामुपचयः प्राप्तिरशुभायांक्षयः नाशः
अशुभायांबलवद्भिः वीर्यवद्भिः स्वपक्षेणात्मीयबंधुवर्गेणचसहवैरंभवति मिश्रायामुभयमपि इतिचंद्रदशांतर्दशाफलम् १३ अथ

इंदोःप्राप्यदशांफलानिलभतेमंत्राद्विजात्कृद्भवान्नाक्षक्षीरविकारवस्त्रकुसुमक्रीडातिलान्नश्रमैः निद्रालस्यमृदुद्विजाम
ररतिः स्त्रीजन्ममेधाविनाकीर्त्यर्थोपचयक्षयौचबलिभिर्वैरंस्वपक्षेणच १३ भौमस्यारिविमर्दभूपसहजक्षित्याविका
जैर्धनंप्रद्वेषःसुतमित्रदारसहजैर्विद्वद्गुरुद्वेष्टिता तृष्णासृक्ज्वरपित्तभंगजनितारोगाःपरस्त्रीकृताप्रीतिःपापरतैरध
र्मेनिरतिःपारुष्यतैक्ष्ण्यानिच १४ भौमदशायांशुभाशुभफलंशार्दूलविक्रीडितेनाह भौमेति भौमस्यक्षितिजस्यदशायांकैः
धनंभवति अरिविमर्दनेनशत्रुप्रमथनेन भूपोराजासहजाः भ्रातरः क्षितिः भूः आविकजैः ऊर्णविकारसंभूतैः अजैः छागसंभूतैःएतैः
अरिविमर्दादिभिः धनंप्राप्नोति एतच्छुभदशायां अथाशुभायांदशायांसुताः पुत्राः मित्राणिसुहृदः दाराः कलत्रंसहजाः भ्रातरः एतैःसहप्रद्वे
षः वैरं विद्वद्भिः पंडितैः गुरुभिः गौरवस्पर्हैर्नेश्चसहद्वेष्टिता अप्रीतिः तृष्णातृट् असृग्रुधिरं ज्वरः प्रसिद्धोरोगः पित्तंधातुप्रसिद्धं भंगःअवयवादेः
स्फोटनं एतैःजनिताउत्पादितारोगाभवंति परस्त्रीणामिष्टतावाल्लभ्यं अन्येरोगाः परस्त्रीकृताइतिपठंति परस्त्रीकृतारोगाः अन्यस्त्रीप्रसंगेनप्रम-
हारादिकाः अतिप्रसंगाद्धातुक्षयकृतावा अथवातत्कृतमूलकर्मोद्भवाभवंति तयापापरतैः अधमैः सहप्रीतिर्भवति अधर्मेनिरतिः आसक्तिर्भव-



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ति पारुष्यंवचनपरुषता कर्कशता तैक्ष्ण्यंउग्रस्वभता मिश्रायासुभयमपि इतिभौमदशांतर्दशाफलम् १४ अथबुधदशायांशुभाशुभफलंशा
र्दूलविक्रीडितेनाह बौध्यामिति बुधस्येयंदशाबौधीतस्यांदौत्येन दूतत्वेन सुहृद्भ्योमित्रेभ्यः गुरुभ्यः पूजार्हेभ्यः द्विजेभ्योब्राह्मणेभ्यः धनंशमो
ति विद्वद्भ्यः पंडितेभ्यः प्रशंसास्तुतिः यशश्चकीर्तिर्भवति उक्तिद्रव्यं रीतिकांस्यादि सुवर्णंकनकं वेसरः अश्वविशेषः महीभूः सौभाग्यंस-
र्वजनवाल्लभ्यं सौख्यंसुखभावः योगानुसेवनं एषामाभ्योलाभोभवंति हास्यंपरोपहासः उपासनासेवा अनयोः कौशलंनैपुण्य मतिचयः
बुद्धिवृद्धिः धर्मक्रियासिद्धयः धर्मयुक्तानांक्रियाणांसिद्धयोभवंति एतच्छुभदशायां अथाशुभदशायांपारुष्यंइत्यादि पारुष्यंपरुषवचनता
श्रमः खेदः बंधः बंधनं मानसशल्यः शोकश्चिंतादोऽस्यंएतेभवंति धातुत्रयपीडा वातपित्तश्लेष्मणांत्रयाणांदोषाणांप्रकोपात्पीडाव्याधिश्चजायते
मिश्रायासुभयमपि इतिबुधदशांतर्दशाफलम् १५ अथजीवदशायांशुभाशुभफलंशार्दूलविक्रीडितेनाह जैव्यामिति जीवस्येयंदशाजैवीतस्यां
जैव्यां मानगुणोदयः मानः पूजा गुणाविद्याशौर्यादयः एषामुदयः प्रादुर्भावः मतिचयः बुद्धिविवृद्धिः कांतिः कमनीयता प्रतापोन्नतिः प्रतापेनप्र-

बौध्यांदौत्यसुहृद्गुरुद्विजधनंविद्वत्प्रशंसायशोयुक्तिद्रव्यसुवर्णवेसरमहीसौभाग्यसौख्याप्तयः हास्योपासनकौशलंमतिच
योधर्मक्रियासिद्धयःपारुष्यंश्रमबंधमानसशल्यःपीडाचधातुत्रयात् १५ जैव्यांमानगुणोदयोमतिचयःकांतिःप्रतापोन्न
तिर्माहात्म्योद्यममंत्रनीतिनृपतिस्वाध्यायमंत्रैर्धनम् हेमाश्वात्मजकुंजरांबरचयःप्रीतिश्चसद्भूमिपैः सूक्ष्मोहागहनाश्रमः
श्रवणरुग्वैरंविधर्माश्रितैः १६

रूपार्थेनउन्नतिः प्रभावः शत्रूणांभीतिः माहात्म्यंपरोपकारशीलता केचिद्धर्ममाहुः उद्यमः उत्थान
शीलता मंत्रैर्वैदिकैरन्यैर्वा नीतिनृपतिस्वाध्यायमंत्रैर्धनं नीत्याचाणक्योक्तयान्येननीतिशास्त्रेणवा नृपतीराजातद्दाराधनेन स्वाध्यायेनपाठेन
मंत्रेण मंत्रजाप्येनएतैः धनंवित्तमाप्नोति हेमसुवर्णं अश्वः तुरगः आत्मजाः पुत्राः कुंजरः हस्ती अंबराणिवस्त्राणि एषांचयोबाहुल्यं सद्भूमिपैःगु
णवद्भिःनृपैः सहप्रीतिः स्नेहंप्राप्नोति एतच्छुभदशायां अथाशुभायां सूक्ष्मोहेत्यादि सूक्ष्मंवस्तुगहनासकंचोहयतस्तर्कयतः श्रमः खेदोभ-
वति यत्सूक्ष्ममतिखेदसहंगहनंगूढं तदूहयतइत्यर्थः श्रवणरुक् कर्णरोगः वैरंविधर्माश्रितैः धर्मबाह्यैः पुरुषैः सहवैरं मिश्रायासुभयमपि
इति गुरोर्दशांतर्दशाफलम् १६ अथशुक्रदशायांशुभाशुभफलंशार्दूलविक्रीडितेनाह शौक्र्यामिति शुक्रस्येयंदशाशौक्रीतस्यांशौक्र्यां गीतरतैः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गीतासक्तेः प्रमोदस्य हर्षस्य सुरभिद्रव्याणां अन्नस्य भोजनस्य पानस्यासवस्यांबराणां वस्त्राणां स्त्रीणां योषितां रत्नानां मणीनां द्युतेः कांतेः मन्मथोपकरणानां कामोपभोग्यानां शय्यादीनां विज्ञानस्य योगशास्त्रस्येष्टानां प्रियाणां मित्राणां सुहृदामागमा लब्धयो भवंति कुशलः शिक्षितः कुशलस्य भावः कौशल्यं कुशलः श्रेयो वा कौशल्यमभीष्टक्रियासु श्रेष्ठत्वं क्रयविक्रये क्रयो यदिच्छति क्रेतुं तल्लयः विक्रयो यदिच्छति विक्रेतुं तद्विक्रयः कृषिः कर्षणं निधिः निधानं परैर्यद्वित्तं भूमावधः स्थाप्यते स निधिस्तस्याप्तिर्लाभः एते भवंति एतच्छुभदशायां अथाऽशुभदशायां वृंदोर्वीशेति वृंदेन बहुभिः सह उर्वीशेन राज्ञा निषादानामन्यजीविनां प्राणिघातिनां धर्मरहितैः पापासक्तैः एतैः सह वैरं प्राप्नोति शुचः स्नेहतः स्नेहाच्छुचः शोकाः भवंति यत्र स्नेहस्तद्दुःखवान् शोकान्प्राप्नोति मिथ्यापायासु भयमपि इति शुक्रदशांतर्दशाफलमिति १७ अथ शनैश्चरदशायां शुभाशुभफलं शार्दूलविक्रीडितेनाह सौरीमिति सौरीं शनैश्चरदशां प्राप्य खराः गर्दभाः उष्ट्राः करभाः पक्षिणः श्येनादयः महीषी प्रसिद्धा वृद्धांगना वृद्धा स्त्री एषां मासयः लाभाः भवंति बहुसमानजातीयानां संघः श्रेणी तस्यामधिकारे नियुज्यते ग्रामे पुरे वा श्रेणीग्रामपुराधिकारजनितां तदुत्सन्नां पू

शौक्र्यां गीतरतिप्रमोदसुरभिद्रव्यान्नपानांबरस्त्रीरत्नद्युतिमन्मथोपकरणज्ञानेष्टमित्रागमाः कौशल्यं क्रयविक्र
ये कृषिनिधिप्राप्तिर्धनस्यागमो वृंदोर्वीशनिषादधर्मरहितैर्वैरं शुचः स्नेहतः १७ सौरीं प्राप्य खरोष्ट्रपक्षिमहिषीवृद्धांग
नावाप्तयः श्रेणीग्रामपुराधिकारजनितापूजा कुधान्यागमः श्लेष्मेर्ष्यानिलकोपमोहमलिनव्यापत्तितंद्राश्रमान्भृ-
त्यापत्यकलत्रभर्त्सनमपि प्राप्नोति च व्यंगताम् १८ दशाः सुशस्ताः शुभानि कुर्वंत्यनिष्टसंज्ञास्त्वशुभानि चैवम् ॥

जां मानतां प्राप्नोति कुधान्यानां कोद्रवादीनामागमः लाभः एतच्छुभदशायां अथाऽशुभदशायां श्लेष्मेर्ष्येति श्लेष्मणा कफेन ईर्ष्यया मत्सरत्वेन अनिलेन वायुना कोपेन क्रोधेन मोहेन चित्तभ्रमेण मलिनतया मलिमसत्वेन व्यापत्तिः विपत् तंद्रा निद्रालस्ययोरंतरे वर्तते तस्या लक्षणं हृदये व्याकुलीभावो वाचश्चेंद्रियगौरवं मनोबुद्ध्यप्रसादश्च तंद्राया लक्षणं विदुः श्रमः खेदः एतान्प्राप्नोति भृत्येभ्यः कर्मकरेभ्यः अपत्येभ्यः पुत्रदुहितृभ्यः कलत्रेभ्यो भार्याभ्यः भर्त्सनं तर्जनं प्राप्नोति व्यंगताम् अंगच्छेदं व्याधिना तद्धारणं वा मिथ्यापायासु भयमपि इति शनैर्दशांतर्दशाफलम्
१८ अथैकस्मिन्नृत्ने दशासु शुभान्यशुभानि च फलान्युक्तानि तेषां विषयविभागं लग्नदशाफलं चोपजातिकयाह दशा इति शुभाशुभं व्यामि



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथ स्वं दशासु पूर्वमेवोक्तं तथा जन्मकाले उपचयराशिस्था निर्मलमूर्तयः स्पष्टगतयश्च ये ग्रहास्तेषामपि दशाः शुभाः ये चोपचयस्था हतास्रूक्षाः
स्वल्पमूर्तयस्तेषामपि दशा अशुभाः तथा च यवनेश्वरः निशाकरादित्यविलग्नभानां तत्कालयोगादधिकं बलं यः बिभर्ति तस्यादि दशोऽथ तेभ्यो
बास्त्वतः शेषबलक्रमेण वयोऽधिको यः प्रथमोऽद्भुतो वा ग्रहः सपूर्वं परिणोदशेषः बलाधिकश्चेद्यदि केंद्रसंस्थः पूर्वं स शेषास्तु यथा प्रदिष्टः श्रेष्ठा दशा स्यैव य
सि ग्रहस्य स्वोच्चस्थिता कालबलान्वितस्य स्वेत् मूलत्रिकोणात्स्वगृहाच्च मध्या मित्रान्विता जन्मगृहान्विता वा नीचारिभांशोपगता ज्जिताह्रा गृहास्तखिल स्त-
विवर्णरूक्षात् जन्मेशशत्रोर्निधनारिभेशाद्या वा यतेसा बहुदोषदा स्यात् एवं शस्ताः शोभनास्तु दशा ग्रहाः शुभान्येव फलानि कुर्वंति दशाफलव-
न्ते यानि शुभान्यशुभान्यविहितानि तान्येव भवंति नेतराणि अनिष्टसंज्ञास्त्वशुभदशास्तु अशुभान्यनिष्टानि एव भवंति मिश्रास्तु दशास्तु मिश्राण्ये
व दशाफलानि भवंति एतच्च मतिसूत्रमस्माभिश्च व्याख्यातं तथा च सत्यः जन्मन्युपचयभवनेषु संस्थिताः सन्यगाः सुमूर्तिधराः श्रेष्ठफलं विद-
धत्यथ ग्रहाः क्रमात्स्वां दशां प्राप्य अन्यैर्निहिताः रूक्षा न्यूनमूर्तयो यो पचयर्क्षसंस्थाश्च स्वदशाभिहितं नेष्टं ग्रहाः प्रयच्छंति लोकेषु होराफलं लग्नपतेः स-

मिश्रास्तु मिश्राणि दशाफलानि होराफलं लग्नपतेः समानम् १९ संज्ञाध्यायेयस्य यद्द्रव्यमुक्तं कर्माजीवो यश्च यस्योपदि-
ष्टः भावस्थानालोकयोगोद्भवं च तत्तत्सर्वं तस्य योज्यं दशायाम् २० ग्नाधिपस्य समानं तुल्यमव क्तव्यम् यथा मेषलग्नजानस्य भौ
मदशाफलं वृषलग्नजानस्य शुक्रदशाफलं एवमन्येष्वपि वक्तव्यं किंतु द्रेष्काणवशाच्छुभायां लग्नदशायां शुभफलमशुभायामशुभम् मिश्रा-
यामुभयमपि अथ यं पूर्वं दशारिष्टा उक्तास्तेषामिमे भंगाः प्रोक्ताः तथा च सारावल्याम् प्रवेशे बलवान् खेदः शुभैर्वा सन्निरीक्षितः सौम्या-
धिमित्रवर्गस्थो मृत्यकल्पन्न भवेत्तदा अंतर्दशाधिनाथस्य विबलस्य दशा यदा विबलस्यान्तदा भंगो न बाध्यास्तस्य च ध्रुवं फलं च विजयी
तस्मिन्ग्रहयोगे शुभा यदि दशायां न भवेत्कष्टं स्वोच्चादिषु च संस्थिते इति १९ अथान्येषामपि फलानां दशासु विनिदेशार्थं शालिन्याह संज्ञा
ध्येति यस्य ग्रहस्य संज्ञाध्याये यद्द्रव्यं ताम्रं स्यान्मणिहेमे स्यादिनाग्रंथेनोक्तं कथितं तस्य तद्द्रव्यस्य शुभदशायां प्राप्तिः योज्या अशुभदशायां हानिः
तथा यश्च कर्माजीवो यस्य ग्रहोपदिष्टो जातकाभिहितः अर्थाप्तिः पितृपितृपत्नीत्यादि तस्य ग्रहदत्तस्य कर्माजीवस्य तदंतर्दशायां भवाभिर्वदति भावफलं तस्य-
ति मूरस्तब्ध इत्यादि तथा प्रथितश्चतुर्गो दन इत्यादि तथा मेषेस्वस्तिमिरनयन इत्यादि आलोकजफलं दृष्टिफलं चंद्रे भूपबुधो इत्यादि योगो

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

इवंनाभसयोगानुक्त्वा सर्वयोगेषुयोगकर्तृभ्यो ग्रहेभ्योमध्याद्यो बलीयान् सस्वदशायामेवफलंददाति नाभसयोगाः सकलदशास्वपिफलप्रदाः
वस्यातिच इतिनिगदितायोगाः सार्द्धफलरिहनाभसाः नियतफलदाश्चत्वात्संसमस्तदशास्वपीति एवमादियद्दुक्तंनत्सर्वमिसवशेषं तस्यग्रह
स्यदशायांयोज्यमिति २० अथयस्यजातस्यजातकसम्यग्गणितंनस्यशरीरच्छायांदृष्ट्वाग्रहदशाज्ञानमिंद्रवज्रयाह छायांमहाभूतकृतामिति पूर्व
मुक्तम् शिखिभूखपयोमरुद्गणानांवशिनोभूमिसुतादयः क्रमेणेति तत्रादित्यचंद्रौवन्ह्यंबुप्रसिद्धावेवयःकश्चिद्ग्रहः स्वदशामात्मीयदशामवाप्यम
हाभूतकृतांछायांअभिव्यंजयति प्रकटांकरोति छायाशब्देनशरीरशोभाभिधीयते शरीरकांतिरित्यर्थः तथाचसच्छायोयं विछायोयंवर्तत इत्यभि
धीयते एवमात्मीयदशायांपृथिव्यादिमहाभूतकृतांशरीरछायांव्यंजयतिप्रकटीकरोति साच कंबग्निवाय्वंबरजान्गुणान्कुः पृथिवी अंबुवरुणः अ
ग्निः हुताशनः वायुः अनिलः अंबरं आकाशं एभ्योजातोसन्नासाछायानद्गुणान्करोति तांश्चयथासंख्यंनासास्यदृक्त्वक् श्रवणानुमेयान्
पार्थिवंगुणंगंधमभिव्यंजयति नासानुमेयंघ्राणेनोपलभ्यते अथाप्यगुणंरसमभिव्यंजयति तच्चास्यानुमेयं आस्यशब्देनेहजिह्वाज्ञेया तयारस

छायांमहाभूतकृतांचसर्वेभिव्यंजयंतिस्वदशामवाप्य कंबग्निवाय्वंबरजांन्गुणांश्चनासास्यदृक्त्वक्श्रवणानुमेयान् ॥२१॥

स्योपलब्धेः आस्यग्रहणंचात्रवृत्तानुरोधीकृतं आग्नेयीआग्नेयंगुणंरूपमभिव्यंजयति दृष्ट्यानुमेयंवायवी वायव्यंस्पर्शगुणमभिव्यंजयति त्वगनुमेयं
स्पर्शेनोपलभ्यते नाभसी नाभसंगुणंशब्दमभिव्यंजयति श्रवणानुमेयंकर्णोपलभ्यं एतदुक्तंभवति यदाशुभगंधः पुरुषोभवति तदास्यबुधकृतापा
र्थवीछायाज्ञेया यदामिष्टरसभोजीभवतितदास्यचंद्रशुक्रकृताछायाज्ञेया यदातीवरूपवान्सुकांतः पुरुषोभवति तदासूर्यभौमकृताआग्नेयीछा
याकृता यदास्पर्शेनमृदुर्भवति तदाशनैश्चरकृतावायवीछायाज्ञेया यदास्यवचनंकर्णयोःसुखकरंभवतितदाजीवकृतानाभसीछायाज्ञेया छायावि
शेषलक्षणमाचार्येणसंहितायामभिहितं तथाच छायाशुभाशुभफलानिनिवेदयंतीलक्ष्यामनुष्यपशुपक्षिषुलक्षणज्ञैः तेजोगुणान्बहिरपिप्रवि-
काशयंतीदीपप्रभास्फटिकरत्नघटस्थितेव स्निग्धद्विजत्वग्नखरोमकेशाछायासुगंधाचमहीसमुत्था तुष्ट्यर्थलाभाभ्युदयान्करोति धर्मस्यचाह
न्यहनिप्रवृद्धिं स्निग्धासिताचहरितानयनाभिरामासौभाग्यमार्दवसुखाभ्युदयान्करोति सर्वार्थसिद्धिजननीजननीवचाप्याछायाफलंतनुभृ-
तांशुभमाददाति चंडाधृष्याप्रद्महेमाग्निवर्णायुक्तंतेजोविक्रमैः सप्रतापैः आग्नेयीतिप्राणिनांस्याज्जयायक्षिप्रंसिद्धिंवांछितार्थस्यधत्ते



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मलिनपरुषरूक्षाशापगंधानिष्टांस्थाजनयतिवधवंधंव्याध्यनर्थार्थनाशम् स्फटिकसदृशरूपाभाग्ययुक्तात्स्फुदाशानिधिरिवागनोस्याश्रेयसांस्वच्छव
र्णा २१ अत्रचवायव्यांछायांवर्जयित्वासर्वास्वेवछायासुशुभमशुभंफलमुक्तंतत्कथं शुभफलेयमशुभफलेयमिति तद्दृशाज्ञायते तत्त्वज्ञानमंतरात्म
नः स्वरूपंमालिन्याह शुभफलमिति शुभफलंददातियःसशुभफलदः शुभफलदस्यग्रहस्यंयादशातस्यांअंतरात्मा स्वदेहस्थः परमात्माचि-
त्स्वरूपः तादृगेवशुभोभवति पुरुषस्यतस्यचछायादर्शितग्रहदशाकालेबहुविधमनेकप्रकारंसौख्यंसुखभावमर्थागमंधनलाभंचजनयत्युत्पादयति अ
र्थादिवाशुभदशायांपुरुषस्यांतरात्माप्यशुभोभवति तत्रछायादर्शितग्रहजातातादृगेवफलदा साचासौख्यमनर्थागमंचबहुप्रकारंजनयति मिश्रा
यांमिश्राच यात्रायांचवक्ष्यति निमित्तानुचरंसूक्ष्मंदेहेंद्रियमहत्तरं तेजोत्येतच्छरीरस्थंत्रिकालफलवित्नृणां प्रीतयेनमनोनार्थेनासिद्धावभिनंद
ति तस्मात्सर्वात्मनायात्युरनुमेयंयथामनः शुभाशुभानिसर्वाणिनिमित्तानिस्फुरेकतः एकतश्चमनः शुद्धिःस्तच्छुद्धिर्जयावहा इतिकथितफल
विपाकैरिति ग्रहाणांदशासुयानिफलानिशुभान्यशुभानिवाकथितान्युक्तानितानियः पुरुषोभुंक्ते तस्यपुरुषस्यतद्ग्रहदशावर्ततेइतिज्ञेयं एतदुक्तं

शुभफलददशायांतादृगेवांतरात्माबहुजनयतिपुंसांसौख्यमर्थागमंच कथितफलविपाकैस्तर्कयेद्वर्तमानांपरिणमति
फलोक्तिःस्वप्नचिंतास्ववीर्यैः २२

भवति यादृशंफलंशुभमशुभंवापुरुषस्योपलभ्यते तच्चयस्यग्रहस्यदशायांपतितं सातस्यदशा-
नरस्यवर्ततइतिज्ञेयं एवंवर्तमानांदशांतर्कयेल्लक्षयेदित्यर्थः एवंछयावशेनांतरात्मावशेनफलपंक्तिवशेनवागणितस्यज्ञानकस्यवर्तमानांदशांवि
देत् अथसौरदशायामशुभायांव्यंगत्वमुक्तं नचशुभायांअशुभायामथनैकेषांव्यंगत्वंदृष्टं शुक्रदशायांशुभा यांविधिमाशिरुक्तानचसापि
दृष्टातदर्थमाह परिणमतिफलोक्तिरिति अवीर्यैः वलहीनैः ग्रहैः फलानियानिशुभान्यशुभानिवादत्तानितत्फलोक्तिः फलप्राप्तिः स्वप्नेस्वप्नावस्था
यांपरिणमत्यनुभूयते चिंतायांमनोरथेनवेति केचिच्छुभफलददशायांतादृगेवांतरात्माइतिपठंति पठित्वैवंव्याचक्षते यथाशुभायांदशायामं
तरात्म्यांतर्दशाशुभायदिभवति तदाबहुजनयतिपुंसांसौख्यमर्थागममिति अर्थादिवाशुभायांदशायामशुभांतर्दशाअसौख्यमनर्थागमंचबहु
जनयति अनेनव्याख्यानेनशुभायामशुभांचशुभाशुभानिभवंति मिश्रफलंप्रयच्छंति तन्नेतदिष्यते यस्मादुक्तं एकर्क्षगोर्द्धमपहृत्यददाति
तुस्वमिति अत्रदशापतेःफलमपहृत्यांतर्दशापतिरेवस्वंफलंददातीतिज्ञेयं अन्यथापहृत्येतिनिरर्थकंस्यादिति तस्मात्पूर्वपाठःश्रेयान् द्वितियःप्र

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मादपाठः प्रथमपाठेनविनाछायांशशुभाशुभफलमनुमातुंनशक्यतइति २२ अथैकग्रहदत्तयोः फलयोः सदृशयोर्नाशोभवति भिन्नदत्तानांबहूना
मपिपंक्तिरेवभवतीत्येतद्वसंततिलकेनाह एकग्रहस्येति सर्वाण्येवफलानिनाशमपवर्ज्यंस्वदशायांग्रहः प्रयच्छतीत्युक्तं तत्रैकेनग्रहेणयदासदृशंविरु
द्धफलद्वयंदत्तंभवति तस्मिन्सदृशेतुल्येद्वयोः फलविरोधेसतिनिनाशोभवति तस्यफलद्वयस्यवदेद्ब्रूयात् कीदृशंतद्विरुद्धमित्यत्रोच्यते यथा कश्चि
द्ग्रहः कयापियुक्त्यादशाफलादिनासुवर्णदोभवति सएवान्ययायुक्त्याअष्टवर्गफलयोगफलदृष्टिफलभावफलानामन्यतमेनसुवर्णापहारीभवति
तदाफलद्वयेपिसुवर्णसंबंधोस्तीतिसादृश्यंसुवर्णदानापहारित्वाविति विरोधः एवमेकस्यग्रहस्यसदृशेफलयोः विरोधेनाशंवदेत् नसुवर्णलाभोनचाप
हानिरिति यदधिकंपरिपच्यते ततएकेनापिग्रहेणफलद्वयंदत्तमन्यरूपंतयोः मध्याद्यदधिकं तत्परिपच्यतेभवति यथाकश्चिद्ग्रहोभिर्दिष्टप्रकारद्व
येनसुवर्णदः सएवप्रकारेणैकेनसुवर्णापहारी तदाद्वयोरधिकत्वान्नद्दानस्यसुवर्णंददात्येव नापहरति अथवाप्रकारद्वयेनसुवर्णापहारीप्रकारे
णैकेनसुवर्णदः तदापहरणस्याधिकत्वादपहरत्येव अथवासुवर्णापहारीरूप्यदश्च तथापिद्वे असदृशे असदृशत्वादधिकंपरिपच्यते सुवर्णापहा

एकग्रहस्यसदृशेफलयोर्विरोधेनाशंवदेद्यदधिकंपरिपच्यतेतत् नान्योग्रहःसदृशमन्यफलंहिनस्तिस्वांस्वांदशामुपग
ताःस्वफलप्रदाःस्युः २३

रीरूप्यदश्चभवतीतिकेचित् नान्योग्रहइति अन्येनग्रहेणदत्तंसदृशंविरोध्यपिफलंनान्योग्रहोपिहिनस्ति
पहरति यथाकश्चिद्ग्रहः सुवर्णदोभवत्यन्यश्चसुवर्णापहारी तदातत्रसुवर्णदः स्वदशायांसुवर्णंददाति स्वदशायांसुवर्णापहारीचापहरति अ
नेनैतदुक्तंभवति यथैकग्रहस्यसदृशफलयोः विरोधेसमयजन्मांतरेपिफलनाशंवदेत् अन्यत्रविरुद्धयोरपिफलयोः नाशंनवदेत् यतः सुवर्णदो
ग्रहः स्वामात्मीयांदशामुपगतः प्राप्तः सुवर्णलाभंकरोति सुवर्णापहारीस्वदशामुपगतः प्राप्तः सुवर्णमपहरति एतदष्टकवर्गफलंविनाशाय-
न स्तत्रैकस्यग्रहस्यफलसदृशयोरपितुल्यसंख्ययोः फलयोर्नाशोभविष्यति तथाचभविष्यति तथातत्रैवप्रतिपादयिष्यामइति २३
इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौदशांतर्दशाध्यायोष्टमः ८ अथाष्टकवर्गाध्यायोव्याख्यायते तत्रांतर्दशाफलमिति
पूर्वमेवोक्तंतत्प्रदर्श्याधुनास्थिरस्याष्टकवर्गफलस्यावसरः लग्नाष्टमाः सर्वएवग्रहास्तेभ्यः सकाशादेकैकस्यग्रहस्यचारवशाद्राशौविचरतः ५६
शुभाशुभंफलमष्टकवर्गेनिरूप्यते तत्रादावेवार्काष्टकवर्गंशार्दूलविक्रीडितेनाह स्वादर्कइति यत्रराशौजन्मसमयेपुरुषस्यादित्यः स्थितः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सएवतस्यस्वस्थानमुच्यते. एवमन्येषामपिग्रहाणांज्ञेयम् योयत्रव्यवस्थितः सएवतस्यस्वस्थानंतस्मात्स्वादर्कः प्रथमायबंधुनिधनद्व्याज्ञा
तपोद्यूनगः प्रथमैकादशचतुर्थाष्टमद्वितीयदशमनवमसप्तमेषु १ ११ ४ ८ २ १० ९ ७ एतेषांस्थानानांसंज्ञाःप्रागेवव्याख्याताः अतःपुनर्नो
च्यते एषामेकन्यासएवव्याख्यानमितिसर्वत्रज्ञेयम् एतेषुस्थानेषुगतः स्वात्स्थानादर्कः सूर्यः शुभः इष्टफलदः अर्थादेवान्यस्थानेषुशुभअ
निष्टफलदः यतोवक्ष्यति इतिनिगदितमिष्टंनेष्टमन्यद्विशेषं सर्वत्रज्ञेयम् वक्रात्स्वादिव वक्रादंगारकात्स्वादात्मीयस्थानादिवशुभः येष्वेव-
स्वस्थानात्तेष्वेवांगारकात् १।११।४।८।२।१०।९।७ एतेष्वर्कोभौमाच्छुभः तद्वद्देवरविजात् रविजात्सूर्यपुत्रात्तद्वद्देवयेष्वेवस्थानेषु-
स्वाच्छुभस्तेष्वेवसौरात् १।११।४।८।२।१०।९।७ एतेषुसौरादर्कःशुभइति सर्वत्रानुवर्तते शुक्रात्स्मरांत्यारिषुसएवार्कः स्मरांत्यारिषुसप्तम
द्वादशषष्ठेषुशुक्रात्शुभः ७।१२।६ जीवाद्धर्मसुतायशत्रुषुजीवाद्बृहस्पतिस्थानात् धर्मसुतायशत्रुषु नवमपंचमैकादशषष्ठेषुशुभः ९।५
।११।६ दशत्र्यायारिगः शीतगोः शीतगोश्चंद्रात् दशत्र्यायारिगः दशतृतीयैकादशषष्ठगः शुभः १०।३।११।६ एतेष्वेवांत्यतपः सुतेषुचबुधा

इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृत्तौदशांतर्दशाध्यायोऽष्टमःसमाप्तः ८ अथाष्टकवर्गाध्यायप्रारंभः
स्वादर्कःप्रथमायबंधुनिधनद्व्याज्ञातपोद्यूनगो वक्रात्स्वादिवतद्वदेवरविजाच्छुक्रात्स्मरांत्यारिषु जीवाद्धर्मसुतायशत्रु
षुदशत्र्यायारिगःशीतगोष्वेवांत्यतपःसुतेषुचबुधाल्लग्नात्सबंध्वंत्यगः १ तुशुभः एष्वेवप्रागुक्तेषुचंद्रस्थानेषुदशत्र्यायारिषुच
शब्दात्तथांत्यतपः सुतेषुद्वादशनवपंचमेषु बुधाच्छुभः १०।३।११।६।१२।९।५ लग्नात्सबंध्वंत्यगः सहशब्देनप्रागुक्तानिचंद्रस्थानान्य
नुकृष्यंते तेनांत्यतपः सुतस्थानानीति सर्वत्रपरिभाषातेनैतेषुचंद्रस्थानेषुदशत्र्यायारिषुसबंध्वंत्येषुचतुर्थद्वादशसहितेषु गतोलग्नादुद
याच्छुभः १०।३।११।६।४।१२ तथाचसत्यः स्वात्स्थानाद्दिवसकरस्तृतीयषष्ठांत्यभांत्रिकोणानिहित्वेष्टः ३।६।१२।५ एतानिवर्जयि-
त्वातान्येववराहमिहिरदर्शितानिस्थानानिजातानि १।११।४।८।२।१०।९।७ सौरस्यतुसहजारिसुतांत्यसंज्ञानिहित्वेष्टइत्यनुवर्तते
३।६।५।१२ एतानिवर्जयित्वातान्येववराहमिहिरदर्शितानिस्थानानिजातानि १।११।४।८।२।१०।९।७ चंद्राद्दशमैकादशतृतीयषष्ठोप
गः शुभःसूर्यः १०।११।३।६ जीवात्त्रिकोणयोःपंचमस्तथैकादशश्चेष्टः ९।५।६।११ प्रथमद्वितीयसप्तमचतुर्थनैधनगतानविनाशाशी

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

न्सौम्यादिष्टः सूर्यः १।२।७।४।८ एतानि वर्जयित्वा तान्येव वराहमिहिरप्रदर्शितानि स्थानानि जानानि १०।३।११।६।१२।९।५ कुजस्तु सहशोर्क
पुत्रेण १।११।४।८।२।१०।९।७ दशमैकादशषष्ठतृतीयगोंत्यश्च तुर्यगो लग्नात् १०।११।६।३।१२।४ शुक्रस्थानाद्रविः षट्सप्तमद्वाद
शेषु भवतीष्टः ६।७।१२ तथा च सूक्ष्मजातके केंद्रायाष्टद्विनवस्वर्गः स्वादार्कि भौमयोश्च शुभः षट्सप्तांसेषु सितात् षडायधीधर्मगो जीवा
त् उपचयगोर्कश्चंद्रादुपचयनवमांत्यधीयुतः सौम्यात् लग्नादुपचयबंधुव्ययस्थितः शोभनः प्रोक्तः इति आदित्याष्टकवर्गः १ अथ
चंद्राष्टकवर्गं शार्दूलविक्रीडितेनाह लग्नात्सडिति लग्नात्षट्त्रिदशायगः शशी चंद्रः लग्नादुदयात्सडित्यादिगः षष्ठतृतीयदशमैकादशेषु
स्थानेषु शुभः ६।३।१०।११ सधनधीधर्मेषु चाराच्छशी सहशब्देन प्रागुक्तान्येव स्थानान्यनुक्षिप्यते शशी चंद्रः आराद्भौमादेषेव षट्त्रिद
शायेषु धनधीधर्मसहितेषु द्वितीयपंचमनवमयुक्तेषु शुभः ६।३।१०।११।२।५।९ स्वात्सास्तादिषु आत्मीयस्थानादेषेव षट्त्रिदशायेषु
सास्तादिषु सप्तमप्रथमसहितेषु शुभः शशी ६।३।१०।११।७।१ साष्टसप्तकरवेरादित्यादेषेव स्थानेषु साष्टसप्तकु अष्टमसप्तमसंयु-

लग्नात्सट्त्रिदशायगः सधनधीधर्मेषु चाराच्छशी स्वात्सास्तादिषु साष्टसप्तकरवेः षट्त्र्यायधीस्थोयमात् धीत्र्या
याष्टमकंटकेषु शशिजाज्जीवाद्व्ययायाष्टगः केंद्रस्थश्च सितात्तु धर्मसुखधीत्र्यायास्पदानंगगः २ ७ ७

क्तेषु ६।३।१०।११।८।७ शुभः षट्त्र्यायधीस्थोयमात् यमात्सौरात् षट्त्र्यायधीस्थः षष्ठतृतीयैकादशपंचमस्थानस्थः शुभः ६।३
११।५ धीत्र्यायाष्टमकंटकेषु शशिजात् शशीजाद्बुधाद्बुधस्थानाद्धीत्र्यायाष्टमकंटकेषु पंचमतृतीयैकादशाष्टमकेंद्रेषु शुभः शशी ५।३।
११।८।१।४।७।१० जीवाद्व्ययायाष्टगः केंद्रस्थश्च जीवाद्गुरुस्थानाद्व्ययायाष्टगः केंद्रस्थश्च द्वादशैकादशाष्टमकेंद्रस्थश्च शुभश्चंद्रः १२
११।८।१।४।७।१० सितात्तु धर्मसुखधीत्र्यायास्पदानंगगः सिताच्छुक्राद्धर्मसुखधीत्र्यायास्पदानंगगेषु नवमचतुर्थपंचमतृतीयैकाद
शमसप्तमेषु शुभः ९।४।५।३।११।१०।७ तथा च सत्यः षष्ठैकादशसप्तमतृतीयदशमादिसंस्थितश्चंद्रः स्वादिष्टः ६।११।७।३।
१०।१ सौरस्य तु सहजारिसुतायसंस्थितश्च शुभः ३।६।५।११ रिपुनिधनसहजासप्तमदशमैकादशसंस्थितः सूर्यात् ६।८।३।७।१०।
११ लग्नात्तृतीयदशमारिलाभसंस्थिः शुभश्चंद्रः ३।१०।६।११ भ्रातृसुतकर्मधनलाभधर्मरिपुराशिगः कुजादिष्टः ३।५।१०।२।११।९।६ ५७

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

जीवात्तृतीयषष्ठद्विनवमस्फनवर्जितेष्विष्टः ३।६।२।९।५ एतानिवर्जयित्वानान्येववराहमिहिरपठितानिस्थानानिजातानि १२।११।८।१।४
।७।१० प्रथमद्वितीयषष्ठाष्टमांत्यवर्जेषु भार्गवादिष्टः १।२।६।८।१२ एतानिवर्जयित्वानान्येववराहमिहिरपठितानिस्थानानिजातानि ३।४।
५।७।९।१०।११ षष्ठधननवमपश्चिमवर्ज्येषुबुधात्सशस्तस्य ६।२।५।९।१२ एतानिवर्जयित्वानान्येववराहमिहिरपठितानिस्थानानिजा
तानि १।३।४।७।८।१०।११ तथासूक्ष्मजातके शशभृदुपचयेषुलग्नात्साधुमुनिः स्वात्कुजासनवधीस्थः सूर्यात्साष्टस्मरगस्त्रिषडायस्फ
तेशुसूर्यस्फनात् शुक्लेंद्वत्रिस्फनायाष्टमगगुरोर्व्ययभवाष्टकेंद्रेषु त्रिचतुःस्फननवदशसप्तमायगश्चंद्रमाः शुभः शुक्रात् इतिचंद्राष्टकवर्गः २
अथभौमाष्टकवर्गंशार्दूलविक्रीडितेनाह वक्रस्तूपचयेष्विनादिति वक्रोंगारकः इनादादित्यादुपचयंषुत्रिषडेष्वेकादशदशमेषुसतनयेषु पंचम
स्थानसहितेषुशुभः ३।६।१०।११।५ आद्याधिकेषूदयाद्वक्रः शुभः उदयाल्लग्नादेवेवोपचयेष्वाद्याधिकेषुप्रथमस्थानयुक्तेषुशुभः ३।६
।१०।११।१ चंद्राद्विगिवफलेषु चंद्रस्थानादेवेवोपचयेषुदिग्विफलेषुदशमस्थानफलवर्जितेषुतेनदशमस्थानेनसुभंनाग्न्यशुभंफलंकरोतीत्यर्थः

वक्रस्तूपचयेष्विनात्सतनयेष्वाद्याधिकेषूदयाच्चंद्राद्दिग्विफलेषुकेंद्रनिधनप्राप्त्यर्थगःस्वाच्छुभः धर्मायाष्टमकेंद्रगोर्कत
नयाज्ज्ञात्षट्त्रिधीलाभगः शुक्रात्सड्व्ययलाभमृत्युषुगुरोः कर्मात्यलाभारिषु ३

३।६।११ एतेषुशुभः केंद्रनिधनप्रा-
प्त्यर्थगः स्वाच्छुभः स्वादात्मीयस्थानात्केंद्रनिधनप्राप्त्यर्थगः केंद्राष्टमैकादशद्वितीयगःशुभः १।४।७।१०।८।११।२ धर्मायाष्टमकेंद्रगोर्कत
नयात् सौरात्धर्मायाष्टमकेंद्रगः नवमैकादशाष्टमकेंद्रगतः शुभः ९।११।८।१।४।७।१० ज्ञात्सट्त्रिधीलाभगः ज्ञात्बुधात्षट्त्रिधीलाभ
गः षष्ठतृतीयपंचमैकादशगतः शुभः ६।३।५।११ शुक्रात् षट्व्ययलाभमृत्युषुशुक्रस्थानात् षष्ठद्वादशैकादशाष्टमेषुशुभः ६।१२
।११।८ गुरोःकर्मात्यलाभारिषुगुरोःजीवाद्दशमद्वादशैकादशषष्ठेषुशुभः १०।१२।११।६ तथान्यसत्यः द्वादशपंचमनवमतृतीयषष्ठान्विना
कुजस्त्विष्टःस्वस्थानात् १२।५।९।३।६ एतानिवर्जयित्वानान्येववराहमिहिरपठितानिस्थानानिजातानि १।४।७।१०।८।११।२ सौरस्य
तुनवमाप्त्यधिकेषुअनयेषु एष्वेवद्वितीयस्थानंविनानवमाप्त्यधिकेषु ११।८।९।१।४।७।१० भौमस्तृतीयपंचमदशमैकादशरिपुस्थितः सू
र्यादिष्टः ३।५।१०।११।६ चंद्रान्मध्यमोदशमषष्ठसहजलाभेषु १०।३।६।११ दशमैकादशषष्ठांत्यगः कुजः भूमिजः पूजितोगुरुस्थानात्

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

१०।११।६।१२ षष्ठैकादशपंचमतृतीयगश्शुभः सौम्यात् ६।११।५।३ अंत्यायाष्टमषष्ठगः कुजः शुभोनेनोगःकात् १२।११।८।६ प्रथमै-
कादशदशरिपुसहजोपगतश्चहोरायाः १।११।१०।६।३ तथाचसत्यजातके भौमः स्वादायस्वाष्टकेंद्रगः व्यायषट्सुफलेषु बुधात्ज्ञाद्
शायशत्रुव्ययेष्विनादुपचयस्थतेषु दयादुपचयतनुषुत्रिषडायेषु विंदुतः सप्तदेशमः चंद्रस्थानादुपचयेषु दशमवर्जितेषु शुभः दशमेशुभो
पिनभवति ३।६।११ भृगुनोंत्यषडायेषु १२।६।११ असितात्केंद्रायनवमस्थेषु १।४।७।१०।११।९।८ इतिभौमाष्टकवर्गः ३
अथबुधस्याष्टकवर्गंशार्दूलविक्रीडितेनाह द्युयाद्यायाष्टतपइति इंदुजोबुधः भृगुजाच्छुक्रात् द्युयाद्यायाष्टतपःस्थखेषु द्वितीयप्रथ-
मैकादशाष्टमनवमचतुर्थेषु सत्र्यात्मजेषु तृतीयपंचमयुक्तेषु शुभः २।१।११।८।९।४।३।५ साज्ञास्तेषु यमारयोः एवंवद्युयाद्यायाष्ट-
तपःस्थखेषु साज्ञास्तेषु दशमसप्तमसहितेषु यमारयोः शनैश्चरांगारकयोः यमात् २।१।११।८।९।४।१०।७ आरात्छुभः २।१।११।८
।९।४।१०।७ व्ययरिपुभास्यष्टगोवाक्पतेः वाक्पतेः जीवात् द्वादशषष्ठैकादशाष्टमगतः शुभः १२।६।११।८ धर्मायारिसुतव्ययेषुसवि

द्युयाद्यायाष्टतपःस्थखेषु भृगुजात्सत्र्यात्मजे विंदुजः साज्ञास्तेषु यमारयोर्व्ययरिपुभास्यष्टगो वाक्पतेः धर्मा
यारिसुतव्ययेषु सवितुः स्वात्साद्यकर्मत्रिगः षट्स्वायाष्टसुखास्पदेषु हिमगोः साद्येषु लग्नाच्छुभः ॥ ४ ॥ ॥

तुः सूर्यान्नवमैकादशषष्ठपंचमद्वादशेषु शुभः ९।११।६।५।१२ स्वात्साद्यकर्मत्रिगः स्वादात्मीयस्थानादेवंवधर्मादिषुस्थानेषु साद्यक
र्मत्रिकेषु प्रथमदशमतृतीयसहितेषुगतः शुभः ९।११।६।५।१२।१।१०।३ षट्स्वायाष्टसुखास्पदेषु हिमगोश्चंद्रात् षष्ठद्वितीयैकादशा
ष्टमचतुर्थदशमेषु शुभः ६।२।११।८।४।१० साद्येषु लग्नाच्छुभः एवंवषष्ठादिषुस्थानेषु साद्येषु प्रथमस्थानसहितेषु लग्नाच्छुभः ६।२।
११।८।४।१०।१ तथाचसत्यः स्वात्स्थानाच्छशितनयो द्वितीयसप्तमचतुर्थनिधनानि हित्वेष्टः २।७।४।८ एतानिवर्जयित्वातान्येववरा
हमिहिरपठितानि स्थानानिज्ञातानि १।३।५।६।९।१०।११।१२ सूर्यस्यतुलाभार्गसुतांत्यनवमस्थः ११।६।५।१२।९ सुतसहजषष्ठ
पश्चिमवर्जितेषु मंडलेषु बुधस्त्विष्टः सौगराश्यांस्थानादविक स्याच्छाल्लानियमेन ५।३।६।१२ एतानिवर्जयित्वातान्येववराहमिहिरपा
ठितानिस्थानानिजातानि १।११।४।२।८।९।१०।७ लग्नाच्छुक्रांयेषु प्रशस्थानेषुचद्रजन्य येषुस्थानेषु लग्नाच्छुक्रः शुभस्तेष्वेव-



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्थानेषु शुक्रस्थानाद्बुधः शुभो भवति शुक्राष्टकवर्गः पठ्यते लग्नादिष्टशुक्रोऽस्त्रिसनमदशमपश्चिमर्गान्हित्वा ६।७।१०।१२ एतानि
स्थानानि वर्जयित्वा तान्येव वराहमिहिरपठितानि स्थानानि जातानि १।२।३।४।५।८।९।११ एतेषु स्थानेषु शुक्रस्थानाच्छुभो बुधः
अंत्यायांत्याष्टमशत्रुमेषूर्जाद्बुधः श्रेष्ठः १२।११।८।६ दशमस्वलाभपष्टाष्टमेषु चंद्राद्धुभस्त्वतुर्यं च १०।२।११।६।८।४ लग्नाद्वैष्टोधू
नोत्यनवमसुतसहजवर्ज्येषु ७।१२।९।५।३ एतानि वर्जयित्वा तान्येव वराहमिहिरपठितानि स्थानानि जातानि २।६।१०।११।८।
४।१ एतेषु लग्नाच्छुभः तथा च स्वल्पजातके सौम्योऽत्यषट्नवायात्मजेष्विना १२।६।९।११।५ स्वात्रिनतु ३।१ दशफतेषु १०
चंद्राद्द्विस्त्रिसुदशायाष्टसुखगतः २।६।१०।११।८।४ सादिषु विलग्नात् प्रथमसुखायद्विनिधनधर्मेषु १।४।११।२।८।९ सि-
ताश्रीधीसमेनेषु ३।५ साधास्मरेषु १०।७ सौरारसौर्व्यायारिषु वसुषु १२।११।६।८ गुरोः इति बुधस्याष्टकवर्गः ४ अथ जीवस्या
ष्टकवर्गं शार्दूलविक्रीडितेनाह दिगिति दिक्स्वाद्याष्टमदायबंधुषु कुजादंगिराइति अंगिराजीवः कुजादंगारकाद्दशमद्वितीयप्रथमाष्टम

दिक्स्वाद्याष्टमदायबंधुषु कुजात्स्वात्सत्रिके वांगिराः सूर्यात्सत्रिनवेषु धीस्वनवदिग्लाभारिगो भार्गवात् ॥

सप्तमैकादशचतुर्थेषु शुभः १०।२।१।८।७।११।४ स्वात्सत्रिके वांगिराः स्वादात्मीयस्थानादंगिराः गुरुः पूर्वोक्तेषु दिक्स्वाद्यादिषु सत्रिकेषु तृ
तीयस्थानसहितेषु शुभः १०।२।१।८।७।११।४।३ सूर्यात्सत्रिनवेषु गुरुः शुभः सूर्यादादित्यादेष्वेव स्थानेषु प्रागुक्तेषु सनपस्तृतीयेषु तृतीय
नवमस्थानादिकेषु शुभः १०।२।१।८।७।११।४।३।९ धीस्वनवदिग्लाभारिगो भार्गवात् भार्गवाच्छुक्रात् पंचमद्वितीयनवमदशमै-
कादशषष्ठेषु शुभः ५।२।९।१०।११।६ जायायार्थनवात्मजेषु हिमगोः हिमगोश्चंद्रात् सप्तमैकादशद्वितीयनवमपंचमेषु शुभः ७।११।
२।९।५ मंदात्रिषट्धीव्ययेमंदात्सौरात् तृतीयषष्ठपंचमद्वादशेषु शुभः ३।६।५।१२ द्विधीषट्स्वसुखायपूर्वनवगां ज्ञाद्गुरुः ज्ञाद्बुधा
द्दशमपंचमषष्ठद्वितीयचतुर्थैकादशप्रथमनवमेषु शुभः १०।५।६।२।४।११।१।९ ससप्तरस्वोदयात् उदयाल्लग्नादेष्वेव स्थानेषु सप्तमे-
षु सप्तमस्थानसहितेषु शुभः १०।५।६।२।४।११।१।९।७ तथा च सत्यः येषु बुधस्य शशांकस्तेषु गुरुः सुखलस्वकात्स्थानात् चंद्राष्ट
कवर्गः पठ्यते षष्ठधननवमपश्चिमवर्ज्येषु धात्मशास्त्रश्च ६।२।९।१२ एतानि स्थानानि वर्जयित्वा जातानि १।३।४।५।७।८।१०।११

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अत्रपंचमद्वितीययोः स्थानयोः वराहमिहिरेणसहभेदः अत्रचवराहमिहिरेणयवनेश्वरेणतमंगीकृत्यद्वितियस्थानस्यशुभत्वमंगीकृतम् तं
थाचयवनेश्वरः स्वस्थानगः स्थानस्यवर्णमानमामिंद्वितीयेचगुरुःकरोति एवंद्वितीयेचशुभः विवाददैन्याध्वगदस्त्रिकोणेतस्मात्पंचमेनशु-
भः एवेवार्कादिष्टोनवमाप्त्यधिकेषुभवनेषु १।३।४।५।७।८।९।१०।११ अत्रापिपंचमद्वितीययोः वराहमिहिरेणयवनेश्वरमतमंगीकृतं त
थाचयवनेश्वरः स्थानेरवेर्बुद्धिसत्त्वधनामिंकरोति जीवोधनदोद्वितीयेएवंद्वितीयेशुभत्वाद्वराहमिहिरेणांगीकृतं रुजापीडाध्वदारिद्र्यसू-
रिःस्यात्पंचमेतस्मात्पंचमेनशुभः आत्मसहजेषु सहजभवनंविनाकुजाच्चगुरुरिष्टः १।४।५।७।१०।११ अत्रापिपंचमद्वितीययोः वरा
हमिहिरेणसहभेदः अत्रापियवनेश्वरः गुरुःकुजस्थानगतोऽरिहंताद्वितीयगस्तुधनिहर्षदाता तस्माद्वराहमिहिरेणद्वितीयस्थानमंगीकृतम्
जामित्रगोव्याध्यरिशोककारीएवंसप्तमस्थानंनांगीकृतं द्वादशारिपुपंचमतृतीयसंज्ञेशुभः सौरात् १२।६।५।३ दशमैकादशनवमद्विती
यषट्पंचमेषुभृगोः जीवइष्टः १०।११।९।२।६।५ चंद्राज्जामित्रनवमस्तनलाभकोशार्शेषुगुरुः शुभः ७।९।५।११।२ प्रथमद्वितीयपं

जायायार्थनवात्मजेषुहिमगोर्मंदाल्लिषट्धीव्ययेदिग्धीषट्स्वस्वरवायपूर्वनवगोज्ञात्सस्मरश्चोदयात् ५
लग्नादास्तनलाभरंध्रनवगःसौम्यःशशांकात्सितःस्वात्माज्ञेषुस्वत्रिधीनवदशाच्छिद्रानिगःसूर्यजात् ॥ ॥

चमचतुर्थधर्मारिलाभदशमस्थः सौम्याद्गुरुरिष्टः १।२।५।४।९।६।११।११ जीवोलग्नादेवमिष्टः सजामित्रः १।२।५।४।९।६।११
१०।७ तथाचस्वल्पजातके जीवोभौमाद्यायाष्टकेंद्रगो २।११।८।१।४।७।१०कोंत्सधर्मसहजेषु २।११।८।१।४।७।१०।९।३ स्वात्मत्रिके
षु २।११।८।१।४।७।१०।३ शुक्रान्नवदशलाभस्वधीरिपुषु ९।१०।११।२।५।६ शशिनःस्मरत्रिकोणार्थलाभगः ७।९।५।२।११-
स्त्रिरिपुधीव्ययेषुयमात् ३।६।५।१२ नवदिक्स्वायधीस्वायशत्रुषुज्ञात् ९।१०।४।१।५।२।११।६ त्सकामगोलग्नात् ९।१०।४।१।५
२।११।६।७॥ इतिजीवाष्टकवर्गः ५ अथशुक्रस्याष्टकवर्गंशार्दूलविक्रीडितेनाह लग्नादिति सितः शुक्रः लग्नादास्तनलाभरंध्रन
वगः शुभः लग्नात्प्रभृतिस्तनस्थानंपंचमं यावत्तथालाभरंध्रनवगःसितः शुभः तेषुप्रथमद्वितीयतृतीयचतुर्थपंचमैकादशाष्टनवमेषुल-
ग्नाच्छुक्रः शुभः १।२।३।४।५।११।८।९ सौम्यः शशांकात्सितः शशांकाचंद्रादेवमेवस्थानेषु सौम्येषु सव्ययेषुद्वादशस्थानाधिकेषुशुभः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

१।२।३।४।५।११।८।९।१२ स्वात्साङ्गेषु स्वादात्मीयस्थानाद्वेवेस्यानुषुसाङ्गेषु दशमस्थानाधिकेषु शुभः १।२।३।४।५।११।८।९।१०।
स्वरवत्रिधीनवद्शाछिद्राप्तिगः सूर्यजान सौराच्चतुर्थतृतीयपंचमनवमदशमाष्टमैकादशेषु शुभः ४।३।५।९।१०।८।११ रंध्रायव्ययगोरवेः
रवेरादित्यादष्टमैकादशद्वादशेषु शुभः ८।११।१२ नवदशमास्यष्टधीस्थोगुरोः जीवान्नवमदशमैकादशाष्टमपंचमेषु शुभः ९।१०।११।८।५
ज्ञान्द्रीत्र्यायनवारिगः ज्ञात्बुधान्पंचमतृतीयैकादशनवमषष्ठेषु शुभः ५।३।११।९।६ त्रिनवषट्सुत्रायसांत्यः कुजात् कुजाङ्गोमातृतीयनवम
षष्ठपंचमैकादशेषु सांत्येषु अंत्येन द्वादशेन सहितेषु स्थानेषु शुक्रः शुभः ३।९।६।५।११।१२ तथा च सत्यः स्वस्थानात्भृगुतनयः षट्सप्तम
पश्चिमेतरेष्विष्टः ६।७।१२ एतानि वर्जयित्वा नान्येव वराहमिहिरपठितानि स्थानानि जानानि १।२।३।४।५।८।९।१०।११ रिपुपत्निकर्मवर्ज्येषु सि
तस्त्वंद्रात्तु शुक्लो नृणां ६।७।१०। एतानि वर्जयित्वा नान्येव वराहमिहिरपठितानि जानानि १।२।३।४।५।९।८।११।१२ अंत्योपांत्याष्टमगः सू-
र्यादिष्टस्तु भार्गवः कथितः १२।११।८ सौमादंत्योपांत्यतृतीयनवमस्तु तनरिपुशशिगश्चैवं १२।११।३।९।५।६ दशमैकादशनिधनत्रिकोणगस्ते

रंध्रायव्ययगोरवेर्नवदशमास्यष्टधीस्थोगुरोर्ज्ञान्द्रीत्र्यायनवारिगस्त्रिनवषट्सुत्रायसांत्यः कुजात् ५ मंदः
स्वात्रिस्तनायशत्रुषु शुभः साङ्गांत्यगो भूमिजात्केंद्रायाष्टधने विनादुपचयेष्वाद्ये स्तरवेश्चोदयात् ॥ ॥अर्थः॥

स्थोभृगुजीवात् १०।११।८।५।९। सौम्यात्सुतधर्मलाभसहजारिसंज्ञेषु ५।९।११।३।६ लग्नादिष्टः शुक्रो रिपुसप्तमदशमपश्चिमा
नुहित्वा ६।७।१०।१२ एतानि वर्जयित्वा नान्येव वराहमिहिरपठितानि स्थानानि जानानि १।२।३।४।५।८।९।११ आद्यद्वितीयरिपुसप्तमां
त्यवर्ज्येषु सौराच्च १।२।६।७।१२ एतानि वर्जयित्वा नान्येव वराहमिहिरपठितानि स्थानानि जानानि ३।४।५।८।९।१०।११ तथा च स्व
ल्पजातके शुक्रो लग्नादासुतनवाष्टलाभेषु १।२।३।४।५।९।८।११ सव्ययश्चंद्रात् स्वात्साङ्गेषु रविसुतात्त्रिधीसुखाप्तिनवकर्मरंध्रेषु
वस्वंत्यायेषु वक्रात् त्रिवदिग्लाभाष्टधीस्थितो जीवात् ज्ञात्रिसुतनवायारिव्यायसुतापोक्लिमेषु कुजादिनि शुक्राष्टकवर्गः ६. अथ सौरस्याष्ट
कवर्गं शार्दूलविक्रीडितेनाह मंदः स्वात्रिसुतायशत्रुषु शुभ इति मंदः सौरः स्वादात्मीयस्थानात्तृतीयपंचमैकादशषष्ठस्थानेषु शुभः स्वा
ङ्गांत्यगो भूमिजात् भूमिजाङ्गो मादेषेव प्रागुक्तेषु साङ्गांत्येषु गतः दशमद्वादशसहितेषु शुभः ३।५।११।६।१०।१२ केंद्रायाष्टधने

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

षिनात् इनात्सूर्यात्केंद्रैकादशाष्टमद्वितीयेषुशुभः १।४।७।१०।११।८।२ उपचयेष्वाद्येरूरवेचोदयात् उदयाल्लग्नात्तृतीयषष्ठदशमै-
कादशप्रथमचतुर्थेषुशुभः ३।६।१०।११।१।४ धर्मायारिदशांत्यमृत्युसुबुधात् बुधाद्बुधस्थानान्नवमैकादशषष्ठदशमद्वादशाष्टमेषुशु-
भः ९।११।६।१०।१२।८ चंद्रात्त्रिषड्लाभगः चंद्रस्थानात्तृतीयषष्ठैकादशेषुशुभः ३।६।११ षष्ठांत्यायगतः सितात् शुक्रस्थानात् ष-
ष्ठद्वादशैकादशेषुशुभः ६।१२।११ सूरगुरोः मात्यंत्यधीशत्रुषु सूरगुरोः जीवादेकादशद्वादशपंचमषष्ठेषुशुभः ११।१२।५।६ तथाचस-
त्यः एकादशपंचमषष्ठगोर्कजः स्वाच्छुभस्तृतीयेच ११।५।६।३ स्थानान्निशाकरस्यतुपंचमवर्ज्येष्वथेष्वेव १।३।६ स्वेष्वात्मनोरविस्ते
षु भास्करिस्तादृशो रविस्थानात् आदित्याष्टकवर्गेपठ्यते स्वात्स्थानाद्दिवसकरस्तृतीयषष्ठांत्यभत्रिकोणानिहिलेष्टः ३।६।१२।५।९
एतानिहित्वाजानानि १।२।४।७।८।१०।११।८ अत्रवराहमिहिरादभ्यधिकंनवमंस्थानंनंच्चयवनेश्वरविरोधित्वाद्वराहमिहिरेणेत्युक्तं
तथाचयवनेश्वरः पापप्रदंनिंनवमेविधत्तइति जीवादिष्टः षट्पंचमपश्चिमैकादशस्थश्च ६।५।१२।११ भानुसूनविजयलाभांत्यकर्मगः

धर्मायारिदशांत्यमृत्युसुबुधाच्चंद्रात्त्रिषड्लाभगः षष्ठायांत्यगतसितात्सूरगुरोःमात्यंत्यधीशत्रुषु ७ ॥६॥

सुष्कलोनृणां मोमस्थानात्सौरिः ३।५।६।११।१२।१० षष्ठांत्योपांत्यगः शुक्रात् ६।१२।११ दशमैकादशषष्ठाष्टमांत्यनवमोर्कजः सौम्यात्
१०।११।६।८।१२।९ स्थानादिष्टोलग्नाच्छुभस्स्तलग्नाद्यथासूर्यः आदित्याष्टकवर्गेपठ्यते दशमैकादशषष्ठतृतीयगोलग्नगश्चतुर्थश्चलग्ना-
त् १०।११।६।३।१।४ तथाचस्वल्पजातके स्वात्सौरस्त्रिकृताथारिगः ३।५।११।६ कुजादंत्यकर्मसहितेषु ३।५।११।६।१२।१० स्वाया-
ष्टकेंद्रगोर्का २।११।८।१।४।७।१० च्छुक्रात्सषष्ठांत्यलाभेषु ६।१२।११ त्रिषडायगः शशांका ३।६।११ दुदयात्सरूरवाद्यकर्मगो ३।६।११
४।१।१० धगुरोः सूनषट्व्ययायगो ५।६।१२।११ ज्ञाद्व्ययायारिपुद्विङ्नवाष्टस्थः १२।११।६।१०।९।८ इतिसौरस्याष्टकवर्गः ७
अथाष्टकवर्गफलनिरूपणार्थमालिन्याह इतिनिगदितमिति इत्यनेनोक्तेनप्रकारेणयन्निगदितसुक्तंतदिष्टंनेष्टमन्यत् यदन्यंनिग-
दितंतत्सर्वमदिष्टमशोभनं एतदुक्तंभवति स्वादर्कः प्रथमायबंधुनिधनइत्यनेनपाठेनयान्युक्तानिस्थानानितेषांश्रेष्ठंफलं विशेषादधि-
कफलविपाकमेवमिष्टानिष्टयोः फलयोः विशेषात्संशोधनादधिकमिष्यते तत्फलविपाकंभवति एतज्जन्मभात् जन्मकालेयत्रस्थानेग्र-



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

हाः स्थिताः तस्मात्स्थानाच्छुभाशुभानि फलानि प्रयच्छंतीति तया तत्कालाक्रांतराशितः एतदुक्तं भवति यानि शुभस्थानान्याचार्येण पठितानि तानि
बिंदूपलक्षितानि कार्याणि यान्यशुभानि तानि रेखोपलक्षितानि ततइष्टानिष्टयोः विशेषमंतरं कृत्वाऽवशिष्टस्य फलस्य पंक्तिरिति यत्र बिंदुष्टकं तत्र
तत्र शुभफलं संपूर्णम् यत्र च षड्बिंदवस्तत्र पादोनं फलं यत्र च बिंदुचतुष्टयं तत्रार्द्धफलं यत्र बिंदुद्वयं तत्र पादफलं अशुभफलस्यैवं रेखाभिः क
ल्पना कार्या तत्र चानिमिषपरमांशके विलग्न इत्यत्र प्रयोगे जातस्यांगारकस्याष्टकवर्ग उदाह्रियते तत्राचार्यपठितानि स्थानानि बिंदूपलक्षितानि
कार्याणि अपठितानि अशुभानि स्थानानि रेखोपलक्षितानि कार्याणि तद्यथा ग्रहसंस्था मीनलग्नगतः शुक्रः मेषे द्वितीयस्थानस्थोर्कः तृती
ये वृषे चंद्रबुधौ चंद्रमस्थाने कर्कटस्थो जीवः अष्टमे तुलायां शनैश्चरः एकादशे मकरस्थो भौमः अनया ग्रहसंस्थया प्रदर्श्यते न्यासः वक्रस्तूप
चये धिनालसतनये घायाधिके सूदया च्चंद्राद्द्विफलेषु केंद्रनिधनप्रान्त्यर्ष्यगः स्याच्छुभः धर्मायामकेंद्रगोर्कतनयाज्ञावषट्त्रिधीलाभगः शु
क्रात्सउव्ययलाभ १२ मृत्स्वुकुरोः कर्मास्तलाभारिषु ९ अष्टकुंडलिकान्यासः अथ शुभाशुभफलविशेषः क्रियते तत्र मेषे रेखापंचकं बिंदु

इति निगदितमिष्टं नेष्टमन्यद्विशेषादधिकफलविपाकं जन्मभात्तत्र दद्युः उपचयगृहमित्रस्वोच्चगैः पुष्टमि
ष्टं त्वपचयगृहनीचारातिगैर्नेष्टसंपत् ८ इत्यष्टकवर्गः

त्रयं च जातं रेखात्रयं बिंदुत्रयं चापास्य द्वे रेखे जाते तस्मादे
तद्विधे योगे जातस्य सदैव चारवशात् मेषस्थोंगारकोष्टभागद्वयेनाशुभः वृषे रेखापंचकं बिंदुत्रयं जातं रेखात्रयं बिंदुत्रयं चापास्य द्वे रेखे जाते
तस्माद्वृषस्थो भौमोष्टभागद्वयेनाशुभो भवति मिथुने रेखापंचकं बिंदुत्रयं च जातं रेखात्रयं बिंदुत्रयं चापास्य द्वे रेखे जाते तस्मिन्मिथुनस्थो
भौमोष्टभागद्वयेनाशुभः कर्कटे बिंदुचतुष्टयं रेखाचतुष्टयं च जातम् तत्र न किंचिदवशिष्यते तेन तत्स्थानं न शुभं नाप्यशुभम् सम
त्वान्मध्यमः सिंहे बिंदुपंचकं रेखात्रयं च जातं रेखात्रयं बिंदुत्रयं चापास्य बिंदुद्वयं जातं च तस्मात्तस्य सदैव सिंहस्थो भौमोष्टभागद्वये
न शुभो भवति कन्यायां रेखाषट्कं बिंदुद्वयं च जातं बिंदुद्वयं रेखाद्वयं चापास्य रेखाचतुष्टयं जातं तस्मात्कन्यास्थो भौमोष्टभागचतुष्टये
नाशुभः तुलायां रेखात्रयं बिंदुपंचकं च जातं तत्र रेखात्रयं बिंदुत्रयं चापास्य बिंदुद्वयं जातं तेन तुलास्थो भौमोष्टभागद्वयं न सदैव शुभः
वृश्चिके रेखासप्तकमेको बिंदुः जातः तत्र बिंदुं रेखां चापास्य रेखाषट्कं जातं तस्माद्वृश्चिकस्थो भौमोष्टभागषट्केनाशुभः धनुषि रेखाषट्कं-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri




बिंदुद्वयंचजातं तत्ररेखाद्वयंबिंदुत्रयंचापास्यरेखाचतुष्टयंचजातं एवमष्टमभागचतुष्टयेधन्विस्थोभौमो भौमसदेवाशुभः मकरेरेखात्रयंबिंदुपंचकंचजातं तेनमकरस्थोभौमोष्टमभागद्वयेनशुभः कुंभेरेखाचतुष्टयं बिंदुत्रयंचजातं अत्रचंद्रस्थानात् दशमस्थानं भौमस्यसमत्वादष्टमोबिंदुर्नजातस्तस्माद्रेखात्रयं बिंदुत्रयंचापास्य एकारेखाजातातस्मात्कुंभस्थोष्टमभागेनैकेनाशुभः मीनेरेखापंचकंबिंदुत्रयंच जातं रेखात्रयंबिंदुत्रयंचापास्यरेखाद्वयंचजातं तस्मान्मीनस्थोभौमोष्टभागद्वयेनाशुभः अस्य तोशुभदोस्थापना एवंशुभाशुभान्येकीकृत्याष्टौफलानिभवंति तेषांसंशोधनंकृत्वायदवशिष्यते तदादेश्यं यत्ररेखाचतुष्टयंबिंदुचतुष्टयंचभवति तत्रसमंमध्यस्थोग्रहोभवति यत्ररेखाष्टकंत त्रातीवाशुभः यत्रबिंद्वष्टकंतत्रातीवशुभः एवंजन्मकालाक्रांतराशिवशेनसर्वग्रहाणामष्टकवर्गः कार्यः तथाचबादरायणः एकेनयःशुभःस्यात्षड्भिःस्थानैःसपापदोभवति यस्तुचतुर्भिर्निर्दिष्टःसर्व फलेकल्पनाप्येवं ननुपूर्वमुक्तम् एकग्रहस्यसदृशेफलयोर्विरोधेनाशंवदेद्यदधिकंपरिपच्यतेतत् इतिनिगदितमिष्टंनेष्टमन्यद्विशेषादितिपुनरुक्तम् उच्यते नैतत्पुनरुक्तम् अष्टकवर्गंविनायदुक्तमेकग्रहस्यसदृशफलयोर्विरोधइति तत्रसदृशयोःफलयोर्विरोधेनाशोविज्ञेयः यथासएवग्रहः कयापियुक्त्यासुवर्णदोभवति सएवयत्नयंतरेणसुवर्णापहारीतदानसुवर्णदोभ वति नसुवर्णापहारीचेति यदधिकंपरिपच्यतेतत्रतत्रापि यदिकारणद्वयेनसुवर्णापहारीभवति कारणेनैकेनसुवर्णदस्तथापिसुवर्णाप हारीभवति नसुवर्णदः अथकारणद्वयेनसुवर्णदः कारणेनैकेनसुवर्णापहारी तथापिकारणद्वयस्याधिक्यात्सुवर्णदएव एवंतत्रस दृशेफलयोर्विरोधेनाशंवदेन्नाशसदृशयोः इहतुपुनः सदृशेपिफलयोर्विरोधेन्नाशएवेति तद्यथा बादरायणयवनेश्वरादिभिरष्टकवर्गे भिहितं अस्यग्रहस्यस्थानादयंग्रहः स्वस्मिन्स्थानेतिष्ठमानइमानिशुभान्यशुभानिफलानिप्रयच्छतीति तत्रासदृशान्यपियदितानिफ लानिभवंति तथापितेषांशुभाशुभविरोधादेवनाशंवदेत् विशेषादधिकफलविपाकंजन्मभाजन्तद्युरिति यथाकश्चिद्ग्रहः केनचित्कारणे नसुवर्णदोभवत्यपरेणरूप्यापहारीच तथाप्यसदृशयोरपिफलयोर्विरोधंदानहरणात्मकेनशुभोनाप्यशुभइतिकल्पनीयः एवंस्था



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नाष्टकाद्यत्रस्थाने बहुभिः शुभोपि भवत्यसेनाशुभः तत्रशुभाशुभफलविशेषं कृत्वा शुभमेकं कल्पनीयम् अनेनैवप्रकारेणस्थानसंज्ञामात्रेण
स्थानशुभाशुभत्वमेवोक्तं नपृथक्फलनिर्देशोयवनेश्वरादियावत् यद्येवंचाष्टकवर्गप्रधानंनसंहितायांगोचरफलेचंद्रस्थानात् किमितिपृथक्फ
लनिर्देशोवराहमिहिरेणकृतः जन्मन्यायासदोर्कइत्येवमादि अत्रोच्यते तस्मादष्टकवर्गफलविशेषाद्यदतिरिच्यतेतदेववक्तव्यमिति तदेवपू
र्वप्रत्ययनार्थमतिप्रसिद्धत्वाद्गोचरस्यान्यमतमेवांगीकृत्योक्तं तथाच यात्रायांतेनैवोक्तं यस्यगोचरफलप्रमाणतातस्यवेधफलमिष्यतेनवा
प्रायशोबहुशुसंमतंत्विदंस्थूलमार्गफलदोहिगोचरइति यवनेश्वरेणापिपृथक्पृथक्फलनिर्देशंकृत्वातदेवाष्टकवर्गमंगीकृतं तथाचतद्वाक्यम् फ
लाष्टवर्गेशुभपापफलक्षेसमानकल्पावफलोप्रदिष्टोज्यायांस्तयस्तस्यफलंविधार्ययात्राविधानेन्तसमुद्दिष्टेच पृथक्फलनिर्देशंकृत्वाबादरायणो
प्यष्टकवर्गमेवाह कष्टश्रेष्ठेतुल्यसंख्येफलेचेत्स्यात्तान्नाशः फलयोस्तत्रवाच्यः वाच्यापंक्तिर्योतिरिक्तस्तयोः स्यात्स्थानेस्थानेकल्पनेयंप्र
दिष्टा उपचयगृहमित्रस्वोच्चगैःपुष्टमिष्टमिति लग्नाच्चंद्राद्वयात्सुपचयस्थानानितथामित्रक्षेत्राणिस्वोच्चंच एतानिशुभस्थानानि शुभ
स्थानोपलक्षणानि उपलक्षणत्वात्स्वक्षेत्रंमूलत्रिकोणंचगृह्यते तत्रलग्नाच्चंद्राद्वोपचयतोग्रहः स्वक्षेत्रस्थः स्वोच्चस्थोमित्रक्षेत्रस्थोमूलत्रि
कोणस्थश्चयदाशुभंफलंप्रयच्छति तदातीवपुष्टंफलंप्रयच्छति अत्रचश्रीदेवकीर्तिः लग्नादुपचयसंस्थश्चंद्राद्वास्वगृहमूलतुंगस्थः मि
त्रक्षेत्रगतोवाफलमतिशयितःशुभंदद्यात् लग्नाच्चंद्राद्वान्यान्यपचयस्थानानि तथाशत्रुक्षेत्रनीचानिचतान्यशुभानि तेषुस्थितोग्र
होयदाशुभफलंप्रयच्छति तदप्यतिनिकृष्टमिति अथयदिवशुभग्रहः शुभंफलंप्रयच्छति अशुभगृहस्थश्चाशुभमल्पंकिमेवंविधेषुग्र
हस्यजन्मकालेस्थितिरन्वेष्या किंवाचारवशात्सलकल्पनेति उच्यते जन्मकालेकथमेतत् उच्यते तत्रांतर्दर्शनतः तथाचदेवकीर्तिः अप
चयराशौजीवेशत्रुक्षेत्रेचजन्मकालेस्यात् यस्तंसदद्यात्सापंफलमतिशायिनोयथाकालं यवनेश्वरश्च यस्तस्वनीचारिगृहोपगोन्यैर्जितो
रिहष्टोल्पतनुर्विवर्णः स्तूलावभूज्जन्मपतौबलस्थेसजन्मगोवध्यफलोनिरुक्तः इषस्त्कस्वोच्चगृहिष्टदृष्टोमित्रर्क्षजन्मोपचयेबलीयान्
योजातकेमूलतजन्मसंस्थोददात्सुभंनत्वशुभोप्यनिष्टं तथाचसत्यः जन्मन्युपचयभवनेएकोग्रहोल्पफचयेषुपुष्टफलः अपचयम
वनोपेताः पीडास्थानेल्पपचयायफलकालेतुपुनश्चंद्रवर्ज्यमन्योग्रहोबलवानेवशुभमशुभंवापुष्टंफलंप्रयच्छतीति चंद्रः शुभोपिबलर
हितः पापफलोभवति अत्रचश्रीदेवकीर्तिः पुष्टमपुष्टंस्वफलंदद्यात्सबलोबलेनहीनस्तु ग्रहइवसर्वश्चंद्रः कष्टफलोबलविहीनश्च

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तथाचसत्यः स्नेहवपुरंशफबलैर्विवर्जितः शत्रुभैरिसंदृष्टः ग्रहइवफलमनुवधाच्चंद्रस्तयदीदृशः कष्टः वराहमिहिरोप्यबलानांग्रहाणांफ
लदाने असमर्थानांयात्रायामाह नीचस्थाग्रहविजितारव्यभिभूताविरश्मयोन्हस्वाः भुजगाइवमंत्रहतनाभवंतिकार्यास्तिमालग्ने यात्रा
यांयवनेश्वरोपि स्ववर्गसंस्थाबलिनोविशेषाग्रहायथोद्दिष्टफलप्रदाःस्युः नीचेजिताश्चारिगृहेल्पवीर्यास्तेभ्रंशयनिष्टेष्टफलप्रवृत्तिं तत्र
शास्त्रेषुयानिचान्यान्युच्चादिसंस्थानांशुभाशुभफलप्रवृत्तिप्रदर्शकानिनीचारिस्थानामशुभफलप्रदर्शकानितानिजन्मसमयेज्ञेया-
नि यानिचशुभानामशुभानांवाफलानिग्रहवशेनैवपुष्टिप्रदर्शकानितानि चारवशात्फलदानकालेग्रहस्यज्ञेयानीति ८ इतिश्री-
भट्टोत्पलविरचितायांबृहज्जातकविवृतावष्टकवर्गाध्यायोनवमः समाप्तः ९ अथातःकर्माजीवाध्यायोव्यारव्यायते अनेन
पुरुषेणकथंधनमर्जयितव्यमित्यध्यायेस्मिन्निरूप्यते अत्रचप्रकारद्वयेनधनदाताग्रहोभवति लग्नाच्चंद्रमाच्चयोदशमस्थोग्रहः
सधनदाताभवति अथलग्नचंद्रयोर्दशमस्थानेशून्येभवतस्तदालग्नचंद्रादित्यानांयेपेदशमराशयस्तेषांज्येधिपतयस्तेषुनवांश
केषुपुरुषस्यजन्मकालेस्थितास्तेषांनवांशकानांयेग्रहाअधिपतयस्तेग्रहाः धनदातारोभवंति किंतुलग्नाच्चंद्राच्चयेदशमाग्रहाः तेअनेन
प्रकारेणधनदातारोभवंति किंतुमेंदूकस्पदपतिगांशनाथा अनेनप्रकारेनेति तत्रादावेवलग्नाच्चंद्राच्चदशमस्थोग्रहोयेनप्रकारेणधनंद-
दाति तथामेंदूर्कास्पदपतिगांशनाथायेनप्रकारेणधनप्रदास्तत्प्रकारद्वयप्रदर्शनंमहर्षिण्याह अर्थाप्तिरिति होरेंद्वोः लग्नचंद्रयोः दिवा
कराद्यैः सूर्याद्यैः ग्रहैः दशमगतैः दशमस्थानाश्रितैः पित्रादिभ्योर्थाप्तिभिः धनप्राप्तिः विकल्पनीयाविचिंत्या तत्रपुरुषस्यजन्मस
मयेलग्नाच्चंद्राद्वायद्यादित्योदशमस्थोभवति तदापितृतोर्थाप्तिर्भवति एवंचंद्रेलग्नाद्दशमगतेपितृपक्षितः मातुः सकाशात् भौमेलग्न-
चंद्रयोर्दशमेसति शत्रुतः रिपुतः बुधेमित्रात् सुहृत्तः गुरौभ्रातृतः सहजात् शुक्रेस्त्रीतः योषितः सौरेभृतकजनात्कर्मकरात् से
वकादित्यर्थः अथकश्चिल्लग्नाद्दशमेभवत्यपरश्चंद्रात्तदास्वस्यांस्वस्यामंतर्दशायांद्वावपिस्वाभिहितफलप्रदौभवतः नकेवलं यावच्चं
द्राल्लग्नाच्चबहवोपियदिदशमस्थाभवंति तदासर्वएवस्वस्यांस्वस्यामंतर्दशायांस्वस्वप्रकारेणधनप्रदाभवंति अथलग्नाच्चंद्राद्वान
कश्चिद्दशमोभवति तदाकोर्थप्रदोभवति अतउक्तं मेंदूर्कास्पदपतिगांशनाथवृत्त्या मंलग्नंइंदुश्चंद्रः अर्कः आदित्यः मंचेंदुश्चार्क ६१
श्चमेंदूर्काः तेभ्यः प्रत्येकस्यास्पदारव्योयोराशिः दशमइत्यर्थः तस्ययोधिपतिः ग्रहः सः यस्मिन्नवांशकेगतः स्थितस्तस्ययोनाथः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्वामीनस्ययावक्ष्यमाणावृत्तिः तयावृत्त्यातस्यधनप्रदोभवति एवंलग्नाच्चंद्राद्दर्कादपिवक्तव्यं केचिदेवंव्याचक्षते यथालग्नाच्चंद्राच्चयदादशमस्था-
ग्रहाभवंति तदालग्नचंद्रयोः योबलवान्तस्यपोदशमः सएवार्थप्रदोभवति मेंद्वर्काणांयोबलीतस्यास्पदपतिगांशनाथवृत्त्याएक एवार्थप्रदोभवतीति
तदयुक्तम् यस्मादत्रबलग्रहणंनास्तितस्मादेवंज्ञायते सर्वेष्यएवभवति पुरुषस्यबहुप्रकारधनागमदर्शनादिति तथाचभगवान्गार्गिः उदया
च्छशिनोवापियेग्रहादशमस्थिताः तेसर्वेर्थप्रदाज्ञेयाः स्वदशासुयथोदिताः लग्नार्कशशिनाथेभ्योदशमाधिपतिर्ग्रहः यस्मिन्नवांशेतत्काले
वर्ततेतस्ययःपतिः तद्वृत्त्याप्रवदेद्वित्तंजातस्यबहवोयदा भवंतिवित्तदास्तेपिस्वदशासुविनिश्चितमिति १ मेंद्वर्कास्पदपतिगांशनाथवृत्त्या
इति यदुक्तमधुनातांवृत्तिंप्रहर्षिणीद्वयेनाह अर्कांशइति मेंद्वर्कास्पदपतिगांशनाथोर्कः यदाभवतितदातृणैः सुगंधैः कनकेनसुवर्णेनच ऊर्ण
याआविकलोम्नाभेषजेन औषधेन आदिशब्दात् भिषक्क्रिययारोगिणांपरिचर्ययाचधनमाप्नोति अथचंद्रांशोभवति तदाकृष्याकर्षणेनजलजैः
शंखमुक्ताप्रवालादिभिः अंगनाभिः स्त्रीभिः जलजानांक्रयविक्रयैः अंगनानांसमाश्रयणैरेतैः धनमाप्नोति अथकुजांशोभौमनवांशो

अथकर्माजीवाध्यायोव्याख्यायते अर्थाप्तिःपितृपितृपत्निशत्रुमित्रभ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैः
होरेंद्वोर्दशमगतैर्विकल्पनीयाभेंद्वर्कास्पदपतिगांशनाथवृत्त्या १ अर्कांशेतृणकनकोर्णभेषजाद्यैश्चंद्रांशेकृ
षिजलजांगनाश्रयाच्च धात्वग्निप्रहरणसाहसैःकुजांशेसौम्यांशेलिपिगणितादिकाव्यशिल्पैः ॥ २ ॥ ॥

यदाभवति तदाधातुभिः मृत्तिकादिभिः पक्वाभिः सुवर्णरूप्यताम्रादीनिभवंति ताभिःप्राप्नोति अथवाधातुभिः मनःशिलाहरिताल
हिंगुलकांजनप्रभृतिभिः अग्निनाग्निक्रियया प्रहरणैः खड्गचक्रकुंतचापतोमराद्यैः साहसैः असमर्थाक्षिप्तकार्यकरणैरथवास्वबलक्रियारंभैः
धनमाप्नोति अथसौम्यांशोबुधनवांशकोयदाभवति तदालिपिगणितादिकाव्यशिल्पैः धनमाप्नोति लिप्यक्षरविन्यासेनगणितेन आदि
ग्रहणाद्व्याख्यानेन यंत्रादिप्रयोगैः काव्यक्रिययाशिल्पैः चित्रपुस्तकपत्रछेदबाणमाल्यरचनागंधयुक्तिप्रभृतिभिः धनमाप्नोति २
अथजीवांशोद्वितीयप्रहर्षिण्याह जीवांशेति जीवांशेद्विजविबुधाकरादिधर्मैरिति अथजीवांशकोयदाभवति तदाद्विजेभ्योब्राह्मणेभ्यः
विबुधेभ्योदेवेभ्यः पंडितेभ्योवा आकरेभ्यः सुवर्णादीनांलवणादीनां अंजनादीनांगजादीनांच समुत्पत्तिस्थानेभ्यः आदिग्रहणाल्लिप्यावा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

देन धर्मैः यज्ञदानोपवासतीर्थगुरुसेवनादिभिः धनमाप्नोति अथशुक्रनवांशकोयदाभवति तदामणिभिः वज्रमरकतपद्मरागेंद्रनीलप्र
भृतिः रजतेनरूप्येण आदिग्रहणात्सर्वैर्लोहैः गोभिः तथामाहिषकर्मणिमहिषेभ्योवासाधुः महिष्यः श्रेष्ठमाहिष्यैः धनमाप्नोति. अथसौ
रांशकोयदाभवति तदाश्रमेणअध्वगमनादिकंतवधेनचवध्यघातितया अथवास्वशरीरताडनाद्येन भारवाहनेनभीचशिल्पैः स्वकुलानुचि
तैः कर्मभिः धनमाप्नोति एवंजातककालवशात्पुरुषस्यधनागमंज्ञात्वा कालानुकालंकर्मेशचारवशात् कर्मसिद्धीमाह कर्मेशाध्युषितनवां
शकर्मसिद्धिः कर्मणिईशा कर्मेशः लग्नाद्दशमराशिः तदधिपः कर्मेशः सचारवशाद्यस्मिन्नवांशके अध्युषितोभवति व्यवस्थितोभवतित
तस्ययःस्वामी तस्ययानिकर्माणि अर्कांशेतृणकनकोर्णभिषजाद्यैरित्यादीनि तत्समानानांसिद्धिर्भवति तानिप्रारब्धानिसिध्यन्तीति अत्र
केचित्कर्मेशाध्युषितसमानकर्मसिद्धिरितिपठंति अत्रचनवांशग्रहणंनास्तिप्रकृतत्वात्प्रागनुवृत्तेः नवांशकोव्याख्यायते तथाचभग

जीवांशोद्विजविबुधाकरादिधर्मैःकाव्यांशेरजतादिगोमाहिष्यैः सौरांशेश्रमवधभारनीचशिल्पैःकर्मेशाध्युषितन
वांशकर्मसिद्धिः ३ मित्रारिस्वगृहगतैर्ग्रहैस्ततोर्थांतुंगस्थैर्बलिनिचभास्करेस्ववीर्यात् आयस्थैरुदयधना
श्रितैश्चसौम्यैःसंचिंत्यंबलसहितैरनेकधास्वम् ४ इतिकर्माजीवाध्यायः १०

वान्गार्गिः लग्नकर्माधिपोय
स्मिन्नवांशेवर्ततेग्रहः चारक्रमेणतत्तुल्यांकर्मणांसिद्धिमादिशेत् ज्ञातजातकस्येदंक्रियाश्रयंकर्मकर्मेशाध्युषितनवांशकपतिकर्मणां
यथादर्शितानांप्रारब्धानांकालानुकालंसिद्धिर्वक्तव्यानान्येषामिति ३ अथधनागमज्ञानंमहर्षिण्याह मित्रारिस्वगृहगतैरिति चंद्रलग्नयोः येदशमगाग्रहा
स्तद्भावेचयेषेंद्रकास्यद्पतिगांशनाथाः तेचयदिजन्मकालेमित्रगृहस्थिताभवंति तदास्वांतर्दशाकालेमित्रगृहेस्थिताभवंति ततस्तस्मादेवमित्रात्
मित्रतः धनप्रदाभवंति अथारिगृहस्थाः शत्रुगृहगाभवति तदारितएव अथस्वगृहस्थास्तदास्वगृहादेवधनप्रदाभवंति तुंगस्थेर्बलि
नीति यस्यपूर्वविधिनाभास्करः सूर्योधनप्रदोज्ञातः तस्मिंस्तुंगस्थेउच्चगेमेषप्राप्तेतद्वलिन्यन्यैर्बलैः कालबलाद्यैर्युक्तेसदासपुरुषः
स्ववीर्यात्धनमर्जयति स्वविक्रमार्जितधनोभवतीत्यर्थः आयस्थैरिति सौम्यैः शुभग्रहैः जन्मन्यायसंस्थैरेकादशस्थानगतैः उदयध ११
नाश्रितैश्चलग्नगैः द्वितीयस्थानगतैर्वानैश्चबलसहितैः वीर्यवद्भिः जातः अनेकधाबहुभिः प्रकारैः स्वंधनंप्राप्नोतीति सचिंत्यनिश्चयःकार्यो

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

येनयेनप्रकारेणधनार्जनमाकांक्षतेनेनतेनप्रकारेणयत्नादवाप्तोतीत्यर्थः तथाचभगवान्गार्गिः धनदाजन्मसमयेमित्रारिस्वगृहोपगाः प्र
स्यतस्यधनंदद्युर्मित्रारिस्वगृहोद्भवम् धनदोभास्करोयस्यतुंगबलसमन्वितः भवेज्जन्मनियस्यस्यादिन्तमात्मोद्यमार्जितं लाभार्थलग्नगैः
सौम्यैर्येनयेनैवकर्मणा धनार्जनंप्रार्थयतेतेनयत्नात्समश्नुतइति ४ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौकर्माजीवाध्या
योदशमः १० अथातोराजयोगाध्यायोव्याख्यायते तत्रादावेवयवनानांजीवशर्मणश्चमतंवैनालीयेनाह त्रिप्रभृतिभिरुच्च-
स्थैर्नृपवंशभवाभवंतिराजानः इतिसर्वजातकेषुप्रसिद्धम् तत्रैतावद्यवनानांमतभेदः यस्यजन्मसमयेक्रूरैः पापग्रहैः स्वतुं-
गगैः स्वोच्चस्थैर्जातोमहीपतीराजाभवति किंतुक्रूरमतिः पापबुद्धिरितिप्राहुःकथयंति अर्थादेवसौम्यैरुच्चगतैः महीपतिर्धर्मात्मा
चभवति मिश्रैरुच्चगतैर्मिश्रस्वभावोराजाइति एषएवार्थोमणित्थेनाभिहितः तथाचतद्वाक्यम् पापैःपापमतिः स्वोच्चगतैर्धर्मवां-
स्तथासौम्यैः व्यामिश्रैर्मिश्रमतिःपृथ्वीशोजायतेमनुजः क्रूरैस्त्विति जीवशर्मणःपक्षेतन्मतेक्रूरैस्तूच्चगतैः क्षित्यधिपोनराजाप्रजायते

अथराजयोगाध्यायप्रारंभः प्राहुर्यवनाःस्वतुंगगैःक्रूरैः क्रूरमतिर्महीपतिः क्रूरैस्तुनजीवशर्मणःपक्षे
क्षित्यधिपतिःप्रजायते १ वक्रार्कजार्कगुरुभिःसकलैस्त्रिभिश्चस्वोच्चेषुषोडशनृपाःकथितैकलग्ने॥ ॥

किंतुराज्ञातुल्योधनवान्भवति तथाचतद्वाक्यम् पापैरुच्चगतैर्जातानभवंति नृपानराः किंतुवित्तान्विनास्तेस्युः क्रोधिनः कलह-
प्रियाइति वराहमिहिरस्ययवनेश्वरमतमभिप्रेतं यतस्तेनंसामान्येनैवस्वल्पजातकेभिहितं त्रिप्रभृतिभिरुच्चस्थैर्नृपवंशभवाभवंति-
राजानः पंचादिभिरन्यकुलोद्भवाश्चतद्वत्त्रिकोणगतैरिति १ अथद्वात्रिंशद्राजयोगान्वसंततिलकेनाह वक्रार्कजाइति वक्रोंगारकः
अर्कजः सौरः अर्कःसूर्यः गुरुर्जीवः एतैः वक्रार्कजार्कगुरुभिः भौमशनिसूर्यजीवैः सकलैः सर्वैश्चतुर्भिरपिस्वोच्चेषुस्थितैः कथि
तैकलग्नेएषांकथितग्रहाणांचतुर्णांमध्यादेकैकस्मिंल्लग्नगतेचत्वारोराजयोगाभवंति तथात्रिभिश्च एषामेवमध्यात्त्रिभिः स्वोच्चग
तैः कथितैकलग्नेद्वादशराजयोगाभवंति एवंषोडशश्लोकाश्रितत्वेविति एतेषांमध्याद्द्वाभ्यांस्वोच्चगताभ्यामनयोर्मध्यादेकस्मिंल्लग्नग
तेशशिनिचंद्रेस्वक्षेत्रगेकर्कटस्थेतेषामेववक्रार्कजार्कगुरूणांमध्याद्द्वाभ्यांस्वोच्चाश्रितेनतद्वक्तमेविलग्नगेद्वादशराजयोगाभवंति-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एकाश्रितेषुच तेषामेवमध्यादेकस्मिन्नुच्चाश्रितेनतस्मिन्नेवविलग्नगेचत्वारोराजयोगाभवंति एवंषोडशश्लोकैः पूर्वोक्तैःसहद्वात्रिंशत् तद्यथा
मेषेर्कः कर्कटेजीवः तुलेसौरः मकरेकुजः शेषायथेष्टं ईदृश्यांग्रहसंस्थायांमेषलग्नगतेएकोयोगः १ कर्कटेद्वितीयः २ तुलेतृतीयः ३ मक
रेचतुर्थः ४ एवंवक्रार्कजार्किगुरुभिः सकलैः स्वोच्चेषुतदेकतमेलग्नेचत्वारोराजयोगाः अथत्रिभिः तद्यथा मेषेर्कः कर्कटेजीवः तुलेसौ
रः शेषायथेष्टं ईदृश्यामपिग्रहसंस्थायांमेषलग्नेएकोयोगः कर्कटेद्वितीयः तुलेतृतीयः पूर्वैःसहसप्त अथमेषेर्कः कर्कटेजीवः मकरेभौमः
शेषायथेष्टम् ईदृश्यांचग्रहसंस्थायांमेषलग्नेएकोयोगः कर्कटेद्वितीयः मकरेतृतीयः पूर्वैःसहदशः १० अथमेषेर्कः तुलेसौरः मकरेभौमः
शेषायथेष्टम् ईदृश्यांचग्रहसंस्थायांमेषलग्नेएकः तुलेद्वितीयः मकरेतृतीयः ३ एवंत्रयोदश १३ अथकर्कटेजीवः तुलेसौरः मकरे
भौमः शेषायथेष्टम् ईदृश्यांचग्रहसंस्थायांकर्कटेएकः तुलेद्वितीयः मकरेद्वितीयः ३ एवंषोडशराजयोगाः १६ चतुर्भिः त्रिभिःस्वोच्च
गतैः तदेकतमेविलग्नेइतिगतम् द्व्येकाश्रितेष्वित्यादियोगेषुयावत्कर्कटेचंद्रमानभवति तावद्योगाएवनभवंति तद्यथा द्व्याश्रितेषुग्रहेषुस्वक्षेत्रगतेच

द्व्येकाश्रितेषुचतथैकतमेविलग्नेस्वक्षेत्रगेशशिनिषोडशभूमिपास्युः २ वर्गोत्तमगतेलग्नेचंद्रेवाचंद्रवर्जितैः
चतुराद्यैर्ग्रहैर्दृष्टेनृपाद्वाविंशतिःस्मृताः ३ चंद्रेद्वादशराजयोगाव्याख्यायते तद्यथा मेषेर्कः कर्कटेचंद्रजीवौशेषायथेष्टम् ईदृ
श्यांचग्रहसंस्थायांमेषलग्नेएकोयोगः कर्कटेद्वितीयः २ अथमेषेर्कः कर्कटेचंद्रः तुलेसौरः शेषायथेष्टम् तदामेषेतृतीयः ३ तुलेचतुर्थः
४ अथमेषेर्कः कर्कटेचंद्रः मकरेभौमः शेषायथेष्टम् तथामेषेपंचमः ५ मकरेषष्टः ६ अथकर्कटेचंद्रजीवौ तुलेसौरः शेषायथेष्टम्
तथाकर्कटेसप्तमः ७ तुलेऽष्टमः ८ अथकर्कटस्थौचंद्रजीवौ मकरेभौमः शेषायथेष्टम् तदाकर्कटेनवमः ९ मकरेदशमः १० अथ
तुलेसौरः मकरेभौमः कर्कटेचंद्रः शेषायथेष्टम् तदातुलेएकादश ११ मकरेद्वादश १२ द्व्याश्रितेष्वितिगतम् अथैकाश्रितेषुकर्कटस्थेचंद्रे
मेषस्थेर्केमेषलग्नेएकः १ कर्कलग्नेनततयोश्चंद्रजीवयोः द्वितीयः २ कर्कटस्थेचंद्रेतुलास्थेसौरेतस्मिन्नेवलग्नेतृतीयः ३ कर्कटस्थेचंद्रेमकर-
स्थेभौमेतस्मिन्नेवलग्नेचतुर्थः ४ एवंपूर्वैर्द्वादशभिः सहषोडशश्लोकपूर्वोक्तैः षोडशभिः सहद्वात्रिंशद्राजयोगाव्याख्याताः ३२। २अ
थचतुश्चत्वारिंशद्राजयोगाननुष्टुभाह वर्गोत्तमगतेलग्नइति लग्नेजन्मकालिकेलग्नेवर्गोत्तमगतेस्वनवांशकस्थइत्यर्थः तस्मिंश्चंद्रवर्जि- ६४

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तैरन्यग्रहैश्चतुराद्यैः दृष्टेचतुर्भिः पंचभिः षड्भिर्वावलोकिते द्वाविंशतिराजयोगाः स्मृताः उक्ताः अत्रलग्नेचंद्रेदृष्टेनयोगभंगः किंतु पश्यतांमध्येनगण्यते सतुपश्यतुमावापश्यतु अन्यैश्चतुरादिभिः ग्रहैर्दृष्टेराजयोगोभवति एवंवर्गोत्तमगतेलग्नेद्वाविंशतियोगाः २२ एवंचंद्रेवर्गोत्तमांशस्थेचतुराद्यैर्ग्रहैः दृष्टे द्वाविंशतियोगाभवंति एवंचतुश्चत्वारिंशत् ४४ अत्रलग्नेचंद्रेवाचतुर्भिर्दृश्यमानेपंचदश १५ विकल्पाभवंति पंचभिः दृश्यमाने ६ षड्विकल्पाभवंति षड्भिरेकः १ एवंद्वाविंशतिः २२ तद्यथा लग्नेचंद्रेवारविभौमबुधगुरुभिः दृश्यमाने एकोयोगः रविभौमबुधसितैः द्वितीयः २ रविभौमबुधसौरैः तृतीयः ३ रविभौमजीवसितैश्चतुर्थः ४ रविभौमजीवसौरैः पंचमः ५ रविभौम शुक्रसौरैः षष्ठः ६ रविबुधजीवशुक्रैः सप्तमः ७ रविबुधजीवसौरैरष्टमः ८ रविबुधशुक्रसौरैर्नवमः ९ रविजीवशुक्रसौरैर्दशमः १० भौमबुधजीवशुक्रैरेकादशः ११ भौमबुधजीवसौरैर्द्वादशः १२ भौमबुधशुक्रसौरैस्त्रयोदशः १३ भौमजीवशुक्रसौरैश्चतुर्दशः १४ बुधजीवशुक्रसौरैः पंचदशः एवंचतुर्भिरपिविकल्पैः पंचदश अथपंचविकल्पाः रविभौमबुधजीवशुक्रैरेकः १ रविभौमबुधजीवसौरै

यमेकुंभेर्केजेगविशशिनितेनेरेवेतन्तुगेर्नृपाः कुम्भे हालिस्थैः शशिजगुरुवक्रैर्नृपतयः यमेंदूतुंगेंगेसवितृशशिजोषष्ठ भवनेतुलाजेंदुक्षेत्रैः ससितकुजजर्जैश्चनरपो ४

द्वितीयः २ रविभौमबुधशुक्रसौरैस्तृतीयः ३ रविभौमजीवशुक्रसौरै चतुर्थः ४ रविबुधजीवशुक्रसौरैः पंचमः ५ भौमबुधजीवशुक्रसौरैः षष्ठः ६ एवंपंचविकल्पैः षट् पूर्वोक्तैः पंचदशभिः सहैकविंशतिः २१ रविभौमबुधजीवशुक्रसौरैः षड्भिरेकः १ एवंद्वाविंशतिः २२ लग्नाच्चंद्राच्चैवमेवंचतुश्चत्वारिंशत् ४४ परमार्थेनैतद्योग द्वयमेवतद्यथा वर्गोत्तमगतेचंद्रे चतुराद्यैर्दृष्टे एकः लग्नेद्वितीयः संख्याप्रदर्शनंगणितप्रदर्शनार्थं अत्रैवचंचमसोयदिराशौवर्गोत्तमा वस्थितिंनिरूप्यगणितंक्रियतेतदैतेषामेवयोगानांचतुःषष्ठ्यधिकंशतद्वयंसंभवति एवंप्रत्येकस्मिन्वर्गेवर्गोत्तमस्थेचतुःषष्ठ्यधिकमेव योगशतद्वयं एवंचंद्रलग्नयोर्योगानामेकीकृतानांपंचशतान्यष्टाविंशत्यधिकानिभवंति तथाचमांडव्यः विलग्नभवनंगतेबलयुतेच वर्गोत्तमेचतुः प्रभृतिभिर्ग्रहैः शशिनिवासमालोकितेससंभवति पार्थिवः खलुकृपाणपाणीरणेकदाचिदपिवीक्ष्यतेरिपुजनोनयस्याननम् ११३। अथशिखरिण्यापंचयोगानाह यमेइति यमेसौरेकुंभस्थेअर्केसूर्येअजेमेषस्थेसति शनिनिचंद्रेगाविवृषस्थितेतेरेवतन्तुगेः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तेषांग्रहाणामेकतमे तत्तुंगे लग्नस्थेन केवलं यावच्छशिजगुरुवक्रैः बुधजीवभौमैः नृफककुसिंहालिस्थैः मिथुनहरिवृश्चिकस्थैः जातान्नृपतयोरा
जानोभवंति चकारोत्रलुब्ध द्रष्टव्यः तत्रैतज्ज्ञानं सौरः कुंभे रविर्मेषे चंद्रोवृषे बुधोमिथुने जीवःसिंहे भौमोवृश्चिके ईदृश्यांग्रहसंस्थायां
कुंभलग्ने एकोयोगः १ मेषेद्वितीयः २ वृषेतृतीयः यमेंदू इति सौरचंद्रौ तुंगेउच्चेन केवलंयावदंगेन नो लग्ने इत्यर्थः सवितृशशिजौसूर्य
बुधौषष्ठभवने कन्यायां तुलाजेंदुक्षेत्रैः तुलाप्रसिद्धः अजोमेषः इंदुक्षेत्रं कर्कटःएतैःयथासंख्यसितकुजजीवैः शुक्रभौमगुरुयुक्तैः नरपौ
द्वौराजयोगाविति तत्रैतज्ज्ञानं तुलेसौरः वृषेचंद्रः कन्यायामर्कबुधौतुलेशुक्रः मेषेभौमः कर्कटेजीवः ईदृश्यांग्रहसंस्थायांतुलालग्ने एको
योगः १ वृषेद्वितीयः २ पूर्वैस्त्रिभिः सहपंच ५ अत्रषष्ठभवनेषष्ठराशौलग्नात्केचिदिच्छंति एतदुक्तं यस्मात्तुलस्थेशुक्रेसंनतस्य स्यार्कस्या
संभवः तथाचबादरायणः तुलालग्नेसितसौरौमेषेभौमोगुरुः कुलीरगतः कन्यायांरविशशिजौजातोनृपतिर्वृषेसचंद्रेवा ४ अथान्यद्रा
जयोगत्रयंशिखरिण्याह कुजेतुंगेऽर्केद्वाविति कुजेभौमेतुंगस्थेउच्चस्थेमकरगतेइत्यर्थः अर्केद्वौः सूर्यशशिनोः धनुषिचापेस्थितयोः य

कुजे तुंगेऽर्केंद्वोर्धनुषियमलग्ने चक्कपतिः पतिर्भूमेश्चान्यः क्षितिसुतविलग्ने शशशिनि सचंद्रेसौरेस्तेसुरपतिगुरौचा
पधरगे स्वतुंगस्थे भानावुदयमुपयातेक्षितिपतिः ५

मलग्नेयत्रतत्रराशौलग्नेशनैश्चरे लग्नगगते मकरस्थइत्यर्थः एवंविधयोगे
जातः कुपति भूमिशः नृपतीराजाभवति यमलग्नेइति मकरकुंभयोः अन्यतमे लग्नेइतिव्याख्यातं यमस्यलग्नेयमलग्नइति केचित्
यत्रतत्रराशावव स्थितेसौरेलग्नगेइतिव्याख्यानम् नचायुक्तं यस्माद्बादरायणः लग्नेसौरस्तुंगेभौमश्चंद्रादित्यौचापमाप्ताविति अस्माकं
मथमाव्याख्यासाध्वीप्रतिभाति यस्मान्माण्डव्यः आदित्यश्चनिशाकरश्चभवतोवागीशराशौयदासार्द्धंभास्करिणास्वराशिसहितः प्राप्तोमृ
गेमंगलः प्राप्तोतिप्रभवंतदासकृकृतिक्ष्मापालचूडामणिस्त्वस्यंतिप्रतिपंथिनोरणमुखेयस्मात्कृतांनादिवपति भूमेश्चान्यइति अस्मिन्नेवयो
गेक्षिति सुतविलग्ने भौमेशशशिनि चंद्रयुक्ते लग्नगेक्षितिसुतोंगारकः तस्मिन्स्वोच्चस्थेशशिनिचंद्रमसोयुक्तेर्के धनुर्धरस्थेराजयोगः तत्रैत
ज्ज्ञातंमकरलग्नेचंद्रांगारकयुक्तेधनुर्धरगतेऽर्केऽन्योद्वितीयोभूमेः पतिर्भवतिराजाइत्यर्थः अत्रचबादरायणः भानुश्चापेसेंदुर्भौमस्तुंगप्राप्तोल ६५
ग्नेवास्यात् सचंद्रेसौरेस्तइति सौरेशनैश्चरेसचंद्रेशशिनियुक्तेतथाभूतेस्तेसप्तमस्थानगते तथासुरपतिगुरौजीवेचापधरगेधनुर्धरस्थेभा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नो आदित्येस्वतुंगस्थेस्वोच्चेमेषभागे उदयंलग्नमुपयातेभौमेजातः क्षितिपती राजाभवति तत्रैतज्जातं मेषेलग्नेस्तत्रैवार्कः धन्विनीजीवः तुलागतौशशिसौरौएवंविधेयोगेजातोराजाभवत्येवंराजयोगास्त्रयः ५ अथशिखरिण्याराजयोगद्वयमाह वृषेसेंदौलग्नइति वृषेगविसेंदौ चंद्रयुक्ते लग्नेस्थिते सवितृगुरुतीक्ष्णांशुतनयैः सूर्यजीवसौरैः यथासंख्यं सुहृज्जायाखस्थैः चतुर्थसप्तमदशमस्थितैः नियमान्निश्चयात्वमानवपतिः राजाभवति तत्रैतज्जातं वृषेलग्नस्तत्रैवचंद्रः सिंहेऽर्कोवृश्चिकेजीवः कुंभेसौरः एवंविधेयोगेजातोऽवश्यं राजाभवति मृगेमंदइति मृगेमकरेलग्नेतत्रस्थेमंदेसौरे सहजरिपुधर्मव्ययगतैः तृतीयषष्ठनवमद्वादशस्थैः शशांकाद्यैः चंद्रांगारकबुधजीवैः एवंविधेयोगेजातःख्यातःसर्वत्रविदितः पृथुगुणयशाः गुणाः शौर्यादयः विस्तीर्णगुणकीर्तिः पुंगलपतिः मनुष्यनाथोभवति ननुशशांकाद्यैरित्युक्तम् शुक्रःक्वगच्छतु उच्यते यथासंख्यासंचमस्थानस्यविद्यमानत्वात् शुक्रस्यादित्यपंचमत्वादन

वृषेसेंदौलग्नेसवितृगुरुतीक्ष्णांशुतनयैःसुहृज्जायाखस्थैर्भवतिनियमान्मानवपतिः मृगेमंदेलग्नेसहजरिपुधर्मव्ययगतैः शशांकाद्यैः ख्यातः पृथुगुणयशाःपुंगलपतिः ६ हयेसेंदौजीवेमृगमुखगतेभूमितनयेस्वतुंगस्थौलग्नेभृगुजशशिजावत्रनृपती सुतस्थौवक्रार्कौगुरुशशिसितास्वापिहिबुके बुधेकन्यालग्नेभवतिहिनृपोन्योपिगुणवान् ७

वक्राशः तत्रैतज्जातम् मकरोलग्नस्तत्रैवसौरः मीनेचंद्रः मिथुनेभौमः कन्यायांबुधः धन्विनीजीवः शुक्रार्कौयत्रतत्रस्थौएवंविधेयोगेजातोराजाभवति पृथुगुणयशाः एवमत्रराजयोगौद्वौ तथाचमांडव्यः मृगेलग्नेसौरस्तिमिथुनगतः शीतकिरणःकुजोयुग्मेनार्याशशधरसुतश्चापधरगः गुरुर्दैत्येज्याकौविभिमतगतौचाखशतः प्रसूतौयस्यसोभवतिनरपः शक्रसदृशः ११६ अथशिखरिण्याराजयोगत्रयमाह हयेसेंदावितिहयेधनुषिजीवेगुरौसेंदौसचंद्रेस्थिते भूमितनयेंगारकेमृगमुखगतेमकरस्थे मृगास्यपूर्वोमकरोमृगास्य इतिवचनात् भृगुजशशिजौशुक्रबुधौस्वतुंगस्थौस्वोच्चभागौयदिलग्नेभवतस्तदात्रास्मिन्योगद्वयेएतत् तत्रैतज्जातं बृहस्पतौसचंद्रेधन्विगतेमकरगतेभौमेएवंविधायांग्रहसंस्थायांमीनलग्नेसशुक्रे एकोयोगः कन्यालग्नेद्वितीयोयोगः सुतस्थाविति वक्रार्कौभौमसौरौसुतस्थौपंचमस्थानगतौ तथागुरुशशिसिता जीवचंद्रशुक्राहिबुकेचतुर्थेस्थानेबुधेकन्यागतेलग्नेजातोऽन्योपरोपिनृपोराजागुणवान्भवति तत्रैतज्जातं कन्या

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

लग्नंतत्रैवबुधः मकरस्थौशनिभौमौधनुर्धरस्थाजीवलंदशुक्राः यदाभवंति तदाजानोराजागुणवांश्चभवति एवंराजयोगास्त्रयः ७ अथशि
खरिण्याराजयोगत्रयमाह झषेसेंदाविति झषेमीनेसेंदौसचंद्रेलग्नेमीनेलग्नेसचंद्रे घटमृगमृगेंद्रेषुसहितैर्यमारार्कैः घटः कुंभः मृगोमकरः
मृगेंद्रः सिंहः तेषुयथासंख्यंयमारार्कैः स्थितैः तत्रैतज्जातं मीनोलग्नस्तत्रैवचंद्रः स्थितः कुंभेसौरः मकरेभौमः सिंहेऽर्कः एवंविधेयोगेजातः
यःउत्पन्नः समनुजोमनुष्योशास्तिवसुधांभूमिंपरिपालयति राजाभवतीत्यर्थः खलुशब्दाद्वाक्यालंकारः अजेसारइति अजेमेषेसारेसभौ
मे मूर्तौलग्नस्थितेतथाचामरगुरौ जीवेशशिगृहगतेकर्कटस्थेजातोनृपोराजागुणवान्भवति अथवाखरेज्येबृहस्पतौकर्कटस्थेलग्नगते-
सौमेमेषस्थेजातोन्योपरोराजागुणवांश्चभवति एव मत्रराजयोगास्त्रयः ८ अथराजयोगंविद्युन्मालयाह कर्किणीति कर्किणिलग्नेक
र्कटकेलग्नेतत्स्थेतत्रैवव्यवस्थितेजीवेगुरौचंद्रसितज्ञैः शशिशुक्रबुधैः आयभमेरेकादशस्थानस्थैः मेषगतेर्के आदित्येमेषस्थेजातंसंभूतंपृ-

झषेसेंदौलग्नेघटमृगमृगेंद्रेषुसहितैर्यमारार्कैर्योभूत्सखलुमनुजःशास्तिवसुधाम् अजेसारेमूर्तौशशिगृहगतेचामर
गुरौखरेज्येवालग्नेधरणिपतिरन्योपिगुणवान् ८ कर्किणिलग्नेतत्स्थेजीवेचंद्रसितज्ञैरायप्राप्तैः मेषगतेर्केजातंविद्यादि
क्रमयुक्तंपृथ्वीनाथं ९ मृगमुखेर्कतनयस्तनुसंस्थःक्रियकुलीरहर्योऽधिपयुक्ताः मिथुनतौलिसहितौबुधशुक्रौयदित
दापृथुयशाःपृथिवीशः १० स्वोच्चसंस्थेबुधेलग्नेभृगौमेषूरणाश्रिते सजीवेस्तेनिशानाथेराजामंदारयोःसुते ११ ७

थ्वीनाथं भूमिपतिं विक्रमयुक्तं प्रतापसहितंविद्याज्जानीयात् ९ अथद्रुतविलंबितेनराजयोगमाह मृगमुखेति अर्कतनयःसौरः मृगमुखे-
मकरगतः सचतनुसंस्थोलग्नगतः तथाक्रियकुलीरहरयः मेषकर्किसिंहाः अधिपैः स्वनाथैः युक्ताः सहिताः तथामेषेभौमः कर्कटेचंद्रः
सिंहेसूर्यइत्यर्थः तथाबुधशुक्रौज्ञसितौयथासंख्यंमिथुनतौलिसहितौतथामिथुनेबुधः तुलेशुक्रः एवंविधायदियोगोभवति तदाजा-
तः पृथुयशाः विस्तीर्णकीर्तिः पृथिवीशोराजाभवति तत्रैतज्जातं मकरोलग्नस्तत्रैवसौरः मेषेभौमः कर्कटेचंद्रः सिंहेऽर्कः मिथुनेबुधः
तुलेशुक्रः एवंविधायांग्रहसंस्थायांयत्रतत्रस्थेजीवेयदिजातोभवति तदापृथिवीशः पृथुयशाभवति १० अथराजयोगमनुष्टुभाह ६७
स्वोच्चेति बुधेस्वोच्चसंस्थेकन्यागतेलग्नगेभृगौशुक्रेमेषूरणाश्रितेदशमस्थानस्थितेनिशानाथेचंद्रेसजीवेबृहस्पतिसंयुक्तेऽस्तेसप्तमस्थान

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गतेमंदारयोः शनिभौमयोः सुतेपंचमेस्थितयोः जातोराजाभवति तत्रैतज्जातं कन्यालग्नेसबुधेमिथुनगतेशुक्रेगुरौसचंद्रेमीनस्थेमकर-
स्थयोः शनिभौमयोःजातोराजाभवति एतेराजयोगाः प्रोक्ताः ११ एतेषुराजवंशतोपिजातोराजाभवति वक्ष्यमाणेषुतुराजवंशजएवराजाभ
वति तच्चमालिन्याह अपीति अपिशब्दः संभावनायांप्रोक्तभूपालयोगेः कथितराजयोगेः खलकुलजातानीचवंशोद्भवाअपिमानवाःपुरु
षाः राज्यभाजः नृपाः भवंति किमुतकिंपुनः नृपकुलोत्थाः राजवंशसंभूताः तेऽवश्यंराजानोभवंति वक्ष्यमाणेःपुनः योगेः नृपतिकुलसमु-
त्थाः राजवंशजाः पार्थिवाःराजानोभवंति तेषुवक्ष्यमाणेषुअभूपालवंशजः अराजपुत्रः नृपतितुल्योभवति राजसमइत्यर्थः नराजाकिमु
तसंभावनायाम् १२ अथराजयोगमौपच्छंदसिकेनाह उच्चस्वत्रिकोणगेरिति त्र्याद्यैः त्र्यादिभिर्ग्रहैः स्वोच्चगतैः स्वत्रिकोणगतैः बलस्थैः
कालादिबलोपेतैःजा ताभूपतिवंशजाः नृपकुलजातानरेंद्राराजानोभवंति आदिग्रहणाच्चतुर्भिरपिपंचादिभिरन्यवंशजानाइति पंचादिभिः

अपिखलकुलजातामानवाराज्यभाजःकिमुतनृपकुलोत्थाःप्रोक्तभूपालयोगेः नृपतिकुलसमुत्थाःपार्थिवावक्ष्यमाणेर्भव-
तिनृपतितुल्यस्तेषुभूपालपुत्रः १२ उच्चस्वत्रिकोणगेबलस्थैस्त्र्याद्यैर्भूपतिवंशजानरेंद्राः पंचादिभिरन्यवंशजाताहीने
र्वित्तयुतानभूमिपालाः १३ लेखास्थेर्केऽजेंदौलग्नेभौमेस्वोच्चेकुंभेमंदे चापप्राप्तेजीवेराज्ञःपुत्रंविंद्यात्पृथ्वीनाथं १४

ग्रहैः स्वोच्चस्थैः मूलत्रिकोणगैर्वा अन्यवंशजाताहीनकुलजाअपिराजानोभवंति आदिग्रहणात्षड्भिः सप्तभिरपिहीनैर्वित्तयुताइति त्रिभिरु
च्चस्थैः मूलत्रिकोणस्थैर्वाहीनबलैः कालादिबलरहितैः राजकुलजाअपिराजानोनभवंति किंतुराजतुल्याभवंति एतैः यथोक्तो हीनैः वित्तयु
ताःसधनाभवंति नभूमिपालाः राजानः एतदुक्तंभवति एकेनग्रहेणद्वाभ्यांवास्वोच्चगाभ्यांमूलत्रिकोणस्थाभ्यांवाराजकुलजोपिराजानभव
ति किंतुधनवान् एवंत्रिभिश्चतुर्भिर्वाऽन्यवंशजानावित्तयुताभवंति नराजानःअत्रयदिग्रहाः यथाभिहितसंख्याउच्चस्थाःनभवंति स्वोच्चगा
मूलत्रिकोणस्थैः सहसंख्यांसंपादयंति तथापियथोक्तफलदाभवंति अथोच्चगताः केंद्रबलाः स्वत्रिकोणगतावा तथापि १३अथान्यद्राजयोगंवि
द्युन्मालिन्याह लेखास्थेइति लेखायांतिष्ठतीतिलेखास्थः तस्मिन् लेखाशब्देनोदयउच्यते अर्केसूर्येतत्स्थेलेखास्थेमूर्द्धत्वादर्थोदितेनकेवलं
यावदजेमेषस्थेतत्रैवमेषलग्नेइंदौचंद्रेस्थितेभौमेकुजेस्वोच्चेमकरस्थेमंदेसौरेकुंभस्थेजीवेगुरौचापप्राप्तेधनुर्धरगतेएवंविधेयोगेजातोरा-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

जः पुत्रोनृपस्ततोयदिभवति तदातंभूमेनार्थविद्याज्जानीयात् अन्यकुलजोधनवान् अत्रकेचित्तौलेयस्थेर्केऽजेंदौ लग्ने इतिपठंति आदित्ये
लेयस्थेसतिसिंहगतेसूर्ये चंद्रेमेषस्थेलग्नेतदपिनकश्चिद्विरोधोराजयोगएवभवति १४ अन्यद्राजयोगंविद्युन्मालिन्याह स्वक्षेइति स्व
क्षैसितेआत्मीयराशौस्थितेवृषतुलयोरन्यतमस्थेनकेवलंयावत्पातालस्थेलग्नाच्चतुर्थे चंद्रेधर्मस्थानमाप्तेनवमगतेशेषैरन्यग्रहैः रविभौम
बुधगुरुसौरैः दुश्चिक्यांगप्राप्तिप्राप्तैः तृतीयलग्नएकादशस्थानस्थैःजातोभूमेः पृथिव्याः स्वाम्यधिपतिर्भवति तत्रैतज्जातं कुंभेलग्नेवृषेशु
क्रः तुलेचंद्रः शेषाग्रहायथासंभवंमेषकुंभधन्विस्थाः एवंविधेयोगेजातोराजपुत्रोराजाभवति अन्यकुलजोधनवान् अथवाकर्कटोलग्नः तुले
शुक्रः मीनेचंद्रः शेषाग्रहाययथासंभवंकन्याकर्कटवृषस्थाः एवंविधेयोगेजातोराजपुत्रोराजाभवत्यन्यकुलजोपिधनवान् १५ अथान्यद्रा
जयोगंनवमालिकयाह सौम्येबुधेवीर्ययुक्तेकालादिबलैः युक्तेनथाभूतेतनुयुक्तेलग्नस्थेशुभेशुभयाते शुभेशुभग्रहेगुरुसितयोरन्यतमे

स्वर्क्षेशुक्रेपातालस्थेधर्मस्थानंप्राप्तेचंद्रे दुश्चिक्यांगप्राप्तिप्राप्तैः शेषैर्जातः स्वामीभूमेः १५ सौम्येवीर्ययुतेतनुयुक्ते
वीर्याढ्येचशुभेशुभयाते धर्मार्थोपचयेष्ववशेषैर्धर्मात्मानृपजः पृथिवीशः १६ वृषोदयेमूर्तिधनारिलाभगैःश
शांकजीवार्कसुतापरैर्नृपः सुखेगुरौखेशशितीक्ष्णदीधितीयमोदयेलाभगतैर्नृपोपरैः १७ ॥७॥ ॥७॥

यथासंभववीर्याढ्येच सबलेशुभयातेधर्मस्थानगतेनवमगतइत्यर्थः शुभेसुखयातइतिपठंति चतुर्थस्थानस्थइत्यर्थः अवशेषैः परि-
शिष्टग्रहैः यथासंभवंधर्मार्थोपचयेषुनवमद्वितीयत्रिषडेकादशदशमानांअन्यतमस्थानस्थितैः एवंविधेयोगेजातोनृपजोराजपुत्रोराजा
भवति धर्मात्माच अन्यकुलोधनवान् १६ अथान्यद्राजयोगद्वयंवंशस्थेनाह वृषोदयइति वृषोदयेवृषलग्ने तथाशशांकजीवार्कसु-
तापरैः चंद्रगुरुसौरैरपरैश्च रविकुजबुधसितैः यथासंख्यंमूर्त्तिधनारिलाभगैः लग्नद्वितीयषष्ठैकादशस्थैःजातोनृपोराजाभवति तत्रै-
तज्जातं वृषलग्नेसचंद्रेमिथुनस्थेजीवे तुलास्थेसौरेमीनस्थैः रविकुजबुधसितैः जातोराजपुत्रोराजाभवति अन्यकुलजोपिधनवान्-
सुखेगुराविति गुरौजीवेसुखेचतुर्थस्थानस्थेखेदशमेशशितीक्ष्णदीधिती चंद्रार्कौयमोदयेशनैश्चरेलग्नगते अपरैरन्यैर्भौमबुधशुक्रैः लाभगतैरेकाद
शस्थैः जातोनृपोराजाभवति तत्रैतज्जातं शनैश्चरोलग्नेचतुर्थेजीवः दशमेसूर्यचंद्रौ भौमबुधशुक्राएकादशे एवंविधेयोगेजातोराजपुत्रोराजाभवति ८७

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अन्यकुलजोपिधनवान्भवति १७ अथान्यद्राजयोगद्वयंवसंततिलकेनाह मेषूरणायतनुगाइति शशिमंदजीवाः चंद्रसौरगुरवः यथासंख्यं मेषूरणायतनुगाः दशमैकादशलग्नस्थाः ज्ञारौबुधभौमौ धनेद्वितीयस्थाने सितरवीशुक्रार्कौहिबुके ४ चतुर्थे एवंविधेयोगेजातोनरेंद्रोनृपोभवति तत्रैतज्जातं दशमेचंद्रः एकादशेसौरः लग्नेजीवः द्वितीयेबुधभौमौ चतुर्थेशुक्रार्कौ एवंविधेयोगेजातोराजपुत्रोराजाभवत्यन्यकुलजोधनवान् वक्रासिताविति वक्रासितौभौमसौरौशशिकुरेज्यसितार्कसौम्याः चंद्रगुरुशुक्रसूर्यबुधाःयथासंख्यं होराकुखास्तशुभखाप्तिगताः लग्नचतुर्थसप्तमनवमदशमैकादशस्थाःभवंति तदाजातः प्रजेशोराजाभवति तत्रैतज्जातं भौमसौरौलग्नगतौचतुर्थेचंद्रः सप्तमेजीवः नवमेशुक्रः दशमेसूर्यः एकादशेबुधः एवंविधेयोगेजातोराजपुत्रोराजाभवत्यन्यकुलजोधनवान् १८ अथराजयोगजातस्यकस्मिन्कालेराज्यावाप्तिर्भविष्यतीतितज्ज्ञानंस्वागतयाह कर्मलग्नयुतपाकदशायामिति राजयोगकर्तॄणांग्रहाणांमध्याद्योग्रहः कर्मणिलग्नाद्दशमेस्थितः यश्चराजयोगकर्तॄणांग्रहाणांमध्याद्योग्रहः लग्नयुतोजन्मलग्नस्थःतत्पाकदशायांतस्यसंबंधिनीयापाकदशांतर्दशाभवति

मेषूरणायतनुगाः शशिमंदजीवाज्ञारौधनेसितरवीहिबुकेनरेंद्रं वक्रासितौशशिकुरेज्यसितार्कसौम्याहोराकुखास्तशुभखाप्तिगताःप्रजेश १८ कर्मलग्नयुतपाकदशायांराज्यलब्धिरथवाप्रबलस्य शत्रुनीचगृहयातदशायांछिद्रसंश्रयदशापरिकल्प्या १९

तत्रतस्यराज्यलब्धिर्भवति अथलग्नदशमयोः द्वयोरपिग्रहोभवतः तदानयोर्योबलवान्तस्यदशायामंतर्दशाकालेराज्यलब्धिः अथतत्रबहवोयदाभवंतितदाप्रबलस्यसर्वोत्तमबलस्यांतर्दशाकाले अथवाप्रबलस्येति अथलग्नदशमौयदाशून्यौभवतस्तदाजन्मनियःप्रबलः सर्वोत्तमबलस्तस्यांतर्दशाकालेएवराज्यदःस्यात् बहुष्वंतर्दशासुयस्मिन्नंतर्दशाचारवशादतिबलवत्त्वंसंभवति तस्यामेवांतर्दशायांराज्यप्रदोभवति शत्रुनीचगृहेति लब्धराज्यस्यापिजन्मकालेशत्रुक्षेत्रस्थेननीचक्षेत्रस्थेनचग्रहेणयांतर्दशावतांतस्यांतस्मिन्बलवतिराज्यहरणंवाच्यं यतःसाच्छिद्रदशाविबलेऽपितस्मिन्नापद्भवति साचसंश्रयदशापरिकल्प्या तस्यामंतर्दशायांसंश्रयंकार्यं दैवयुक्तनृपसंश्रयगुणात्तन्मोक्षोपि वक्ष्यतिचयात्रायां अरिकोपहतदशायांजन्मोदयनाथशत्रुपाकेच स्वदशेशकारकदशाःसंश्रयणीयोनरेंद्रइति अत्रचभगवान्गार्गिः लग्नगःकर्मगोवास्यादथवाप्रबलोपियःसःस्यात्स्वांतर्दशाकालेराज्यदःप्रबलोयदा १ नीचारिगृहसंस्थस्य

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दशायांप्रबलस्यच च्युतिर्बलविहीनस्यतन्मोक्षःपरसंश्रयादिति १९ अथभोगिनांशबरदस्यस्वामिनांचजन्मज्ञानंमालिन्याह गुरुसित
बुधलग्नेति गुरुसितबुधाः जीवशुक्रसौम्याः एषामन्यतमेषलग्नगते अर्कपुत्रेसौरेसप्तमस्थेदिवसनाथेसूर्ये वियतिदशमस्थानगते ए
वंविधेयोगेभोगिनांभोगवतांजन्मविंद्याज्जानीयात् एवंविधेयोगेजातोसदैवभोगवान्भवति तस्यार्थविहीनस्यापियतः कुतश्चिद्भोगावा-
प्तिर्भवति रविबुधसितलग्नेइत्यत्रकेचित्त रविबुधसितानांसंबंधिलग्नइतिव्याख्यातं सिंहवृषतुलामिथुनकन्यालग्नेष्विति यतोदशम
स्थेर्केलग्नेबुधसितयोरवस्थानंनसंभवति आचार्येणवराहमिहिरेणपूर्वशास्त्रानुसारेणायंयोगःकृतः जीवज्ञभार्गवैर्लग्नेसप्तमस्थेर्कनंदने
दशमस्थेरवौजातोभोगवान्पुरुषोभवेत् शुभबलयुतकेंद्रैरिति शुभग्रहसंबंधिनोराशयः तेचसबलायस्यकेंद्रगताभवंति तैः तथाभूतैः
तथापापैः क्रूरग्रहैः क्रूरभस्थैः पापराश्याश्रितैः यस्यजन्मभवति सशबराणांपुलिंदानांदस्यूनांचोराणांस्वामित्वंव्रजतिगच्छति अर्थभा

गुरुसितबुधलग्नेसप्तमस्थेर्कपुत्रेवियतिदिवसनाथेभोगिनांजन्मविंद्यात् शुभबलयुतकेंद्रैःक्रूरभस्थैश्च
पापैर्व्रजतिशबरदस्युस्वामितामर्थभाक्च २० इतिश्रीभ·वि·बृ·वि·राजयोगाध्यायएकादशः ११

ग्भाग्यवान्धनवांश्चभवति शुभबलयुतकेंद्रैरिति अत्रशुभग्रहैः बलयुतैः केंद्रगतैरितिकेचिद्व्याख्यानं तच्चायुक्तं यस्माद्भगवान्गार्गिः पा
पक्षेत्रगतैः पापैःकेंद्रस्थैः सौम्यराशिभिः सबलैर्यस्यजन्मस्यात्स्यादसौदस्युनायकइति २० इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौरा
जयोगाध्यायएकादशः ११ अथातोनाभसयोगाध्यायोव्याख्यायते नाभसयोगानांचत्वारोविकल्पाः तत्राकृतियोगाएकोविकल्पः
आकृतियोगाः संख्यायोगाश्चद्विविकल्पद्वयम् आकृतियोगाः संख्यायोगाआश्रययोगाश्चविकल्पत्रयं आकृतियोगाः संख्यायोगाआश्रययो
गादलयोगौचेतिविकल्पचतुष्टयं तत्रविंशतिराकृतियोगाः सप्तसंख्यायोगाः त्रयआश्रययोगाः द्वौदलयोगौ तत्रद्वित्रिचतुर्विकल्पजानांयो-
गानांसंख्याज्ञानमौपच्छंदसिकेनाह १नवदिगिति नवप्रसिद्धादिकुशब्देनदशउच्यंते वसवोष्टौ एतेयथासंख्यंत्रिकाग्निवेदैः गुणिताः त्रि
कशब्देनत्रयएवउच्यंते अग्निशब्देनत्रयः वेदाश्चत्वारः ४ एतैःगुणिताःतद्यथा नवदिग्वसवः ९।१०।८ एतेयथासंख्यंत्रिकाग्निवेदैः ६८
३।३।४ एतैर्गुणिताजाताः २७।३०।३२ एतेयथासंख्यंद्वित्रिचतुर्विकल्पजाभवंति एतदुक्तंभवति आकृतियोगाविंशतिः संख्यायोगाःसप्त

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एवमाकृतिसंख्याविकल्पद्वयेन सप्तविंशतियोगाः भवंति आश्रययोगास्त्रयः आकृतिसंख्याआश्रयकृतेनविकल्पत्रयेणत्रिंशत् ३०
दलयोगौद्वौ आकृतिसंख्याआश्रयदलयोगकृतेनविकल्पचतुष्टेन द्वात्रिंशत् ३२ एवंद्वित्रिचतुर्विकल्पजायोगाः स्फुः भवेयुरिति यव
नैस्त्रिगुणाहीति पुराणयवनैः त्रिगुणाहिषट्शती कथिताषण्णांशतानांसमाहारः षट्शतीसाचत्रिगुणा अष्टादशयोगशतान्यभिहितानि
त्यर्थः १८०० ननुस्फुजिध्वजेनकिमुक्तं उच्यते नाभसयोगानामानंत्यं तथाचतद्वाक्यं संस्थानसादृश्यमनंतकंस्याद्रव्याणिनानाप्रकृती
निदृष्टेति कथंपुराणयवनैरष्टादशशतान्यभिहितानि उच्यंते आकृतियोगास्त्रयोविंशतिस्तैरभिहिताः संख्यायोगाश्च सप्तविंशत्यधिकं
शतंभवति एवंसार्द्धंशतंभवति तच्चैकैकंराशिंलग्नगतमधिकृत्योक्तं तस्माल्लग्नद्वादशकेनाष्टादशयोगशतानिभवंति यस्मात् सार्द्धंशतं
द्वादशाहतंअष्टादशशतानिभवंति एतेषामुत्पत्तिरध्यायांतेप्रदर्शयिष्यामः विदिताध्यायार्थस्यसुखावबोधत्वात् एवंयवनैस्त्रिगुणाषट्श

अथनाभसयोगाध्यायप्रारंभः नवदिग्वसवस्त्रिकाग्निवेदैर्गुणिताद्वित्रिचतुर्विकल्पजास्युः यवनै
स्त्रिगुणाहिषट्शती साकथिताविस्तरतोत्रतत्समासः १ रज्जुर्मुशलंनलश्चराद्यैः सत्यश्चाश्रयजान्जगा
द्योगान् नीविस्तरतः कथितोक्ता अत्रास्मिन्शास्त्रेतत्समासः तत्संक्षेपः क्रियतेविस्तरस्यसमासोभिधीयतइति पूर्वप्रदर्शिता
द्वात्रिंशद्वाभिधीयंते तत्फलेष्वन्यफलानांसमानत्वात् द्वात्रिंशत्स्वेवयोगेष्वष्टादशयोगशतान्यंतर्भवंतीति १ अथाश्रययोगत्रयंदल
योगद्वयंचौपच्छंदसिकेनाह रज्जुर्मुशलमिति चराद्यैः चरस्थिरद्विस्वभावराशिग्रहसंयुक्तैः यथासंख्यंरज्जुर्मुशलंनलश्चेतियोगत्रयंभव
ति तद्यथैकस्मिन्चरराशौचरराशिद्वयेचरराशित्रयेचरराशिचतुष्केवायदासर्वेग्रहाः भवंति स्थिरराशयोद्विस्वभावरा शयश्चसर्वेशून्याभवंति
तदारज्जुर्नामयोगोभवति एवमेकस्मिन्स्थिरराशौराशिद्वयेराशित्रयेराशिचतुष्केवायदासर्वेग्रहाः भवंति चरराशयोद्विस्वभावराशयश्चशू-
न्याभवंति तदामुशलंनामयोगोभवति एवमेकस्मिन्द्विस्वभावराशौराशिद्वयेराशित्रयेराशिचतुष्केवासर्वेग्रहाः भवंति चरराशयःस्थिररा
शयश्चशून्याभवंति तदानलाख्योयोगोभवति एतानाश्रयजान्त्रीन्योगान्सत्याचार्योजगादउक्तवान् केचित्सत्यस्त्वाश्रयजानिहाह
इति योगानितिपठंति इहास्मिन्प्रकरणेआहोक्तवानिति तथाचसत्यः सर्वेचरेषुराशिषुयदास्थितायोगमाहतंरज्जुंअनयमियस्यसतत्

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

विदेशवासार्थफलस्य सर्वेस्थिरेषु राशिषुयदास्थितास्तुशलमाहुस्तंयोगं जन्मनिकर्मकराणांफलानामर्थमानाभ्याम् द्विशरीरेषुनलइति
योगोहीनातिरिक्तदेहानां निपुणानांपुरुषाणांधनसंचयभोगिनांभवति अत्रकैश्चिद्व्याख्यातंचरराशिचतुष्केयदासर्वेग्रहाः भवंतितदार
ज्जुः स्थिरराशिचतुष्केमुशलं द्विःस्वभावराशिचतुष्केनलइति तच्चायुक्तं यस्माद्भगवान्गार्गिः एकोद्वौवात्रयः सर्वेसर्वेयुक्तायदाग्रहैः
चरयोगस्तदारज्जुः शीर्ष्याणांजन्मदोभवेत् स्थिरस्थैर्मुशलंनाममानिनांजन्मकर्तॄणाम् द्विस्वभावोनलाख्यस्तुधनिनांपरिकीर्तितः एवमा
श्रययोगत्रयंव्याख्यातंसत्यमतेन तथाचसत्यः चरराशिगैर्ग्रहैर्रज्जुः स्थिरराशिगैस्तथामुशलं द्विशरीरगतैर्योगोनलसंज्ञोमुनिभिरुद्दि
ष्टः अथदलयोगद्वयमुच्यते केंद्रैः सदसत्फलैरिति केंद्रैः यथासंख्यंसदसद्युतैः सद्ग्रहैः सौम्यैर्युतैः दलाख्योदलोयोगः स्रग्मालानाम
भवति तथाकेंद्रैरसद्ग्रहैः पापग्रहयुक्तैः दलयोगः सर्पोनामयोगोभवति एतदुक्तंभवति येषुतेषुत्रिषुकेंद्रेषुसौम्यग्रहाः बुधगुरुशुक्राः य
दाभवंति नकस्मिन्कश्चित्केंद्रेपापोभवति तदास्त्रङ्नामयोगोभवति अथयेषुतेषुत्रिषुकेंद्रेषुपापाः सूर्यभौमसौराः भवंति नकस्मिंश्चित्केंद्रे

केंद्रैः सदसत्फलैर्दलाख्यौ स्रक्सर्पौकथितौपराशरेण २

भवति सौम्यग्रहः तदासर्पोनामयोगोभवति नन्वत्रयोगद्वयेकेंद्रैः सदसद्युतैर्दलाख्याविस्फुटत्वात्त्रिषुकिमितिव्याख्यातं यस्माच्छुक्लपक्ष
कृष्णपक्षयोश्चंद्रस्यसौम्यत्वंपापत्वंचसंभवति एवंस्थितेयदासौम्याक्रांतेषुत्रिषुकेंद्रेषुक्षीणश्चंद्रमायदाचतुर्थोभवति अथवापापाक्रांतेषुत्रि
षुकेंद्रेषुक्षीणश्चंद्रमायदाचतुर्थोभवति तदापिस्रक्सर्पौयोगौभवतः नचचतुर्षुकेंद्रेषुकिमितिनव्याख्यातंउच्यते नैवम् यस्मादनेनैवस्वल्पजातके
उक्तं केंद्रत्रयगैः पापतरैर्दलाख्यावहिश्चमालाच अत्रसौम्यास्त्रयः पापास्त्रयइतिकथंज्ञायंते यथानयोर्द्वयोर्मध्येचंद्रमास्तृतीययोनभवति
उच्यते भगवतागार्गिणोक्तं त्रिकेंद्रगैर्यमारार्कैः सर्पोदुःखितजन्मदः भोगिजन्मप्रदामालातद्वज्जीवासितेंदुजैः स्रग्योगः पापवर्जितकेंद्रेषु
सर्पः सौम्यवर्जितेष्विति कथंज्ञायते उच्यते बादरायणोक्तं केंद्रत्रयपापेषुसितज्ञजीवैः केंद्रत्रिसंस्थैः कथयंतिमालाम् सर्पस्तुसौम्यैस्त्रयमार
सूर्यैर्योगाविमौद्वौकथितौदलाख्यौ एतौदलयोगौद्वौस्रक्सर्पौकथितौपराशरेणोक्तौ नतुअन्यैरप्युक्तौ उच्यते अन्यैरुक्तौ अन्यैर्नोक्तौपरा- ६९
शरेणोक्तावितिस्वशास्त्रेवराहमिहिरेणोक्तौ तथाचमणित्थः केंद्रत्रयगैः पापैः सौम्यैर्वादलसंज्ञितौ द्वौयोगौसर्पमालाख्यौविनष्टेष्टफलप्रदौ

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एवमाश्रययोगत्रयमपियोगद्वयमाह अन्यैरुक्तमन्यैर्नोक्तं अन्यैरुक्तत्वाद्वराहमिहिरेणशास्त्रसंगृहीतं एवंदलयोगद्वयंव्याख्यातम् २
अथान्यैराचार्यैर्येनकारणेनाश्रययोगत्रयंदलयोगद्वयंचनाख्यातंतत्कारणमुपजातिकयाह योगाव्रजंतीति आश्रयजायोगारज्जुमुशलन
लाख्याआकृतियोगैः यवाब्जवज्रांडकगोलकाद्यैः यवपद्मवज्रविहंगगोलकैः आदिग्रहणाद्गदाशकटाभ्यांचतथासंख्यायोगैः गोलकाद्यैः
गोलकयुगशूलकेदारैः संयोगैः आश्रयजायोगाः तुल्यतांसमत्वंव्रजंतीत्यतोन्यैर्नोक्ताः तद्व्यतिरेकेणाप्याश्रययोगानामवकाशोनास्ती-
तिवराहमिहिरेणोक्ताः यैश्चयोगैः समतांयास्यंति यत्रचैतेषामनवकाशस्तदध्यायांतेव्याख्यास्यामः केंद्रोपगैःप्रोक्तफलाविति दला
ख्यौदलयोगौद्वौकेंद्रोपगैः प्रोक्तफलौकथितफलौकेंद्रोपगतैर्ग्रहैः प्रोक्तेफलंययोः केंद्रत्रयगैः केंद्रस्थानांशुभग्रहाणांशुभंफलमुक्तं अशुभा
नामशुभमिति अतएवैमौप्रोक्तफलौकथितफलौउक्तंच वराहमिहिरेणकेंद्रत्रिकोणेषुशुभाःप्रशस्तास्तेष्वेवपापानशुभप्रदाःस्युः केंद्रत्रि
कोणगैः शुभैः शुभंफलंभवतीति माण्डव्येनोक्ता एवंकेंद्रत्रयगैःपापैः पापफलंभवतीति सर्पेणोक्तः एवमन्येअपरेआहुः कथयंतितथान्ये

योगाव्रजंत्याश्रयजाःसमत्वंयवाब्जवज्रांडजगोलकाद्यैः केंद्रोपगैःप्रोक्तफलौदलाख्यावित्याहुरन्येनपृथक्फलौतौ ३ आ
सन्नकेंद्रभवनद्वयगैर्गदाख्यस्तन्वस्तगेषुशकटंविहगःखबंध्वोः शृंगाटकंनवमपंचमलग्नसंस्थैर्लग्नान्यगैर्हलमितिप्रव
दंतितज्ज्ञा ४ नपृथक्फलावुक्तार्थत्वात् यद्येवंतर्हिकिमर्थंवराहमिहिरेणोक्तावित्यत्रोच्यते नाभसयोगोत्पत्तिवशात्समस्तदशास्वपिफल
दौभवतः यदाकेंद्रोपगानांयोगंविनाफलमंगीक्रियते तदास्वदशास्वेवफलंप्रयच्छंति एतच्चपराशरादीनांमतं तेषांमतंयथानाभसयोगावेतौ-
समदशास्वपिफलप्रदौतेनवराहमिहिरेणोक्तौ ३ अथाकृतियोगान्सप्तगदाशकटविहगशृंगाटकहलाख्यान्वसंततिलकेनाह आसन्नेति
आसन्नेनिकटवर्त्तिनिकेंद्रभवनद्वयेकंटकराशियुग्मेयदासर्वेग्रहाः भवंतितदागदाख्योयोगोभवति सचचतुःप्रकारः लग्नचतुर्थस्थैः सर्व-
ग्रहैरेकः चतुर्थसप्तमस्थैर्द्वितीयः सप्तमदशमस्थैस्तृतीयः दशलग्नस्थैश्चतुर्थः तन्वस्तगेष्विति तन्वस्तगेषु लग्नसप्तमगेषुसर्वग्रहेषुश
कटंभवति खबंध्वोः दशमचतुर्थयोः स्थितेषुसर्वग्रहेषुविहगाख्योयोगः नवमपंचमलग्नस्थैः सर्वग्रहैः शृंगाटकाख्योयोगोभवति लग्ना
न्यगैर्हलमिति लग्नंवर्जयित्वायथासंभवमन्येसर्वेग्रहाः परस्परंत्रिकोणगताभवंति तदाहलमितियोगः तज्ज्ञाः होराशास्त्रपंडिताः प्रवदंतिकथयंति

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सन्त्रिप्रकारः द्वितीयषट्दशमस्थैः सर्वग्रहैरेकः तृतीयसप्तमैकादशस्थैर्द्वितीयः प्रकारः चतुर्थाष्टमद्वादशस्थैस्तृतीयःप्रकारइति ४ अथवज्रयवकमलवापीसंज्ञं योगचतुष्टयं वैतालीयेनाह शकटांडमिति शकटवच्छुभैः व्यवस्थितैरंडजवदशुभैश्च वज्रं भवति एतदुक्तं भवति लग्नसप्तमयोः सौम्याश्चतुर्थदशमयोश्च पापा भवंति नान्यत्र केचित्तदा वज्राख्यो योगो भवति तद्विपरीतगैर्यवः तएव ग्रहा यदि विपरीतगता भवंति तदा यवाख्यो योगो भवति शकटवदशुभाः अंडजवच्छुभाः एतदुक्तं भवति लग्नसप्तमयोः पापाः स्थिताः चतुर्थदशमयोश्चशुभाः स्थितास्तदा यवाख्यो योगो भवति कमलंविति एतैरेव सौम्यपापैः विमिश्रसंस्थितैश्चतुर्ष्वपि केंद्रेषु समवस्थितैः कमलाख्यो योगो भवति तदेव कमलं यदि केंद्राद्बाह्यतो भवति तदा वापीसंज्ञो योगः एतदुक्तं भवति सर्वैरेव केंद्रबाह्यतः स्थितैः केंद्राणि वर्जयित्वान्यत्र पणफरापोक्लिमेषु स्थितैस्तदेव कमलं वापीसंज्ञो भवति योगः पणफरेषु चतुर्ष्वापोक्लिमेषु चतुर्ष्विति ५ अथवज्रयवयोः संभवो न भवति तौ च मया पूर्वशास्त्रा

अ॰१ शकटांडवच्छुभाशुभैर्वज्रं तद्विपरीतगैर्यवः कमलं तु विमिश्रसंस्थितैर्वापी तद्यदि केंद्रबाह्यतः ५ पूर्वशास्त्रानु
सारेण मया वज्रादयः कृताः चतुर्थे भवने सूर्याज्ज्ञसितौ भवतः कथम् ६ कंटकादिप्रवृत्तैस्तु चतुर्गृहगतैर्ग्रहैः यूपे
षुशक्तिदंडाख्या होराद्यैः कंटकैः क्रमात् ७

नुसारेण कृतावित्येतदनुष्टुभाह पूर्वशास्त्रानुसारेणेति पूर्वशास्त्रानुसारेण पूर्वाचार्यैः मययवनादिभिः वज्राख्यो योगः कृतः यवाख्यश्च तस्मान्मयापि कृतः वज्रादय इति बहुवचननिर्देशोऽन्येषामेवं कारणांप्रदर्शनार्थः वज्रादयो योगा यद्यपि न संभवंति तथापि पूर्वशास्त्रानुसारेण मया कृताः तानप्यनुसृत्य दृष्टेत्यर्थः यतः सूर्यादादित्याच्चतुर्थे भवने चतुर्थराशौ पूर्वेण पश्चिमेन वा ज्ञसितौ बुधशुक्रौ कथं भवतः न कदाचिदर्कोदयेऽस्तसमये वा मध्याह्नार्द्धरात्रयोः बुधशुक्रौ भवतः आदित्ये मध्याह्नस्थेऽर्धरात्रस्थे वानयोरुदयेऽस्तमये वा न भवत्येव ६ अथ यूपेषुशक्तिदंडाख्यं योगचतुष्टयमनुष्टुभाह कंटकादीति होरा लग्नं तदाद्यैः केंद्रैः क्रमात्सरिपाद्या लग्नकेंद्रमादितः कृत्वा चतुर्षु गृहेषु यथासंभवं सर्वग्रहाणामवस्थानं भवति तदा यूपेषुशक्तिदंडाख्याश्चत्वारो योगा भवंति तद्यथा लग्नद्वितीयतृतीयचतुर्थेषु चतुर्ष्वपि यदा सर्वे ग्रहा भवंति तदा यूपाख्यो योगो भवति अथ चतुर्थपंचमषष्ठसप्तमेषु चतुर्षु सर्व एव ग्रहा भवंति तदेषुः शराख्यो योगः अथ सप्तमाष्टमनवमदशमेषु चतुर्षु सर्व एव ग्रहा भवंति तदा शक्तियोगः अथ दशमैकादशद्वादशलग्नेषु चतुर्षु स ७०

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वैश्वर्यग्रहाभवंति तदादंडयोगइति ७ अथनौकूटछत्रचापार्द्धचंद्राख्यंयोगपंचकमनुष्टुभाह नौकूटछत्रेति तदुक्तेनैवप्रागुक्तेनप्रकारेणल-
ग्नकेंद्रादारभ्यैकैकस्मात्केंद्रात्सप्तभिर्ग्रहैः समर्क्षसंस्थितैः नौकूटछत्रचापसंज्ञंयोगचतुष्टयंभवति तद्यथा लग्नद्वितीयतृतीयचतुर्थपंचम
षष्ठसप्तमेषुयदासर्वेग्रहाः भवंति तदानौर्नामयोगोभवति एवंचतुर्थपंचमषष्ठसप्तमाष्टमनवमदशमेषुयदासर्वेग्रहाः भवंतितदाकूटाख्यो
योगोभवति अथसप्तमाष्टमनवमदशमैकादशद्वादशलग्नेषुसर्वेग्रहाभवंति तदाछत्राख्यंयोगं अथदशमैकादशद्वादशलग्नद्वितीयतृ-
तीयचतुर्थेषुयदासर्वेग्रहाभवंति तदाचापंचापाख्यंयोगं अर्द्धचंद्रइति नावाद्यैरेवयोगैरन्यर्क्षसंस्थितैः अपरराशिव्यवस्थितैरर्द्धचंद्रा
ख्योयोगोभवति नावाद्याःकंटकेषूक्ताः तैश्चान्यर्क्षसंस्थितैः अपरराशिगतैः तेनपणफरेभ्यः आरभ्यनिरंतरंसप्तसुगृहेषुयदासर्वेग्र-
हाभवंत्यापोक्लिमेभ्योवातदर्द्धचंद्राख्यः सचाष्टप्रकारः तद्यथा द्वितीयतृतीयचतुर्थपंचमषष्ठसप्तमाष्टमेषुसप्तसुसर्वेग्रहायदाभवंति-
तदेकः एवंतृतीयादिनवमांतेषुद्वितीयः पंचमादिष्वेकादशांतेषुतृतीयः षष्ठादिषुद्वादशांतेषुचतुर्थः अष्टमादिषुद्वितीयांतेषुपंचमः

नौकूटछत्रचापानितद्वत्सप्तर्क्षसंस्थितैः अर्द्धचंद्रस्तुनावाद्यैःप्रोक्तस्त्वन्यर्क्षसंस्थितैः ८ एकांतरगतै-
रर्थात्समुद्रःषड्गृहाश्रितैः विलग्नादिस्थितैश्चक्रमित्याकृतिजसंग्रहः ९ संख्यायोगाःस्युः सप्तसप्तर्क्षसं-
स्थैरेकापायाद्वल्लकीदामिनीच ॥

नवमादिषुतृतीयांतेषुषष्ठः एकादशादिषुपंचमांतेषुसप्तमः द्वादशादिषुषष्ठांतेषुयदा-
सर्वेग्रहाभवंतितदाऽष्टमइति ८ अथसमुद्रचक्राख्यौद्वौयोगावनुष्टुभाह अर्थाद्द्वितीयस्थानादारभ्यैकांतरगतैर्ग्रहैः षड्गृहाश्रि-
तैः षड्राशिषुव्यवस्थितैः सप्तभिर्ग्रहैः समुद्राख्योयोगोभवति तद्यथा द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशेषुषट्सुयदासप्तग्रहाभवंति
तदासमुद्राख्योयोगः विलग्नादिस्थितैरिति अनेनैवप्रकारेणविलग्नाल्लग्नात्प्रभृत्येकांतरस्थैः षड्गृहेषुसप्तभिर्ग्रहैः स्थितैः चक्राख्यो
योगोभवति तद्यथा लग्नतृतीयपंचमसप्तमनवमैकादशेषुषड्गृहेषुयदासर्वेग्रहाः भवंति तदाचक्राख्योयोगोभवति इत्येवंप्रकारेण
आकृतिजानामाकारवशादुत्पन्नानांसंग्रहोव्याख्यातः ९ अथसंख्यायोगसप्तकंशालिन्याह संख्यायोगाइति सप्तभिर्ग्रहैः सप्तर्क्ष-
संस्थैः सप्तसुराशिषुगतैरेकापायादेकापगमात्क्रमात्सप्तसंख्यायोगाःस्युः भवेयुः तेचवल्लक्यादयोगोलांताः तद्यथा येष्वतेषुसप्तसु

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गृहेषुयदासर्वेग्रहाभवंति तदावल्लकीनामयोगोभवति यदाषट्सुगृहेषुसमस्तग्रहाभवंति तदादामिनीनामयोगोभवति एवंपंचस्वस-
मग्रहाः पाशः पाशोयोगः चतुर्षुकेदारः केदारोयोगः त्रिषुशूलः शूलोयोगः द्वयोर्युगर्यगनामयोगः एकस्मिन्राशौसमस्तग्रहायदाभवंति
तदागोलःगोलनामायोगः अन्यान्पूर्वमुक्तान्विहाय पूर्वोक्तानन्यान्योगान्विहायवर्जयित्वाएतेयोगाः भवंति एतदुक्तंभवति यथोक्तानांयो
गानांमध्याद्यदिसंख्यायोगस्यसादृश्यंभवति तदासंख्यायोगोनांगीकार्यः सएवयोगोग्राह्यइति १० अथाश्रययोगत्रयजातानांदलयो
गद्वयजातानांचफलंवसंततिलकेनाह ईर्ष्युरिति ईर्ष्युः समत्सरः परर्द्धिमत्सरी विदेशनिरतः परदेशाध्यासनशीलः अध्वरुचिः सततमटनः
ननुविदेशनिरतएवाध्वरुचिः तत्किमत्रद्वयोर्ग्रहणं उच्यते विदेशेप्यनेकप्रदेशाध्यासनशीलोभवतिसततमटनोनभवति एवंविधोरज्वाख्या-
ख्ययोगेजातोभवति मानीगर्वितः धनीवित्तवान् बहुषुकृत्येषुकार्येष्वासक्तः बहुकर्मारंभशीलः एवंविधोमुशलाख्येयोगेजातोभवति व्यंगो
गहीनः विगतमंगंयस्य स्थिरोदृढनिश्चयः आढ्योधनवान्निपुणः कार्येषु सूक्ष्मदृष्टिः एवंविधोनलजोनलाख्येयोगेजातोभवति एवमा

पाशःकेदारःशूलयोगोयुगंचगोलश्चान्यान्पूर्वमुक्तान्विहाय १० ईर्ष्युर्विदेशनिरतोध्वरुचिश्चरज्वांमानीधनीच
स्पाद्
मुशलेबहुकृत्यसक्तः व्यंगस्थिराढ्यनिपुणोनलजःस्रगुत्थोभोगान्वितोभुजगजोबहुदुःखभाक्स्यात् ११ आ
फ्र२
श्रयोक्ताःस्युर्विफलाभवंत्यन्येर्विमिश्रिताः ॥ आश्रययोगत्रयजातानांफलंव्याख्यातं स्रगुत्थोभोगान्वितइति स्रगुत्थः स्र-
ग्योगेजातोभोगान्वितोभवति भुजगजोभुजगाख्येसर्पयोगेजातोबहुदुःखभाक्स्यात् नानाप्रकाराणांदुःखानांभोगीभवति केचिद-
त्रबहुवचनंपठंति व्यंगाः स्थिराढ्यानिपुणानिलजाः स्रगुत्थाः भोगान्विताभुजगजाबहुदुःखभाजइतिनकश्चिद्दोषः एवंदलयोगद्वय-
जातानांफलंव्याख्यानम् ११ अथान्योयोगाश्रययोगश्चयदासमकालंयत्रदृश्यतेतत्राश्रययोगस्यनिराकरणार्थमनुष्टुभाह आश्रयो-
क्तास्त्विति यत्रान्योयोगआश्रययोगश्चभवति तत्राश्रययोगोन्येनयवादिनामिश्रोभवति मिश्रितत्वाच्चाफलोभवति स्वंफलंनाश्रय
च्छति एवमन्येरपरैः विमिश्रितानिःफलाभवंति यस्त्वमिश्राः सादृश्यंगतास्तेतत्रफलंदद्युः केचिन्मिश्रायेस्तेफलंतेषामितिपठंति अमि ७१
श्रास्त्वन्यैः यदाभवंति तदास्वफलप्रदाआत्मीयंफलंददति तत्रचरराशौलग्नगतेस्थिरद्विस्वभावस्थैरमिश्राः स्थिरलग्नेचरद्विस्वभावगते

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

रमिश्राः हिस्वभावेचलचरस्थिरगतेरमिश्राइति १२ अथगदाशकटविहगशृंगाटकहलाख्येषु योगेषुजातानांस्वरूपंवसंततिलकेनाह य ज्वार्थभागिति यज्वायजनशीलः अर्थभाग्धनवानांभाजनंसततंसर्वकालमर्थरुचिः अर्थार्जनोद्यमशीलः एवंविधोगदाख्येयोगेजातोभवति तद्वृत्तिभुगिति तदितिशकटपरामर्शः तद्वृत्तिभुक् शकटवृत्तिंभुंक्ते शकटाजीवीभवतीत्यर्थः सरुजोव्याध्यर्दितः कुदारः कुत्सितभार्यः एवंविधः शकटजः शकटयोगेजातोभवति दूतोटनइति दूतः परसंदेशप्रापणार्थंपरसकाशगामी अटनः परिभ्रमणशीलः ननुदूतेनाव्यवश्यमटनेनभवितव्यं उच्यते परेच्छयागमनशीलोदूतः अयंपुनः स्वेच्छयाटनः तदुभयभाग्भवति कलहकृत्कलहशीलः एवंविधोविहगाख्येयोगेजातोभवति प्रदिष्टःउक्तः चिरेणसुखीचिरसुखीवयोंतेसुखीत्यर्थः एवंविधोशृंगाटकाख्येयोगेजातोभवति अन्येचिरंसुखीचिरसुखीशृंगाटकेव्याख्यानः तच्चायुक्तं यस्माद्भगवान्गार्गिः ललाटंचमधर्मस्थैर्योगैः शृंगाटकोमतः वयोंतेसुखिनांजन्म तत्रस्यात्स्वादुभाषिणां कृषिकृद्धलाख्ये हलाख्येयोगेजातः कृषिकृद्भवति कृषिंकरोतीत्यर्थः १३ अथवज्रयवपद्मवापीजातानांस्वरू

मिश्रायैस्तेफलंदद्युरमिश्राःस्वफलप्रदाः १२ यज्वार्थभाक्सततमर्थरुचिर्गदायांतद्वृत्तिभुक्शकटजःसरुजः कुदारः दूतोटनःकलहकृद्विहगेप्रदिष्टःशृंगाटकेचिरसुखीकृषिकृद्धलाख्ये १३ वज्रेंत्यपूर्वसुखिनःसुभगोतिशूरोवीर्यान्वितोप्ययययवेसुखितोवयोंतः विख्यातकीर्त्यमितसौख्यगुणश्चपद्मेवाप्यांतनुस्थिरसुखोनिधिकृन्नदाता १४

पंवसंततिलकेनाह वज्रेंत्यपूर्वसुखिनइति अंत्येवयोंत्येसुखिनः पूर्वेसुखिनश्च बाल्येसुखी यौवनेदुःखितोवृद्धत्वेपुनरेवसुखीभवतीत्यर्थः सुभगः सर्वजनवल्लभः अतिशूरोतीवसंग्रामधीरः एवंविधोवज्राख्येयोगेजातोभवति शौर्यान्वितः पराक्रमयुक्तः अथशब्दः पादपूरणे वयोंतः वयोमध्येसुखी अंतः शब्दोत्रमध्यपर्यायः एवंविधोयवाख्येयोगेजातोभवति विख्यातकीर्तिः सर्वजनप्रसिद्धकीर्तिः ननुकिमत्रविख्यातकीर्तिरस्ति उच्यते अस्तिकश्चिज्जनो यथाकीर्तिप्रापककर्मभिः शनैरपिपरंप्रख्यातकीर्तिंप्राप्नोति अमितसौख्यगुणः अपरिमितसौख्योऽपरिमितगुणश्च गुणाः विद्याशौर्यादयः एवंविधः पद्माख्येयोगेजातोभवति तनुस्थिरसुखंतनुस्वल्पंस्थिरंचिरकालस्थायिसुखंयस्यसस्वल्पसुखंबहुकालंभवतीत्यर्थः निधिकृत् भूमावर्थस्थापनशीलः नदाताकदर्यः एवंविधोवापीसंज्ञेयोगेजातोभवति १४ ७

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

 

अथयूपशरशक्तिदंडाख्येयोगचतुष्टयेजातानांस्वरूपंवसंततिलकेनाह त्यागीत्यावानिति त्यागीदाता आत्मवानप्रमादी क्रतुवरैर्यज्ञश्रेष्ठैर्यज्ञैः यजते एवंविधोयूपाख्येयोगेजातोभवति हिंस्रेति हिंस्रोवधरुचिःगुप्त्यधिकृतः बंधनपालः शरकृत् शरकारः एवंविधश्चशराख्येयोगेजातोभवति नीचः अधमानामकुलोचितानांकर्मणांकर्ताअलसः क्रियास्वपटुः सुखधनैर्वियुक्तोभोगवित्तविवर्जितः निःसुखोनिर्धनश्च एवंविधः शक्तौयोगेजातोभवति प्रियैःपुत्रादिभिः विरहितः वर्जितः अंत्यवृत्तिः दासवृत्तिः शूद्रवृत्तिरित्यर्थः एवंविधोदंडाख्येयोगेजातः पुरुषोभवति १५ अथनौकूटछत्रकार्मुकजातानांस्वरूपंवसंततिलकेनाह कीर्त्यान्वितश्चलसुखइति कीर्त्यान्वितः ख्यातयशाः चलसुखः कदाचित्सुखीकदाचिद्दुःखी कृपणः अदाता चशब्दोत्रसमुच्चयार्थे एवंविधोनौजः नावाख्येयोगेजातः प्राणीभवति कूटेनृतइति अनृतेप्लुवनामतिर्यस्यासावनृतप्लुवनः असत्याभिधायीअसत्याभिभाषीच बंधनपः बंधनंपातीतिबंधनपः केचित्कूटेऽनृतरूपबंधनपश्चजातइति

त्यागात्मवान्क्रतुवरैर्यजतेचयूपेहिंस्रोथगुप्त्यधिकृतःशरकृच्छराख्ये। नीचोलसःसुखधनैर्वियुतश्चशक्तौ
दंडेप्रियैर्विरहितःपुरुषोंत्यवृत्तिः १५ कीर्त्यान्वितश्चलसुखःकृपणश्चनौजःकूटेनृतप्लुवनबंधनपश्चजातः
छत्रोद्भवःस्वजनसौख्यकरो,सौख्यश्शूरश्चकार्मुकभवःप्रथमांत्यसौख्यः १६ अर्धेंदुजःसुभगकांतवपुःप्रधा
नस्तोयालयेनरपतिप्रतिमस्तुभोगी। पठंति एवंविधः कूटाख्येयोगेजातोभवति इतिकूटयोगः छत्रोद्भवइति स्वजनसौख्यकरः स्वजनेषुसुखंकरोतीति स्वजनसौख्यकरः अंत्यसौख्योवृद्धत्वेसुखितः एवंविधः छत्राख्येयोगेजातोभवति इतिछत्रयोगः कार्मुकः शूरश्च संग्रामप्रियः प्रथमांत्यसौख्यः प्रथमेबाल्येसुखी अंत्येवृद्धत्वेसुखीच एवंविधः कार्मुकभवः चापाख्येयोगेजातोभवति इतिचापयोगः १६ अथार्द्धचंद्रसमुद्रचक्रवल्लकीजातानांस्वरूपंवसंततिलकेनाह अर्द्धेंदुजइति सुभगः सर्वजनप्रियः कांतवपुः प्रदर्शनीयः प्रधानः सर्वजनपूज्यः एवंविधोर्धेंदुजोऽर्द्धचंद्राख्येयोगेजातोभवति समुद्रयोगः नरपतिप्रतिमः राज्ञातुल्यः भोगीभोगवांश्च एवंविधस्तोयालयेसमुद्राख्येयोगेजातोभवति चक्रेति नरेंद्राराजानः तेषांमुकुटाः किरीटाः चूडामणिरत्नानितेषांद्युतिः कांतिः तयारंजितौद्युरितावंघ्रीपादौयस्यराजानः तस्यपादयोःपतंति महाराजाधिराजोभवतीत्यर्थः नपोज्ञानादियोगाद्राज्ञांपूजनीयोवा एवंविधश्चक्रा ७२

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ख्ये योगे जातो भवति आकृतियोगविंशतिजातानां फलं व्याख्यातं अत्रैव मूशलसंख्यायोगानां फलं व्याख्यायते वीणोद्भवश्चेति नि
पुणः सूक्ष्मदृष्टिः प्रियगीतनृत्यः गीतप्रियो नृत्यप्रियश्च एवंविधो वीणोद्भवो वीणाख्ये योगे जातो भवति १७ अथ दामिनी पाशकेदार
शूलजातानां स्वरूपं वसन्ततिलकेनाह दातान्यकार्येति दाता उदारः अन्यकार्यनिरतः परोपकारासक्तः पशुपः पशुरक्षिता बहुपशुभाग्भ-
वति अथवा पशुपपाठे पशूनां पालयिता रक्षयिता ग्रामाधिपतिरित्यर्थः एवंविधो दाम्नियोगे जातो भवति पाशइति धनार्जनेविशी-
लः धनार्जनविशीलः धनार्जनविशीलश्चासौ सभृत्यबंधश्च धनार्जनविशीलसभृत्यबंधुः स्वयमेव धनार्जने विशीलः सन्मार्गेण धनार्जनं करोति तथा भृतास्य भृ
त्याः कर्मकरा बांधवाश्च भवंति एवंविधः पाशाख्ये योगे जातो भवति केदारजइति कृषिकरः कृषिं करोति सुबहूपयोज्यः सुष्ठु शोभनं-
कृत्वा बहूनामुपयुज्यते उपकरोति एवंविधः केदारजः केदाराख्ये योगे जातो भवति शूरः समरधीरः क्षतः प्रहारितः धनरुचिः अर्थप्रियः

चक्रे नरेंद्रमुकुटद्युतिरंजितांघ्रीर्वीणोद्भवश्च निपुणः प्रियगीतनृत्यः १७ दातान्यकार्यनिरतः पशुपश्च दा
म्नि पाशधनार्जनविशीलसभृत्यबंधः केदारजः कृषिकरः सुबहूपयोज्यः शूरः क्षतो धनरुचिर्विधनश्च शूले-

१८ केचिद्धनरुचिविरतिं पठंति विधनश्च दरिद्रः एवंविधा शूलाख्ये योगे जातो भवति १८ अथ युगगोलयोर्जातस्य रूपं सर्वे
षां नाभसयोगानां समस्तदशास्वपि फलप्रदर्शनं हरिण्याह धनविरहितइति धनविरहितः अर्थहीनः पाखंडी त्रयीमार्गव्यपेतः एवं
विधो युगाख्ये योगे जातो भवति केचिद्धनविरहितः पाखंडी चेति पठंति वाशब्दोऽत्र चार्थे अर्थहीनः पाखंडी च अथ शब्द आनंतर्यविध
नोर्थहीनः मलिनो मलोपेतशरीरः मलिनवासा वा अज्ञानोपेतः मूर्खः कुशिल्पो लोके निंद्यशिल्पकर्ता अलसः क्रियास्वसमर्थः अट
नोऽभ्रमणशीलः नन्वत्रालसोऽटनश्चेति विरुद्धमुच्यते यद्यपि स्वरूपेणालसः तथाप्यतिदारिद्र्याद्भोजनक्रियामटनं विना संपादयितुमश
क्यत्वादटनः एवंविधो गोलाख्ये योगे जातो भवति एवं समस्तसंख्यायोगेषु शुभफलं व्याख्यातं इतिनिगदिता योगाइति इत्येवं
प्रकारा नाभसयोगाः फलैः सार्द्धसह निगदिता उक्ता इहास्मिन्नध्याये एते समस्तदशास्वपि नियतफलदाः सर्वकालफलप्रदाः चिंत्या
विज्ञातव्याः ननु वज्रादिषाद्यंतसु रविनामदर्शिनानत्कथं समस्तदशास्विति उच्यते तेषां वचनाद्यथा दर्शिनिकालः सुखदुःखयो-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

र्भविष्यति येषांकालविभागोनोक्तस्तेषांसमस्तदशास्वपियथादर्शितसुखदुःखप्रदाभविष्यंति ननुकस्यचित्समस्तंजन्मसुखेनदुःखेनचैकरूपेणगच्छति येनभोगिनः तेपिमानसैर्दुःखैरभिभूताभवंति येपिभिक्षाशिनस्तेपिकदाचिद्धर्माभिभूताभवंति शीतलासुद्रुमच्छायासुसुखितमित्यात्मानंमन्यंते तस्मादेवमादिसुखंदुःखंसर्वेणसंसारजातेनविपर्ययेणानुभूयते तत्कथंसमस्तदशास्वपियोगाः फलप्रदाभवंति उच्यते नैतेयोगादशाष्टकवर्गफलहंतारः शुभमशुभंवाफलंदशापतिर्ददत्यष्टकवर्गाश्रितमपिफलंच अतोयथाकालंयोगाअपिसमग्रजन्मनिफलंददत्येवंमिश्रफलानुभवोभोगिनांदरिद्राणांचसंभवत्येव एवंतावन्नाभसयोगाध्यायोव्याख्यातः अस्मिन्नध्यायेयदुक्तंपूर्वंमनिज्ञातंतदुच्यते दलयोगाकृतियोगयोः समकालमुपस्थानंनास्तितथादलयोगैः सहाश्रययोगानांतुल्यकालमुपस्थानंनास्त्येव अथदलयोगैः सहसंख्यायोगायुज्यंते तदादलयोगफलमेवभवति अथाकृतियोगाआश्रययोगैर्युज्यंते तदाआकृतियोगफलंभवति अथाकृतियोगाः संख्यायोगैर्युज्यंते तथाप्याकृतियोगफलंभवति यस्मात्संख्यायोगानामपवादः अन्यान्पूर्वमुक्तान्विहाय आश्रययोगानामप्यपवा

धनविरहितः पाखंडीवा युगेत्वथगोलके विधनमलिनोऽज्ञानोपेतः कुशल्यलसोटनः

दः आश्रययोगास्तु विफलाभवंत्यनेनैर्विमिश्रिताइति तस्मात्संख्यायोगाआश्रययोगाश्च आकृतियोगैश्चाभिभूयंते अथाश्रययोगेनसहसंख्यायोगस्योपस्थानंभवति तदासंख्यायोगस्यावकाशएवनभवति अथाश्रययोगेनसंख्यायोगस्यापवादशमनेकृतेनान्योवकाशः संख्यायोगस्यकिंत्वेकस्मिन्राशौयदासर्वेग्रहाःभवंति तदाआश्रययोगएवभवति नन्वाश्रययोगसंख्यायोगानांतुल्येअपवादे आश्रययोगेनसंख्यायोगः कथमभिभूयते उच्यते यदिसंख्यायोगेनाश्रययोगोपशमनंभवतितदाआश्रययोगोनभवति संख्यायोगोभवति यत्रयदाआश्रययोगेनसंख्यायोगोभिभूयते तदागोलस्यावकाशएवनस्यात् परिभाषाचेयं निरवकाशाहिविधयः सावकाशान्विधीन्बाधंतेइति अथैकैकराशिलग्नगतमधिकृत्यपुराणयवनमतेनयत्सार्द्धयोगशतमुक्तं तदधुनाप्रदर्श्यते तेषांतावद्यो विंशतिराकृतियोगाः विंशतिरेववराहमिहिरेणाभिहिताः किंतुतेषांमध्यात्गदायोगेनचत्वारोयोगाअभिहिताः लग्नचतुर्थयोः यदासर्वेग्रहाभवंति तदागदायोगः चतुर्थसप्तमयोः शंखः सप्तमदशमयोः वभूकः दशमलग्नयोः ध्वजः तत्रपूर्वोक्ताविंशतिः शंखवभ्रुध्वजैः सह



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

त्रयोविंशतिः भवंति संख्यायोगानां सप्तविंशत्यधिकं शतं एवं सार्द्धशतं १५० राशिद्वादशकेनाष्टादशशतानि भवंति १८०० तत्र सप्तत्यधिकस्य संख्यायोगशतस्योत्पत्तिः प्रदर्श्यते तद्यथैषां विकल्पाः सप्त द्विविकल्पा एकविंशतिः त्रिविकल्पाः पंचत्रिंशत् ३५ चतुर्विकल्पाः पंचत्रिंशत् ३५ पंचविकल्पा एकविंशतिः २१ षड्विकल्पाः सप्त सप्तविकल्प एकः एतदेकीकृतं सप्तविंशत्यधिकं शतं भवति १२७ एतदेव वराहमिहिरेण विवाहपटले उक्तम् द्वित्र्यादियोगान्परिगृह्य कस्मान्नोक्तं शतं सत्रिधनं विलग्न इति अथ विकल्पगणितं प्रदर्श्यते तत्राचार्येण विकल्पगणितं संहितायामुक्तम् पूर्वेण पूर्वेण गतेन युक्तं स्थानं विनान्त्यं प्रवदंति संख्यां इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिरिति अत्र यावत्संख्यानां विकल्पाः क्रियंते तदंतानेकाद्यानुपर्युपरि स्थापयेत् तद्यथात्र सप्तग्रहैः एकाद्यानां सप्तानां न्यासः ७।६।५।४।३।२।१ अत्र पूर्वेण गतेन युक्तं स्थानं विनान्त्यमिति पूर्वश्चासौ गतश्च पूर्वगतः तेन पूर्वेण गतेन युक्तमंत्यमुपरिसंस्थं विनान्तर्जयित्वेत्यर्थः प्रथममेकमधः स्थितं तयोर्द्वयोरुपरिस्थयोः क्षिपेत् एवं तत्र त्रीणि रूपाणि जातानि तानि च स्वोपरि त्रिषु क्षिपेत् एवं तत्र षड्जातानि ता

इति निगदिता योगाः सार्द्धफलैरिह नाभसा नियतफलदाश्चिंत्यास्त्वेते समस्तदशास्वपि १९

नि स्वोपरि चतुर्षु क्षिपेत् एवं तत्र दश रूपाणि जातानि तानि स्वोपरि पंचसु क्षिपेत् तत्र पंचदश जातानि तानि स्वोपरि षट्सु क्षिपेत् तत्रैकविंशतिर्जातानि अतः पंचकर्मणोऽभावात्तदुपरि सप्तैव स्थिताः यदुक्तं स्थानं विनान्त्यं पुनरप्यधः प्रभृत्येवं कृत्वा पंचमे स्थाने पंचत्रिंशज्जाताः पुनरपि चतुर्थे पंचत्रिंशत् पुनस्तृतीये एकविंशतिः पुनः द्वितीये सप्त प्रथमे एकैव १।२१।३५।३५।२१।१।१ अथवान्येन प्रकारेण संख्यानयनं प्रतिलोमं विनिक्षिप्य चानुलोमं मध्यः क्षिपेत् अनुलोमं संस्था हन्यादधस्थेन विभाजयेत् न्यासः अत्र सप्तानामधो रूपं छेदः

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ७ | ६ | ५ | ४ | ३ | २ | १ | ० |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ० |

अनेन भागमपहृत्य लब्धं सप्त ७ एतैः द्वितीयस्थाने षड्संगुण्याधः स्थिताभ्यां द्वाभ्यां भागमपहरेत् लब्धमेकविंशतिः २१ एतैस्तृतीयस्थाः पंचसंगुण्य त्रिभिः भजेल्लब्धं पंचत्रिंशत् ३५ एतैश्चतुर्थस्थानस्थाश्चत्वारि संगुण्य चतुर्भिः भजेल्लब्धं पंचत्रिंशत् ३५ एभिः त्रीणि संगुण्य पंचभिः विभाज्यावाप्तमेकविंशतिः २१ एभिर्द्वे संगुण्य षड्भिः विभज्यावाप्तं सप्त एभिरेकं संगुण्य सप्तभिः विभज्यावाप्तमेक एव एवमेकद्वित्रिचतुः पंचषट्सप्तविकल्पाः एवं विविकल्पग

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

णिनंकृत्वायथेष्टसंख्यानांव्याख्येयं अथैतेषांविकल्पानांलोष्टकप्रस्तारेणोद्धारः कर्तव्यः इच्छाविकल्पैःक्रमशोभिनीयनीतेनिवृत्तीः पुनर
न्यनीतिरिति यथेष्टसंख्यानांविकल्पानामाद्याक्षराणिलिखेत् तत्रैकविकल्पेष्वेकैकंलोष्टचिन्हंकृत्वाविकल्पान्उत्पादयेत् द्विविकल्पेष्वाद्यस्थिरं
लोष्टचिन्हंकृत्वाद्वितीयेनलोष्टचिह्नितेनसहविकल्पान्उत्पादयेत् एवंत्र्यादिषुविकल्पेष्वाद्यंस्थिरंलोष्टचिह्नितंकृत्वान्यैः चरलोष्टचिह्नितैः स-
हान्यस्त्वाविकल्पान्उत्पादयेत् एवंकृत्वाप्रथमस्यापासनंकार्यं नीतेनिवृत्तिरितिवचनात् ततोन्यस्थिरचिन्हंकृत्वान्यसेत् पुनरन्यनीतिरिति-
वचनात् उक्तंच भट्टश्रीशंकरेण वर्णसंख्यांककोष्ठाख्यां क्षेपक्षोऽज्ञेयसंख्यकः ज्ञेयोन्त्यसान्यत्रनत्पूर्वहान्पूर्वश्चाप्यनुक्रमात् नयेद्द्याद्य
मंत्यस्थाद्येषूर्ध्वेनानिरंतरं ज्ञेयोंत्यःपुनराद्यश्चकोष्ठनिष्ठावधिर्विधिरिति तद्यथैकविकल्पाः रविः चंद्रः भौमः बुधः गुरुः शुक्रः शनिः एव
मेकविकल्पाः सप्त ७ अथद्विविकल्पना रविचंद्रौरविभौमौ रविबुधौ रविजीवौ रविशुक्रौ रविसौरौ एवमादित्येनसहषट् अथद्वि
तीयविकल्पः शशिभौमौ शशिबुधौ शशिजीवौ शशिशुक्रौ शशिसौरौ एवंचंद्रेणसहपंच भौमबुधौ भौमजीवौ भौमशुक्रौ भौ

इतिश्रीभट्टोत्पलविरचितायांबृहज्ज्ञानकविवृतौनाभसयोगाऽध्यायद्वादशः समाप्तः १२ शुभंभवतु॥

मसौरौ एवंभौमेनसहचत्वारः बुधजीवौ बुधशुक्रौ बुधसौरौ एवंबुधेनसहत्रयः जीवशुक्रौ जीवसौरौ एवंजीवेनसहद्वौ शुक्रसौरौ-
एवंशुक्रेणसहएकः एवंद्विविकल्पः एकविंशतिः अथत्रिविकल्पाः रविचंद्रभौमाः रविचंद्रबुधाः रविचंद्रजीवाः रविचंद्रशुक्राः रविचंद्रसौराः
एवमादित्यचंद्रयोःपंच रविभौमबुधाः रविभौमजीवाः रविभौमशुक्राः रविभौमसौराः एवमादित्यांगारकयोश्चत्वारः रविबुधजीवाः रविबुध
शुक्राः रविबुधसौराः एवमादित्यबुधयोस्त्रयः रविजीवशुक्राः रविजीवसौराः एवंद्वौरविशुक्रसौराः एवमेकः एवमादित्येनसहत्रिविक
ल्पाः पंचदश चंद्रभौमबुधाः चंद्रभौमजीवाः चंद्रभौमशुक्राः चंद्रभौमसौराः एवंचंद्रभौमयोश्चत्वारः चंद्रबुधजीवाः चंद्रबुधशुक्राः चंद्र
बुधसौराः एवंत्रयः चंद्रजीवशुक्राः चंद्रजीवसौराः एवंद्वौ चंद्रशुक्रसौराः एकः एवंचंद्रेणसहदश १० भौमबुधजीवाः भौमबुधशुक्राः
भौमबुधसौराः एवंत्रयः भौमजीवशुक्राः भौमजीवसौराः एवंद्वौ भौमशुक्रसौराः एवंभौमेनसहषट् बुधजीवशुक्राः बुधजीवसौराः
एवंद्वौ जीवशुक्रसौराः एकः एवंत्रिविकल्पाः पंचत्रिंशत् ३५ अथचतुर्विकल्पाः रविचंद्रभौमबुधाः रविचंद्रभौमजीवाः रविचंद्रभौ



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मशक्राः रविचंद्रभौमसौराः एवंचत्वारः रविचंद्रबुधजीवाः रविचंद्रबुधशक्राः रविचंद्रबुधसौराः एवंत्रयः रविचंद्रजीवशक्राः रवि
चंद्रजीवसौराः एवंद्वौ रविचंद्रशक्रसौराः एवमेकः रविभौमबुधजीवाः रविभौमबुधशक्राः रविभौमबुधसौराः एवंत्रयः रविभौमजीव
शक्राः रविभौमजीवसौराः एवंद्वौ रविभौमशक्रसौराः एवमेकः रविबुधजीवशक्राः रविबुधजीवसौराः द्वौ रविबुधशक्रसौराः रवि
जीवशक्रसौराः एवमादित्येन सह विंशतिः चंद्रभौमबुधजीवाः चंद्रभौमबुधशक्राः चंद्रभौमबुधसौराः एवंत्रयः चंद्रभौमजीवशक्राः
चंद्रभौमजीवसौराः एवंद्वौ चंद्रभौमशक्रसौराः चंद्रबुधजीवशक्राः चंद्रबुधजीवसौराः चंद्रबुधशक्रसौराः चंद्रजीवशक्रसौराः ए
वंचंद्रेणसहदश भौमबुधजीवशक्राः भौमबुधजीवसौराः भौमबुधशक्रसौराः एवंभौमेनसहचत्वारः बुधजीवशक्रसौराः बुधेन
सहएकः एकचतुर्विकल्पाः पंचत्रिंशत् ३५ अथपंचविकल्पाः रविचंद्रभौमबुधजीवाः रविचंद्रभौमबुधशक्राः रविचंद्रभौमबुधसौराः रवि
चंद्रभौमजीवशक्राः रविचंद्रभौमजीवसौराः रविचंद्रभौमशक्रसौराः रविचंद्रबुधजीवशक्राः रविचंद्रबुधजीवसौराः रविचंद्रबुधशक्र
सौराः रविचंद्रजीवशक्रसौराः रविभौमबुधजीवशक्राः रविभौमबुधजीवसौराः रविभौमबुधशक्रसौराः रविभौमजीवशक्रसौराः
रविबुधजीवशक्रसौराः एवमादित्येनसहपंचदश १५ चंद्रभौमबुधजीवशक्राः चंद्रभौमबुधजीवसौराः चंद्रभौमबुधशक्रसौराः चंद्र
भौमजीवशक्रसौराः चंद्रबुधजीवशक्रसौराः एवंचंद्रमसासहषट् ६ भौमबुधजीवशक्रसौराः एवंपंचविकल्पाः एकविंशतिः २१
अथषड्विकल्पाः आदित्यचंद्रभौमबुधजीवशक्राः रविचंद्रभौमबुधजीवसौराः रविभौमबुधजीवशक्रसौराः चंद्रभौमबुधजीवशक्रसौ
राः एवंषड्विकल्पाः अथसमविकल्पाः रविचंद्रभौमबुधजीवशक्रसौराः समविकल्पएकएव एवंसप्तविंशत्यधिकंविकल्पशतम् १२७
॥ ॥इतिश्रीभट्टोत्पलविरचितायां बृहज्जातकविवृतौनाभसयोगाध्यायद्वादशः समाप्तः १२॥ ॥अथानफ्चंद्रयोगाध्यायोव्याख्या
यते॥ ॥तत्रादावेवार्कात्केंद्रपणफरापोक्लिमस्थेचंद्रेजातस्यस्वरूपज्ञानंमालिन्याह अधमसमवरिष्ठान्योनि विनयोनीतिः सुशीलता
वित्तंधनंज्ञानंविज्ञानंशास्त्रावबोधः धीःबुद्धिः नैपुण्यंकार्येषुसूक्ष्मदर्शित्वं अर्कादादित्यात्केंद्रादिसंस्थेकेंद्रपणफरापोक्लिमसंस्थेशशिनि
चंद्रेजातस्यविनयवित्तज्ञानधीनैपुणान्यधमसमवरिष्ठानिनिकृष्टमध्यमोत्तमानिभवंति एतदुक्तंभवति यस्यादित्याज्जन्मनिकेंद्रस्थश्चं
द्रोभवति तस्यैतानिविनयादीन्यधमानिभवंति अधमत्वमेतेषामभावः यस्मात्सवनेश्वरः सूर्यःदरिद्रांश्चपलान्विशीलांश्चंद्रः प्रसूतेकेंद्र

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तुष्टयस्थः यस्यजन्मसमयेपणफरस्थश्चंद्रः सूर्यादुवति नस्यैनानिमध्यमानिभवंति नचातिभवतीत्यर्थः यस्यजन्मनि आपोक्लिमस्थःश्चं
द्रोभवति नस्यविनयादीनिवरिष्ठानिभवंति तथाचयवनेश्वरः कुर्याद्बितीयेधनिनांप्रसूतिमापोक्लिमस्थेकुलजाग्रजानामिति अह्नीत्यादि
चंद्रेशशिनिस्वेधिमित्रांशकस्थे अह्निनिशीचयथासंख्यंसुरगुरुसितदृष्टेजीवशुक्राभ्यामवलोकितेजातोवित्तवान् धनीसुखीचभोगवां
श्चस्याद्भवेत एतदुक्तंभवति यस्याह्निदिवाजन्मभवति चंद्रश्चयस्मिंस्तस्मिन्राशौस्वनवांशकस्थोभवति स्वस्याधिमित्रांशकेस्थितोवासुर
गुरुणाजीवेनदृष्टः तदासगुरुणोवित्तवान्सुखीचभवति अथयस्यनिशिरात्रौजन्मभवति चंद्रमास्वनवांशकस्थोऽधिमित्रनवांशकस्थो-
वाभवति शुक्रेणदृश्यतेतदाजातोवित्तवान्सुखीचभवति अत्राह्निनिशिचचंद्रेस्वाधिमित्रांशकेवास्थितेयथासंख्यंसुरगुरुसितदृष्टे
केचिद्व्याचक्षते अयुक्तमेतत् यस्माद्भगवान्गार्गिः स्वांशेधिमित्रस्यांशेवासंस्थितोदिवसेशशी गुरुणादृश्यतेतत्रजातोवित्तसुखान्वितः नि-

अथचंद्रयोगाध्यायप्रारंभः अधमसमवरिष्ठान्यर्ककेंद्रादिसंस्थेशशिनिविनयवित्तज्ञानधीनैपुणानि अ
ह्निनिशिचचंद्रेस्वेधिमित्रांशकेवासुरगुरुसितदृष्टेवित्तवान्स्यात्सुखीच १ सौम्यैः स्मरारिनिधनेष्वधियोग
इंदोस्तस्मिंश्चमूपसचिवक्षितिपालजन्म संपन्नसौख्यविभवाहतशत्रवश्चदीर्घायुषोविगतरोगभयाश्चजाताः २

श्चैवंभृगुणादृष्टः शशीजन्मनिशस्यते विपर्ययस्थेशशिनांशेजायंतेल्पधनानराः इति तथाचयवनेश्वरः स्वांशेशशीभार्गवदृष्टमूर्तिर्निशी
श्वरोसन्निकरःप्रदिष्टः तदुत्तमोद्भूतिकरः सतुस्याद्दृष्टोदिवादेवपुरोहितेन १ अथाधियोगाख्यंयोगंसफलंवसंततिलकेनाह सौम्यैरिति इंदो
श्चंद्रात्सौम्यैः बुधगुरुसितैः स्मरारिनिधनेषु सप्तमषष्ठाष्टमेषुत्रिषुस्थानेषुद्वयोर्वास्थानयोरेकस्मिन्वास्थानेसर्वस्थैर्भवंति तदाधियोगा-
ख्ययोगोव्याख्यातोभवति अत्रकेचित्षष्ठसप्तमाष्टमानांस्थानानांसौम्यग्रहत्रयस्यावस्थानादत्युन्नतायाममभियोगोव्याख्यातः तच्चासु
न्दरम् यस्माच्छ्रुतकीर्तिः निधनंद्यूनंषष्ठंचंद्रस्थानाद्यथाशुभैर्युक्तं अधियोगः सप्रोक्तोव्यासाकृतोसमधापूर्वैः व्यासकृतोविस्तरकृतोपूर्वै
राचार्यैस्त्रिरंततः सचसप्तधासप्तप्रकारः प्रोक्ताः कथितः तद्यथा षष्ठेराशौयदासर्वेसौम्यग्रहाः भवंतितदेकः सप्तमेद्वितीयः अष्टमेस्तृती
यः षष्ठसप्तमयोश्चतुर्थः षष्ठाष्टमयोःपंचमः सप्तमाष्टमयोःषष्ठः षष्ठसप्तमाष्टमेषुसप्तमइति एवमेवंस्थितेषुसौम्येष्वधियोगः जयदेवेन

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मास्थितेषु पापैः पापः मिश्रैर्मिश्रः तथाच श्रुतकीर्तिः षट्सप्तमाष्टमसंस्थैः चंद्रात्सौम्यैः शुभोधियोगःस्यात् पापः पापैरेवं मिश्रैर्मिश्रस्तथैवो
क्तः अधियोगजातानां फलमाह तस्मिंश्च भूपतिः सचिवः क्षितिपालजन्मेति तस्मिन्नधियोगे जातश्च भूपः सेनापतिर्भवति सचिवो मंत्री भवति
क्षितिपालो भूपालो राजा वा भवति तेषां फलपदसंभवात् पृथक्त्वं व्याख्यातम् तथाच बादरायणः शशिनः सौम्याः षष्ठे द्यूने वा निधनसंस्थि
ता वा स्युः जातो नृपतिर्ज्ञेयो मंत्री वा सैन्यनायको वापि तेनैतदुक्तं भवति बुधगुरुसितैरुत्कृष्टवीर्यैः नृपो मध्यमवीर्यैः सचिवः हीनवीर्यैः से-
नापतिः एषामन्यतमा अपि संपन्नसौख्यविभवाः अतिसौख्यैश्वर्यसंपन्नाः हतशत्रवः नष्टनृपवः दीर्घायुषः चिरजीविनः विगतरोग
भयाः स्वस्थदेहा निर्भयाश्च एवंविधे योगे जाता भवंति केशांचिन्मते राजयोग एव तथाच सारावल्याम् द्यूने षष्ठमथाष्टमं शिशिरगोः भा
स्राः समस्ताः शुभाः क्रूराणां यदि गोचरे न पतिताः सूर्यालया दूरतः भूपालः प्रभवेत्स यस्य जलधेर्वेलावनांतोद्भवैः सेनामत्तकरींद्रदानसलि
लं भृंगैर्मुहुः पीयते १ तथाच मांडव्यः अमित्रं यामित्रं निधनमथवा शीतरुचितो गताः सर्वे सौम्या स्तमिह जनयेत्फलनरपतिं धनैर्नैवासे-

हित्वार्कं सुनफानफादुरुधराः स्वांत्योभयस्थैर्ग्रहैः शीतांशोः कथितोन्यथा तु बहुभिः केमद्रुमोन्यैस्त्वसौ केंद्रे शीत
करेथवा ग्रहयुते केमद्रुमो नेष्यते केचित्केंद्रनवांशकेषु च वदंत्युक्तिः प्रसिद्धा न ते ३ कंगतवलितविशादे तु पयसामनलाग्निर्य-
स्य ज्वलति त्वदयेशक्कुषु भृशम् २।२ अथ सुनफानफादुरुधराकेमद्रुमाख्यं योगचतुष्टयं शार्दूलविक्रीडितेनाह हित्वार्कमिति अथार्क
मादित्यं हित्वा त्यक्त्वा यदान्यः कश्चिद्ग्रहो भौमादिकः शीतांशोश्चंद्रात्स्वांत्योभयस्थो भवति द्वितीयस्थो द्वादशस्थो वा द्वितीय द्वादशस्थो वा
द्वौ भवतस्तदा सुनफाअनफादुरुधराख्यं योगत्रयं भवति एतदुक्तं भवति अर्कं हित्वा यदान्यो ग्रहः कश्चिच्चंद्राद्द्वितीयस्थाने भवति तदा
सुनफानाम योगो भवति अथार्कं वर्जयित्वा चंद्राद्द्वादशे कश्चिद्ग्रहो भवति तदा अनफानाम योगो भवति एवं चंद्राद्द्वितीय द्वादशगो ग्र
हो भवतस्तदा दुरुधरानाम योगो भवति अत्र योगत्रये यद्यादित्यो द्वितीये द्वादशे वा स्थाने भवति तदा न [illegible] योगभंगं करोति किंतु योगकर्तृ-
णां मध्ये न गण्यते एतदुक्तं भवति आदित्यो द्वितीये द्वादशे वा स्थाने भवतु मा भवतु वा भौमादिस्तत्रस्थो यथादर्शितयोगकर्ता भवति एते
योगा बहुभिराचार्यैः पठिताः अन्यथा केमद्रुम उक्तः अस्माद्योगत्रयाद्यद्येकोपि योगो न भवति तदा केमद्रुमाख्यो योगो भवति एतदुक्तं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

बृ·टी·
७५

चं·यो·
१३

वनि भौमादीनां केंद्रे शीतकरे यवा ग्रहफले केमद्रुमो नेष्यते अन्येषां गर्गादीनामेवं मतं केंद्रे जन्मलग्ने केंद्रे शीतकरे चंद्रे वा भौमादिग्रह-
फले भौमादिग्रहविरहितयोरपि चंद्राद्द्वितीयद्वादशस्थानयोः केमद्रुमो न भवति केंद्रे ग्रहफले इत्यत्र केचिच्चंद्रकेंद्रमेव केवलं व्याख्यातव-
न्तस्तदयुक्तं चंद्रकेंद्रे ग्रहफले चंद्रमसोपि योगो न भवति शीतकरे ग्रहफले इत्येतदपार्थकं स्यात् अत्र च भगवान्गार्गिः व्ययार्थकेंद्रगस्वं-
द्राद्विनाशात्तुंगनवे ग्रहः कश्चित्स्याद्वा किंवा चंद्रं लग्नात्केंद्रगतोथवा योगः केमद्रुमो नाम तदा स्यात्सुत्रगार्हितः भवंति निंदिता चाराद रिचाप-
तिसंकृताः तथा च सारावल्याम् सुनफानफादुरुधराः क्रमेण योगा भवंति रविरहितैः विनांत्योभयसंस्थैः केंद्रखवनबांधवाद्विहगैः एते-
नपदायोगाः केंद्रे ग्रहवर्जितः शशांकश्च केमद्रुमोतिकष्टः शशिनि च सर्वग्रहादृष्टे एवं केंद्रे शीतकरे यवा ग्रहफले केमद्रुमो नेष्यते अन्ये आचा-
र्या नेच्छंति वराहमिहिरस्तु पुनरिच्छत्येव यस्मिन्नर्थे तस्यैव तद्वाक्यं अन्यथा केमद्रुमस्त्वेव सुत्वाप मतसुक्तम् अन्येरसौ एवं केंद्रे शीतकरे-
यवा ग्रहफले केमद्रुमो नेष्यते स्वल्पजातकेपि तेन सुनफानफादुरुधराभावे केमद्रुम उक्तः तथा च रविवर्ज्यं द्वादशगैरनफा चंद्राद्द्वितीयगैः
सुनफा उभयस्थितैर्दुरुधरा केमद्रुमसंज्ञकोतोन्यः सत्यस्यापि सुनफानफादुरुधराभावे केमद्रुमः तथा च सुनफानफायोगो दोरुधुरु-
श्चंद्रसंस्थितैः खेत्रात् प्राक्स्पष्टतो ग्रहेंद्रैरुभयगतैस्तेषु रविवर्ज्यं केमद्रुमोत्रयोगोन्यथा भवेद्यत्र गर्हितं जन्म केचित्केंद्रनवांशकेपि ति केचि-
दाचार्याः केंद्रेषु केचिच्च नवांशके चैतद्योगत्रयं वदंति यथा चंद्राद्द्वितीयद्वादशोभयस्थैर्ग्रहैः सुनफाद्यायोगा व्याख्याताः तथा केचिच्छ्रुतकीर्ति-
जीवशर्मप्रभृतिभिः केंद्रवशान्नवांशकवशाच्च व्याख्याताः एतदुक्तं भवति नाराग्रहैश्चंद्राच्चतुर्थस्थानस्थैः सुनफा दशमस्थानस्थैरन-
फा चतुर्दशमस्थितैः दुरुधरा अतोन्यथा केमद्रुमः तथा च श्रुतकीर्तिः चंद्राच्चतुर्थैः सुनफा दशमस्थितैः कीर्तितोनफा विहगैः उभयस्थितैर्-
दुरुधुरा केमद्रुमसंज्ञितोन्यथा योगः केचित्केंद्रनवांशकेषु वदंति यत्र तत्र राशौ यद्राशिसंबंधि नवांशके चंद्रमा भवति तस्माद्राशेर्यो द्वितीयो
राशिः तत्र यदि ताराग्रहो भवति तदा सुनफा अथ चंद्रनवांशकराशेः द्वादशे ताराग्रहो भवति तदानफा अथ चंद्रनवांशकराशेः द्वितीये द्वाद-
शे च यदा ग्रहो भवतस्तदा दुरुधरा अतोन्यथा केमद्रुमः तथा च चंद्रनवांशकराशितो द्विद्वादशराशी यदि ग्रहरहितौ भवतः तदा केमद्रुमः
तथा च जीवशर्मा यद्राशिसंज्ञे शीतांशुर्नवांशे जन्मनि स्थितः तद्द्वितीयस्थितैर्योगः सुनफाख्यः प्रकीर्तितः द्वादशैरनफा ज्ञेयो ग्रहैर्द्विद्वादश-
स्थितैः प्रोक्तो दुरुधुरा योगोन्यथा केमद्रुमः स्मृतः उक्तिः प्रसिद्धा तते येषामेवंविधं मतं तेषामुक्तिर्लोकेन प्रसिद्धा तन्मतं वृद्धज्योतिषिकैर्नांगीकृतमित्य-

७५

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

र्थः ३ अथ सुनफानफादुरुधराख्यं भकारस्थानभिदं द्वयजयाह त्रिंशत्सरूपाइति सरूपाः त्रिंशदेकत्रिंशत् एकत्रिंशत्सुनफाख्ययोगाः
तावंत एवानफाख्याः षष्टित्रसमशीत्यधिकं शतं दुरुधरा भेदानां एषां पूर्ववद्विकल्पगणितम् इच्छाविकल्पैरित्यादि एतत्श्लोके लोष्ठ-
कप्रस्तारं पूर्वमेव नाभसयोगाध्याये व्याख्यातम् इच्छाविकल्पैः क्रमशः परिपाट्यान्यत्र लोष्टकमभिनीय नीतेन निवृत्तिः कार्या पुनः भूयो
न्यनीतिरित्यत्र स्थानांतरे चालनं अथ सुनफादयो भौमबुधगुरुसितासितैः पंचभिर्निष्पाद्यंते तस्मादिच्छाविकल्पाः पंच तेषां न्यासः अत्र
प्राग्वत्पूर्वेण पूर्वेण गणितेन यत्फलं तस्य स्थानं विनांत्यं भवदंति संख्यामितिक्रमजातं ५।४।३।२।१ अथवा प्राग्वत्संख्यैः स्वसंख्याजाता एकमेक

| | | | | |
|---|---|---|---|---|
| ५ | ४ | ३ | २ | १ |
| १ | २ | ३ | ४ | ५ |

विकल्पाः पंच द्विविकल्पादश त्रिविकल्पादश चतुर्विकल्पाः पंच पंचविकल्पा एकः एवमेकत्रिंशत् ५।१०।१०
५।१ तद्यथा द्वितीये चंद्राद्भौमः बुधः बृहस्पतिः शुक्रः सौरः एवमेकविकल्पाः पंच अथ द्विविकल्पाः भौम
बुधौ भौमजीवौ भौमशुक्रौ भौमसौरौ बुधजीवौ बुधशुक्रौ बुधसौरौ जीवशुक्रौ जीवसौरौ शुक्रसौरौ एवं द्विविकल्पाः दश अथ
त्रिविकल्पाः भौमबुधजीवाः भौमबुधशुक्राः भौमबुधसौराः भौमजीवशुक्राः भौमजीवसौराः भौमशुक्रसौराः बुधजीवशुक्राः बुध
जीवसौराः बुधशुक्रसौराः जीवशुक्रसौराः एवं त्रिविकल्पा दश १० अथ चतुर्विकल्पाः भौमबुधजीवशुक्राः भौमबुधजीवसौराः भौ
मजीवशुक्रसौराः भौमबुधशुक्रसौराः बुधजीवशुक्रसौराः एवं चतुर्विकल्पाः पंच ५ अथ पंचविकल्पाः भौमबुधजीवशुक्रसौराः
एवं पंचविकल्प एकः १ एवमेकत्रिंशत् ३१ सुनफायोगाः उक्तादिना अत्र नैवप्रकारेण द्वादशस्थैः अनफाभेदाः एकत्रिंशत् अथ दुरुधुरा
विकल्पाः एषां लोष्टकप्रस्ताराभावात्स्वबुध्येच्छाविकल्पैः क्रमशोभिनीयेति न्यायेन व्युत्पत्तिः एको द्वितीये द्वितीयो द्वादशे एको द्वादशे
द्वितीयो द्वितीये तद्यथा भौमबुधौ १ बुधभौमौ २ भौमजीवौ ३ जीवभौमौ ४ भौमशुक्रौ ५ शुक्रभौमौ ६ भौमसौरौ ७ सौरभौ
मौ ८ बुधजीवौ ९ जीवबुधौ १० बुधशुक्रौ ११ शुक्रबुधौ १२ बुधसौरौ १३ सौरबुधौ १४ जीवशुक्रौ १५ शुक्रजीवौ १६ जीवसौरौ
१७ सौरजीवौ १८ शुक्रसौरौ १९ सौरशुक्रौ २० अथैको द्वितीये द्वादशे द्वौ द्वितीये द्वौ द्वादशे चैक तद्यथा भौमबुधजीवौ १ बुधः
जीवभौमौ २ जीवः शुक्रबुधौ ३ बुधः शुक्रभौमौ ४ भौमः बुधसौरौ ५ बुधः सौरभौमौ ६ भौमः जीवशुक्रौ ७ जीवः शुक्रभौमौ ८
भौमः जीवसौरौ ९ जीवः सौरभौमौ १० भौमः शुक्रसौरौ ११ शुक्रः सौरभौमौ १२ बुधः भौमजीवौ १३ जीवः भौमबुधौ १४ बुधः भौम

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

शक्रौ १५ भौमः शक्रबुधौ १६ बुधः भौमःसौरौ १७ भौमःसौरबुधौ १८ बुधःजीवशक्रौ १९ जीवः शक्रबुधौ २० बुधःजीवसौरौ
२१ जीवःसौरबुधौ २२ बुधः शक्रसौरौ २३ शक्रः सौरबुधौ २४ जीवः भौमबुधौ २५ भौमबुधजीवौ २६ जीवः भौमशक्रौ २७ भौ
मः शक्रजीवौ २८ जीवः भौमसौरौ २९ भौमसौरजीवौ ३० जीवः बुधशक्रौ ३१ बुधः शक्रौजीवौ ३२ जीवःबुधसौरौ ३३ बुधसौरजीवौ ३४
जीवः शक्रसौरौ ३५ शक्रः सौरजीवौ ३६ शक्रः भौमबुधौ ३७ भौमः बुधशक्रौ ३८ शक्रः भौमजीवौ ३९ भौमः जीवशक्रौ ४० शक्रः भौम
सौरौ ४१ भौमः सौरशक्रौ ४२ शक्रः बुधजीवौ ४३ बुधः जीवशक्रौ ४४ शक्रः बुधसौरौ ४५ बुधः सौरशक्रौ ४६ शक्रः जीवसौरौ ४७ जी
वःसौरशक्रौ ४८ सौरः भौमबुधौ ४९ भौमबुधसौरौ ५० सौरः भौमजीवौ ५१ भौमःजीवसौरौ ५२ सौरःभौमशक्रौ ५३ भौमः शक्रसौरौ
५४ सौरः बुधजीवौ ५५ बुधःजीवसौरौ ५६ सौरः बुधशक्रौ ५७ बुधः शक्रसौरौ ५८ सौरःजीवशक्रौ ५९ जीवः शक्रसौरौ ६० एवमे
कत्रजाताः ८० अथैकोद्वितीये द्वादशेत्रयः तद्यथा भौमः बुधजीवशक्राः १ बुधजीवशक्राःभौमः २ भौमःबुधजीवसौराः ३ बुधजीव
सौराः भौमः ४ भौमः बुधशक्रसौराः ५ बुधशक्रसौराःभौमः ६ भौमःजीवशक्रसौराः ७ जीवशक्रसौराःभौमः ८ बुधः भौमजीवश-
क्राः ९ भौमजीवशक्राःबुधः १० बुधः भौमजीवसौराः ११ भौमजीवसौराःबुधः १२ बुधः भौमशक्रसौराः १३ भौमशक्रसौराःबुधः १४
बुधःजीवशक्रसौराः १५ जीवशक्रसौराःबुधः १६ जीवः भौमबुधशक्राः १७ भौमबुधशक्राःजीवः १८ जीवः भौमबुधसौराः १९ भौम
बुधसौराःजीवः २० एवमेकत्र १०० जीवः भौमशक्रसौराः १ भौमशक्रसौराःजीवः २ जीवःबुधशक्रसौराः ३ बुधशक्रसौराःजीवः ४
शक्रः भौमबुधजीवाः ५ भौमबुधजीवाःशक्रः ६ शक्रः भौमबुधसौराः ७ भौमबुधसौराः शक्रः ८ शक्रःभौमजीवसौराः ९ भौमजीवसौ
राःशक्रः १० शक्रःबुधजीवसौराः ११ बुधजीवशक्राःसौरः १२ सौरः भौमबुधजीवाः १३ भौमबुधजीवाःसौरः १४ सौरः भौमबुधशक्राः १५
भौमबुधशक्राःसौरः १६ सौरः भौमजीवशक्राः १७ भौमजीवशक्राःसौरः १८ सौरः बुधजीवशक्राः १९ बुधजीवशक्राःसौरः २० एव
मेकत्र १२० अथद्वितीयेएको द्वादशेचत्वारः चत्वारोद्वितीये द्वादशेचैकः तद्यथा भौमः बुधजीवशक्रसौराः १ बुधजीवशक्रसौराःभौ
मः २ बुधःभौमजीवशक्रसौराः ३ भौमजीवशक्रसौराःबुधः ४ जीवःभौमबुधशक्रसौराः ५ भौमबुधशक्रसौराःजीवः ६ जीवः भौम ७७
बुधजीवसौराः ७ भौमबुधजीवसौराःशक्रः ८ सौरः भौमबुधजीवशक्राः ९ भौमबुधजीवशक्राःसौरः १० एवमेकत्र १३० अथ-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

द्वौ द्वादशे द्वावेव द्वितीये तद्यथा भौमबुधौ जीवशुक्रौ १ जीवशुक्रौ भौमबुधौ २ भौमबुधौ जीवसौरौ ३ जीवसौरौ भौमबुधौ ४ भौमबुधौ शुक्रसौरौ ५ शुक्रसौरौ भौमबुधौ ६ भौमजीवौ शुक्रबुधौ ७ शुक्रबुधौ भौमजीवौ ८ भौमजीवौ बुधसौरौ ९ बुधसौरौ भौमजीवौ १० भौमजीवौ शुक्रसौरौ ११ शुक्रसौरौ भौमजीवौ १२ भौमशुक्रौ बुधजीवौ १३ बुधजीवौ भौमशुक्रौ १४ भौमशुक्रौ बुधसौरौ १५ बुधसौरौ भौमशुक्रौ १६ भौमशुक्रौ जीवसौरौ १७ जीवसौरौ भौमशुक्रौ १८ बुधजीवौ भौमसौरौ १९ भौमसौरौ बुधजीवौ २० एवमेकत्र १५० भौमसौरौ बुधशुक्रौ १ बुधशुक्रौ भौमसौरौ २ भौमसौरौ जीवशुक्रौ ३ जीवशुक्रौ भौमसौरौ ४ बुधजीवौ शुक्रसौरौ ५ शुक्रसौरौ बुधजीवौ ६ बुधशुक्रौ जीवसौरौ ७ जीवसौरौ बुधशुक्रौ ८ जीवशुक्रौ बुधसौरौ ९ बुधसौरौ जीवशुक्रौ १० एवमेकत्र १६० द्वौ द्वितीये त्रयो द्वादशे द्वादशे द्वौ त्रयो द्वितीये च तद्यथा भौमबुधौ जीवशुक्रसौराः १ जीवशुक्रसौराः भौमबुधौ २ भौमजीवौ बुधशुक्रसौराः ३ बुधशुक्रसौराः भौमजीवौ ४ भौमशुक्रौ बुधजीवसौराः ५ बुधजीवसौराः भौमशुक्रौ ६ भौमसौरौ बुधजीवशुक्राः ७ बुधजीवशुक्राः

त्रिंशत्स्वरूपाः सुनफानफाख्याः षष्टिस्त्रयं दौरुधरे प्रभेदाः इच्छाविकल्पैः क्रमशोभिनीय नीते निवृत्तिः पुनरन्यनीतिः ४ स्वयमधिगतवित्तः पार्थिवस्तत्समो वा भवति हि सुनफायां धीधनख्यातिमांश्च ॥ ॥ ॥अर्धः॥

भौमसौरौ ८ बुधजीवौ भौमशुक्रसौराः ९ भौमशुक्रसौराः बुधजीवौ १० एवमेकत्र १७० बुधशुक्रौ भौमजीवसौराः १ भौमजीवसौराः बुधशुक्रौ २ बुधसौरौ भौमजीवशुक्राः ३ भौमजीवशुक्राः बुधसौरौ ४ जीवशुक्रौ भौमबुधसौराः ५ भौमबुधसौराः जीवशुक्रौ ६ जीवसौरौ भौमबुधशुक्राः ७ भौमबुधशुक्राः जीवसौरौ ८ शुक्रसौरौ भौमबुधजीवाः ९ भौमबुधजीवाः शुक्रसौरौ १० एवमेकत्र १८० एवं दुरुधरायोगभेदाः शतमशीत्यधिकं प्रदर्शितम् ४ अथ सुनफानफयोर्योगजातस्य स्वरूपविज्ञानं मालिन्याह स्वयमिति स्वयमात्मनाधिगतमर्जितं वित्तं येन स्वबाहूर्जितधनः पार्थिवो राजा भवति तत्समो वा यदि राजा न भवति तदा राजतुल्यः धीधनख्यातिमान् बुद्धिवित्तकीर्तिभिः युक्तः एवंविधः सुनफायां योगे जातो भवति ॥ प्रभुरिति प्रभुः समर्थः अतिहतोऽज्ञः जगदर्शशरीरो निरुजदेहः अविद्यमाना गदा रोगा यस्य शीलवान् दमविनयादिभिर्गुणैर्युक्तः ख्यातकीर्तिः प्रथितयशाः जनविदितसद्गुणः विषयसुखवः शब्दस्पर्शरसरूपगंधाविष-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

 

याः तत्सकलैः र्युक्तः ननु किं विषयव्यतिरिक्तसुखमस्ति उच्यते अस्ति यद्योगिनां मनःसुखं सुवेषः अनुलेपनालंकारमाल्यसद्वस्त्र
धारणशीलः निर्वृत्तः मनोदुःखविनिर्मुक्तः एवंविधो नफायां योगे जातो भवति ५ अथ दुरुधरा केमद्रुमयोगे जातयोः स्वरूपं वसंततिल
केनाह उत्पन्नभोगसुखभुगिति यत्र तत्र यथा तथा सन्ने भोगैः सुखानि भुंक्ते धनैश्च वित्तेन वाहनैरश्वादिभिराढ्यो त्यागान्वितो
दानाढ्यः भृत्यः शोभनभृत्यः एवंविधो दुरुधरायोगे जातो भवति केमद्रुम इति मलिनः मलवासाः स्नानालसश्च दुःखितः शरीरा
द्यैः मानसाद्यैः दुःखैरन्वितः नीचः स्वकुलानुचिताधमकर्मकरः निःस्वः दरिद्रः प्रेष्यः दासकर्मकरः खलः दुर्जनस्वभावः एषामुक्तार्थाना
मन्यतमेन युक्तो यदि नृपतेः राज्ञोपि वंशे कुले जातः तथाप्येवंविधः केमद्रुमजातो भवति केचिदत्र बहुवचनं पठंति केमद्रुमे मलिनदुःखित
नीचनिःस्वाः प्रेष्याः खलाश्च नृपतेरपि वंशजाताः तथापि न कश्चिद्दोषः ६ एवं तावत् सुनफानफादिषु सामान्येन फलमभिधायेदानीमहव

प्रक्षरगदशरीरः शीलवान्ख्यातकीर्तिर्विषयसुखसुवेषो निर्वृतश्चानफायाम् ५ उत्पन्नभोगसुखभुग्धनवाहना
ढ्यस्त्यागान्वितो दुरुधराप्रभवः सुभृत्यः केमद्रुमे मलिनदुःखितनीचनिःस्वाः प्रेष्याः खलाश्च नृपतेरपि वंशजाताः ६
उत्साहशौर्यधनसाहसवान्महीजः सौम्यः पटुः सुवचनो निपुणः कलासु जीवोर्थधर्मसुखभाङ्नृपपूजितश्च का
मी भृगुर्बहुधनो विषयोपभोक्ता ७

शाद्विशेषफलं वसंततिलकेनाह उत्साहवान्बली नित्योद्यमशीलः शौर्यः शत्रूरणप्रियः
धनवान्वित्तान्वितः साहवान समीक्षितकार्यकरः यद्यत्कार्यं यदा काले तत्त्वविचार्य करोति यः स साहसिकः एवंविधो महीजो गगारको यदि योगक
र्ता भवति तदा जातो भवति पटुः दक्षः सुवचनः शोभनवाक् कलासु निपुणः गीतवाद्यनृत्यचित्रपुस्तककर्मादिषु सूक्ष्मदृष्टिः यदि सौ
म्यो बुधो योगकरः तदेवंविधो जातो भवति अर्थभाक् धनानां भाजनः धर्मभाक् धर्मक्रियासु तत्परः सुखभाक् नित्यसुखितः नृ
पपूजितः राजमान्यः यदि जीवो बृहस्पतिः योगकरः तदेवंविधो जातो भवति कामी कामुकः स्त्रीलोलः बहुधनः प्रभूतार्थः
विषयोपभोक्ता विषयानामिंद्रियार्थानामुपभोक्ता उपभोगशीलः तत्सुखान्वितः यदि भृगुः शुक्रो योगकरस्तदेवंविधो जातो 
भवति ७ अथ शनैश्चरे योगकर्तरि पुरुषस्य स्वरूपं चंद्रमसि च दस्यां द्वयोर्जातस्य स्वरूपं ज्ञानं पुष्पितायायाह पराजितानांविभ

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

वानामैश्वर्याणांपरिच्छदानांगृहवस्त्रवाहनपरिवाराणां उपभोक्ताभवति बहुकार्यकृन्नानानांधानांकार्याणांकर्त्ता गणेशः बहुगणस्वामी
गणाः संघाः तेषांप्रभुः एवंविधोरविननयः शनैश्चरोयोगकरोयदिभवति तदाजातोभवति अत्रयोगत्रयेसुनफानफादुरुधराख्येएकैक
स्यग्रहस्यफलमुक्तं छ्यादिसंभविफलद्वयाधिकंवाच्यम् अशुभकृदिति उडुपश्चंद्रोह्निदिनेदृश्यमूर्त्तिः दृश्यमानशरीरः अशुभकृद
निष्टफलकर्त्ता एतदुक्तंभवति दिवाजन्मनिचंद्रमाहृश्येचक्रार्द्धेस्थितः अशुभंफलंकरोति सपुरुषोदारिद्र्यादियुक्तोभवतीत्यर्थः ग
लितनतनुरदृश्यमूर्त्तिः शुभः एतदुक्तंभवत्यदृश्येचक्रार्द्धेस्थितः शुभकृज्ज्ञानऐश्वर्यादियुक्तोभवति अन्यथान्यदूह्यम् उक्तप्रका
रादन्यथास्येचंद्रमसिफलमन्यदूह्यम् स्वबुध्याविकल्पनीयं एतदुक्तंभवति रात्रौजन्मन्यदृश्येचक्रार्द्धेयस्यचंद्रोभवति तस्याशुभंजन्म
यस्यचक्रेचक्रार्द्धेचंद्रोभवतितस्यशुभंजन्म यस्यदृश्येभवतितस्यशुभंजन्मभवतीत्यर्थः ७ अथलग्नाच्चंद्राद्वायस्योपचयेसौम्यग्रहा-

परविभवपरिच्छदोपभोक्तारविननयोबहुकार्यकृद्गणेशः अशुभकृदुडुपोह्निदृश्यमूर्त्तिर्गलिततनुश्चशुभो-
न्यथान्यदूह्यम् ७ लग्नादतीववसुमान्वसुमांछशांकात्सौम्यग्रहैरुपचयोपगतैःसमस्तैः द्वाभ्यांसमोल्पवसु
मांश्चतदूनतायामन्येष्वसत्स्वपिफलेष्विदमुक्तदेन ९ इतिश्रीमा०वि०वृ०वि०चंद्रयोगाऽध्यायस्त्रयोदशः १३

भवंतितस्यफलंवसंततिलकेनाह लग्नादिति यस्यजन्मनिलग्नात्सौम्यग्रहाः बुधजीवसिताउपचयगताभवंति सर्वएवसपुरुषोतीववसु
मानत्यर्थंधनवान्भवति यस्यशशांकाच्चंद्राद्वाउपचयेसर्वएवसौम्यग्रहाः भवंति सोपिधनवान्भवति एवंसमस्तैः त्रिभिरेतत्फलं द्वाभ्यां
समः यस्यलग्नाच्चंद्राद्वाद्वौग्रहौसौम्यौउपचयगतौभवतः समोमध्यधनोभवति नातिबहुधनोभवतीत्यर्थः तदूनतायामिति तदूनतायांलग्नाच्चंद्राद्वाय
स्यैकः सौम्यग्रहः उपचयगतोभवति सोल्पवसुमान्किंचिद्धनान्वितोभवति अर्थादेवलग्नाच्चंद्राद्वायस्योपचयेनकश्चित्सौम्यग्रहाभवंति-
सदरिद्रोभवति यस्यलग्नचंद्रयोर्द्वयोरपिसौम्यग्रहाउपचयस्थाः कयापियुक्त्याभवंति सौम्यतीववसुमान्भवति अन्येष्वसत्स्वपिफलेष्विति
अन्येष्वपरेष्वसत्सुशोभनेष्वपिफलेषुसत्स्विदंफलमुक्तदेन बाहुल्येनभवति एतदुक्तंभवति यस्यलग्नाच्चंद्राद्वाउपचयस्थाः सौम्यग्रहाः भवंति तस्या
न्ययोगमशुभमपिकेमद्रुमादिफलमभिभूयेदंशुभमेवफलमुक्तदन्ते नप्राबल्येनभवतीति इतिचंद्रयोगाऽध्यायःस्त्रयोदशःसमाप्तः १३

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथद्वियहयोगाध्यायोव्याख्यायते तत्रादित्येनचंद्रादिफक्ते जानस्यस्वरूपंशार्दूलविक्रीडितेनाह तिग्मांशुरिति तिग्मांशुः आदित्यः उषेशेनचंद्र
मसा सहितोयुक्तः उषारात्रिः उषायाईशः उषेशः रात्रिनाथः नरंमनुष्यंयंत्राश्मकारंजनयति यंत्राणिसहस्रघातिप्रभृतीन्यश्मानः पाषाणाः
तत्क्रियास्तत्कर्मस्तु निरतंसक्तंनंकरोति एवंभौमेनसहेक्षराशिगतोकौः धरतंपापासक्तंजनयति बुधेनक्रियासुनिपुणंसूक्ष्मदृष्टिंधीकीर्तिसौ-
ख्यान्वितं धीर्बुद्धिः कीर्तिः यशः सौख्यंसुखंसुखभावः एतैरन्वितंसंयुक्तंवाक्पतिनागुरुणाक्रूरंविषमस्वभावमन्यकार्यनिरतंपरकर्मरतंसंर-
जनयति शुक्रेणरंगायुधैः रंगावतरणक्रियया मल्लादिकयाऽयुधैः खड्गादिभिश्च लब्धस्वंप्राप्तार्थंजनयति रविजेनशनैश्चरेण धातुवेत्तारंधातुस
निमृत्तिकासुगैरिकायासुवाधातुषुकुशलंनिपुणंभांडप्रकारेषु सासुद्रादयस्तेषुकुशलंवा १ अथभौमादिफक्तेचंद्रेजानस्यस्वरूपंशार्दूलवि-
क्रीडितेनाह कूटइति कूटंपण्यद्रव्याणांप्रतिरूपक्रियासक्तंस्त्रीपण्यंनारीविक्रयकं आसवपण्यंपानविक्रयकं कुंभपण्यंघटविक्रयकं अशिवं

अथाद्वियहयोगाध्यायप्रारंभः तिग्मांशुर्जनयत्युषेशसहितोयंत्राश्मकारंनरंभौमेनाघरतंबुधेनृनिपुणंधीः
कीर्तिसौख्यान्वितं क्रूरंवाक्पतिनान्यकार्यनिरतंशुक्रेणरंगायुधैर्लब्धस्वंरविजेनधातुकुशलंभांडप्रकारेषुवा १
कूटस्त्र्यासवकुंभपण्यमशिवंमातुःसवक्रःशशीसज्ञःप्रसृतवाक्यमर्थनिपुणंसौभाग्यकीर्त्यान्वितं विक्रांतकुल
मुख्यमस्थिरमतिंवित्तेश्वरंसांगिरावस्त्राणांससितःक्रियादिकुशलंसार्किःपुनर्भूसुतम् २ मूलादिस्नेहकूट
व्यवहरतिवणिग्बाहुयोद्धासमौम्यैपूर्व्यश्शःसजीवेभवतिनरपतिःप्राप्तवित्तोद्विजोवा अश्रेयस्करं मातुःजनन्याः ए
वंविधः शशी चंद्रमासवक्रोवक्रेणांगारकेणयुक्तोनरंजनयति सज्ञइति प्रसृतवाक्यं प्रियंवदं अर्थनिपुणमर्थेषुसूक्ष्मदृष्टिंसौभाग्येनसर्वज-
नवल्लभेनकीर्त्यायशसान्वितंसंयुक्तं सज्ञोबुधसहितः शशीनरंजनयति विक्रांतंशत्रुजेतारं कुलमुख्यंकुलप्रधानं अस्थिरमतिंचपलंवि-
त्तेश्वरंधनस्वामिनं सांगिराः अंगिरसागुरुणासंयुक्तः शशीनरंजनयति वस्त्राणांक्रियादिकुशलंतंतुवायः आदिग्रहणात्सीवनरंजनक्रयवि-
क्रयेष्वपिकुशलंससितः शुक्रेणसंयुक्तः शशीनरंजनयति द्विःसंस्कृतापुनर्भूः तस्याःसुतंपुत्रंसार्किः अर्किणाशनैश्चरेणयुक्तः शशीनरंज
नयति पुनर्भूलक्षणं परिणीतापतिर्निहिताप्रवर्णकामतःश्रयेत् अक्षताचक्षताचैवपुनर्भूःसंस्कृतापुनः २ अथांगारकेबुधादियुक्तेजानस्य ७९

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्वरूपंस्रग्धरयाह मूलादिति ससौम्ये भूमिजेबुधयुक्तेंगारकेजातोवणिग्भवति सचवणिङ्मूलादिभिः व्यवहरति मूलादीनिमूलपुष्प-
वल्कलसारफलानि स्नेहास्तैलाद्यः एतैर्व्यवहरति कूटैश्चद्रव्यप्रतिरूपैः कृत्रिमैर्व्यवहरति बाहुयोद्धानियुद्धकुशलश्चभवति एवंविधः स
सौम्यसौम्येनबुधेनयुक्ते भूमिजेजातोभवति पुर्यध्यक्षः नगराधिकृतः पुरिजध्यक्षः पुर्यध्यक्षः स्वामीअथवानरपतिः राजाभवति अथवा
द्विजोब्राह्मणः शास्त्रविद्योलब्धधनः केचित्शास्त्रविद्यइतिपठंति सजीवेगुरुसंयुक्तेभौमेजातोभवति गोपःगोपालकः मल्लः बाहुयोद्धा अथशब्दःशा
दपूरणे दक्षः चतुरः परयुवतिरतः परस्त्रीसक्तः द्यूतकृत्कितवः सास्फुरेज्ये अस्फुरैरीज्यः अस्फुरेज्यः तेन अस्फुरेज्येनशुक्रेणयुक्ते भूमिज
जात एवंविधोभवति दुःखार्त्तः दुःखपीडितः असत्यसंधः असत्येनसंधाप्रतिज्ञायस्य अनृतभाषीनिंदितःकुत्सितोसूययायुक्तः ससवितृ
तनयेनसौरेणयुक्तेभूमिजेजातोभवति ३ अथबुधेजीवादियुक्तेजीवेनशुक्रादियुक्तेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह सौम्येरंगचरइ-

गोपोमल्लोथदक्षः परयुवतिरतो द्यूतकृत्सास्फुरेज्ये दुःखार्त्तोसत्यसंधः ससवितृतनयेभूमिजेनिंदितश्च ३ सौ-
म्येरंगचरो बृहस्पतियुतेगीतप्रियोनृत्यविद्वाग्मी भूगणपः सितेनमृदुनामायापटुर्लंघकः सद्विद्योधनदारवान्ब
हुगुणः शुक्रेणयुक्ते गुरौ ज्ञेयः श्मश्रुकरोऽसितेनघटकृज्जातोऽन्नकारोपिवा ४ असितसितसमागमेल्प-
चक्षुर्युवतिसमाश्रयसंप्रवृद्धवित्तः ॥ ति रंगचरोमल्लादिकः गीतप्रियःगीतवल्लभः नृत्तविन्नृत्तज्ञः एवंविधः सौम्येबुधेबृह-
स्पतिनायुक्तेजातोभवति प्रशस्तावाग्यस्य सवाग्मी वचनक्रिययापरप्रत्यायनसमर्थः भूगणपः भुवश्चगणानांसंघानामधिपतिः एवंविधो
बुधेसितेनशुक्रेणसहिते जातोभवति मायापटुः परवंचनदक्षः लंघकः गुरुवचनातिक्रामी एवंविधोमृदुनाशनैश्चरेणसहितेबुधेजातोभव-
ति सद्विद्यइति सद्विद्यः शोभनविद्यः धनदारवान् वित्तकलत्रसंयुक्तः बहुगुणः प्रभूतगुणैः शौर्यादिभिर्युक्तः एवंविधोगुरौजीवेशुक्रेण-
युक्तेजातोभवति श्मश्रुकरोनापितः अथवाघटकृत्कुंभकारः अथवान्नकारोसूपकारः एवंविधोऽसितेनसौरेणयुक्तेगुरौजातो ज्ञेयोविज्ञातव्यः
४ अथशुक्रेशनैश्चरयुक्तेजातस्य स्वरूपंत्रियहयोगफलंचपुष्पिताग्रयाह असितइति अल्पचक्षुरल्पदृष्टिः युवतिसमाश्रयेणस्त्रीसं-
श्रयणेनसम्यक्प्रवृद्धंवित्तंधनंयस्य सयुवतिसमाश्रयसंप्रवृद्धवित्तः लिपिरक्षरविन्यासः पुस्तकलेखकर्म चित्रमालेख्यं एषांवेत्तातज्ज्ञः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एवंविधः असितसितसमागमे शनैश्चरस्य शुक्रेण संयोगे जातः पुरुष एवंविधो भवति यदि राशिद्वये द्वौ ग्रहयोगौ भवतः तत्राद्विग्रहयोगद्वय-
स्यापि फलं वक्तव्यम् अथ राशित्रये द्विग्रहयोगत्रयं भवति तदा द्विग्रहयोगत्रयस्यापि फलं वाच्यम् कथितफलैरिति द्वाभ्यां परतो ऽपरे ऽन्यो
त्रयो ग्रहाः यद्येकगता भवंति तदा कथितफलै रुक्तफलैरेवां विकल्पनीयाः तदा द्विग्रहयोगत्रयस्य फलं वाच्यम् यद्यर्कचंद्रभौमा एकराशिस्था
भवंति तदार्कचंद्रयोगे यत्फलमुक्तम् यच्चादित्यांगारकयोगे फलं यच्च चंद्रांगारकयोगे फलं तत्फलत्रयमपि वाच्यम् एवं यथासंभवमन्यत्र
त्रापि ग्रहत्रयस्यैकराशिगतस्य फलं वक्तव्यं यद्येकराशौ द्विग्रहयोगो ऽन्यत्र त्रिग्रहयोगो वा भवतस्तदा सर्वाणि फलानि वाच्यानीति ५ इ
तिश्रीभट्टोत्पलविरचितायां बृहज्जातकविवृतौ द्विग्रहयोगो ऽध्यायश्चतुर्दशः समाप्तः १४ अथातो प्रव्रज्यायोगा ऽध्यायो व्याख्याय
ते तत्रादावेव चतुरादिभिरेकस्थैः ग्रहैः जातस्य प्रव्रज्यायोगं शार्दूलविक्रीडितेनाह एकस्थैरिति एकस्मिन्यत्र तत्र राशौ चतुरादयो ग्रहा

भवति चलिपि पुस्तावित्त्रवेत्ता कथितफलैः परतो विकल्पनीयाः ५ इति श्रीभट्टोत्पलविरचितायां बृ
हज्जातकविवृतौ द्विग्रहयोगा ऽध्यायः समाप्तः १४ अथ प्रव्रज्यायोगाध्यायप्रारंभः एकस्थैश्च
तुरादिभिर्बलयुतैर्जाताः पृथग्वीर्यगैः शाक्याजीविकभिक्षुवृद्धचरकानिर्ग्रंथवन्याशनाः माहेयज्ञगुरुक्षपा-
कररसितप्रभाकरैर्नैः क्रमात्प्रव्रज्याबलिभिः समाः परजितैस्तत्स्वामिभिः प्रच्युतिः १ भवंति चत्वारः पंचषट्

सप्त वा भवंति तैरेकस्थैश्चतुरादिभिः बलयुतैः वीर्यवद्भिः माहेयादिभिः जाताः संभूताः शाक्यादिकाः प्रव्राजकाः भवंति किंतु चतु
रादिभिः बलयुतैरेका प्रव्रज्या भवति तदर्थमाह पृथग्वीर्यगैः नैश्च बलिभिः वीर्यगैः सबलैः पृथक्पृथक् प्रव्रज्या भवंति एतदुक्तं भवति
चतुरादीनामेकस्थानां मध्याद्यद्येको बलवान् भवति तदा जातस्यैकैव प्रव्रज्या भवति अथ चतुरादीनामेकस्थानां मध्यान्न कश्चिद्बली भव
ति तदा जातस्य प्रव्रज्या न भवति अथ द्वौ बलिनौ भवतस्तदा जातस्य प्रव्रज्याद्वयमेव भवति यदा बहवो बलिनस्तदा बह्व्यः प्रव्रज्या
भवंति एवमेकस्थैश्चतुरादिभिर्बलयुतैः जाताः प्रव्रज्याभाजो भवंति यस्मादुक्तं प्रव्रज्याबलिभिः समाः ताश्च पृथग्वीर्यगैः माहे- ८०
यादिभिः भौमाद्यैः शाक्याद्याः भवंति तद्यथा चतुरादीनामेकस्थानां मध्याद्यदा माहेयो भौमो बलवान् भवति तदा जातः शाक्यो रक्त-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पटोभवति एवंज्ञेबुधेबलवतिभिक्षुः यतिर्भवति गुरौबलवति आजीविकः क्षपाकरश्चंद्रोयदारुद्धः वृद्धश्रावकः कापालिकः वृत्त-
संगभयाच्छ्रावकशब्दोत्रलुप्तोद्रष्टव्यः सितेशुक्रेबलवतिचरकः चक्रधरः भाभाकरिः सौरः तस्मिन्बलवतिनिर्ग्रंथः नग्नः क्षपणकः
प्रावरणरहितइतिअर्थः इनेआदित्येबलवतिवन्याशनः मूलफलाशनस्तपस्वीभवति एवंक्रमात्क्रमशः परिपाट्याएतेप्रव्रज्या प
र्यायाः एतेएवंकालकमता द्व्याख्यातः तथाचवंकालकाचार्यः तावसिओदिणणाहेचंदेकावाली ७० तहाभणि ७० रत्तवडोभूमि
सुवेसोम्मसुवेएअदंडीआ १ देवगुरुशुक्रकोणाकवेणजईचरअखवणाई अस्यार्थः तावसिओतापसिकः दिणणाहेदिननाथेसूर्येचंद्रेवा
कावालिओकापालिकः तहाभणिओतथाभणितः रत्तवडोरक्तपटः भूमिसुवेभूमिसुते सोम्मसुवेसोमसुतेबुधे एअदंडीआएक दंडी देव
गुरुर्बृहस्पतिः शुक्रशुक्रः कोणः शनैश्वरः कवेणक्रमेण जईयतिः चरअचरकः खवणाईक्षपणकः अत्रवृद्धश्रावकग्रहणं माहेश्वराश्रितानां
प्रव्रज्यानामुपलक्षणार्थं आजीविकग्रहणंचनारायणाश्रितानां तथाचवंकलकेसंहितांतरेप्युच्यते जलणहरसुगअकेसवसूईबह्मणण
गगमग्गेसु दिक्खवाणंणाअव्वासूराइगोहाकवेणणाहगआ जलणज्वलनः साग्निकइत्यर्थः हरईश्वरभक्तः भट्टारकः सुगआसुगतः
बौद्धइत्यर्थः केसव केशवभक्तः भागवतइत्यर्थः सुईश्रुतिमार्गगतः मीमांसकाः बह्मणब्रह्मभक्तः वानप्रस्थः णग्गोनग्नःक्षपणकः
मग्गेसुमार्गेषु दिक्खवाणंदीक्षाणां णाअव्वाज्ञातव्याः सूराइगहासूर्यादिग्रहाः कवेणक्रमेण णाहगआनाथगताः एवंचतुरादिनामेक
स्थानांमध्याद्यावंतोबलिनः तावंत्य एवप्रव्रज्याभवंति तत्रापिवीर्याधिकस्यप्रथमासंबंधिनीप्रव्रज्याभवति यस्मात्स्वल्पजातकेउ-
क्तम् चतुरादिभिरेकस्थैः प्रव्रज्यांस्वांग्रहः करोति बलीबहुवीर्येस्तावत्यः प्रथमावीर्याधिकस्यैव तापसः वृद्धश्रावकरक्तपटाजीविभिक्षुच
रकाणांनिर्ग्रंथानांचेति वीर्योपचयक्रमेणान्यासांक्रमः एवंबलिभिः समाः प्रव्रज्याः बलिनो ग्रहस्य या दृश्येवतद्बलानुसारेणप्राप्नोतिपरिपालय
ति ऊनबलस्यमनाङ्नाप्नोतिपालयति पराजितैस्तत्स्वामिभिःप्रच्युतिरिति शाक्यादिप्रव्रज्यास्वामिभिर्ग्रहैः पराजितैरन्यैर्ग्रहैः युद्धेविजितैः
प्रच्युतिः प्रव्रज्यात्यागः तत्प्रव्रज्यांगृहीत्वापुनस्त्यजति एतदुक्तंभवति चतुरादीनांमध्याद्यद्येकोबलवान्भवति सचग्रहयुद्धेजातककालेनपरा
जितस्तदाप्रव्रज्यांगृहीत्वापुनस्त्यजति त्यक्त्वाचप्रव्रज्यामनाश्रित्यैवतिष्ठति अथचतुरादीनांमध्याद्द्वौबहवोवाबलिनोभवंति तेचपराजि-
तास्तदाअन्यस्यसर्वाभ्यः प्रव्रज्याभ्यः च्युतिःभवति यस्माद्बलवतिग्रहसंख्यांस्तेनप्रव्रज्याः कर्तव्याः अंत्यप्रव्रज्याधिपतिर्यद्यन्येनग्रहे-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

णजितोनभवति तदातामेवप्रव्रज्यामाश्रितोम्रियते अथप्रव्रज्यादायकोग्रह एक एवजितोनभवति तदायावज्जीवंतामेवप्रव्रज्यामाश्रयति
अथ द्वौग्रहौप्रव्रज्यादायकौतौचापराजितौ तदाप्रथमप्रव्रज्यादायकांतर्दशायांप्रथमांप्रव्रज्यांगृहीत्वातामेवाश्रित्यतावत्तिष्ठति यावद्द्वितीय-
प्रव्रज्यादायकग्रहांतर्दशाप्रवेशः तत्रप्रथमांत्यक्त्वाद्वितीयामाश्रयति एवंबहुषुप्रव्रज्याकृत्संभवेयोज्यम् अत्रवसत्याचार्यैः नेष्टधिकव
ढीजीवश्चिदंडीनंमार्गवश्वरकसुरव्यं नग्नश्रमणंसौरात्बुधस्तदाजीविकाचार्यम् इन्दुःश्रावकमिंदुर्दिवाकरस्तापसंतपोधकत्कम् वक्रः
शाक्यः श्रवणसेत्राश्रयजंगुणाश्चैतान् वीर्योपेतेस्वतनावदीक्षितामक्तिवादिनस्तेषाम् अन्यैः पराजितश्चैत्प्रव्रज्याम्रच्यवंति कुर्यान् या
वंतोवीर्ययुक्ताःप्रव्रज्याभवंतितावंत्यः एकर्क्षगेषुनियमात्तेषामाद्यावलोपेतात् १ अथास्तमितान्यजितान्यदृष्टानांग्रहाणामपवादंवे
तालीयेनाह रविलुप्तकरैरिति चतुर्दशानामेकस्थानांमध्याद्यावंतौग्रहाबलिनस्तावंतः स्वप्रव्रज्यादायकास्तत्रापिबलिनांमध्येयावंतोरवि
लुप्तकराः सूर्यमंडलगाअस्तमितापभवंति तैरदीक्षिताजाताभवंति तावंतः स्वकीयाः प्रव्रज्यांनप्रयच्छंतीत्यर्थः किंतुजातानराः तद्भ

रविलुप्तकरैरदीक्षिताबलिभिस्तद्गतभक्तयोनराः अभियाचितमात्रदीक्षितानिहतैरन्यनिरीक्षितैरपि २

तभक्तयः तद्गतानांतत्प्रव्रज्यप्रविष्टानांमध्येभक्ताभवंति अत्ररविलुप्तकरत्वमुदयास्तमयंगणयित्वाऽन्वेष्यम् शुक्रगुरुज्ञार्किकुजाः
कलांशैःत्यक्तरोजरैः नवभिर्दृश्यादृश्याद्यकर्मणारवेः द्वादशभिरिंदुरित्येवमादिकर्मणिकृतेकदाचिदादित्येनसहैकराशिगतैरपिनास्तमि
तोभवति कदाचिद्वाद्वितीयराशिस्थोप्यस्तमितोभवति एवमुदयास्तमयमन्वेष्यास्तमितफलंवाच्यम् अभियाचितमात्रदीक्षिताइति ब-
लिभिरित्यनुवर्त्तते बलिभिर्निहतैः ग्रहयुद्धेन्यग्रहविजितैरन्यैश्चग्रहैर्निरीक्षितैर्दृष्टैः अभियाचितमात्रदीक्षिताः दीक्षाप्रार्थनपराभ
वंति नत्वतांप्राप्नुवंति पूर्वमुक्तंपराजितैस्तत्स्वामिभिः प्रच्युतिरित्यस्यायमपवादः तैनैतदुक्तंभवति बलिग्रहोग्रहयुद्धेन्येनविजितोभव
ति नकेनचिद्दृश्यतेतदातत्प्रव्रज्यांगृहीत्वापुनस्त्यजति अथबलिग्रहः समागमनेनग्रहेणाविजितोभवत्यन्येनचदृश्यते तदाप्रव्रज्यांमा-
र्थ्यमानोपिनप्राप्नोति यस्यचप्रव्रज्याप्रच्युतिःजातातस्यतदवसानेबहुषुतंतर्दशासंचारवशाद्यस्मिन्नंतर्दशाकालेबलवान्भविष्यतित ८१
स्मिन्कालेप्रव्रज्यांदास्यति तथाचोक्तम् दीक्षादानसमर्थोयोभवतितदाबलेनसंयुक्तः तस्यैवदशाकालेदीक्षांलभतेनरोवश्यम् यस्यचदी-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

क्षाच्यवनंतस्यैवदशावसानेस्यात् एवंजातककालेसंचिंत्यबलाबलंवाच्यम् २ अथचतुरादिभिरेकस्थैर्विनाप्रव्रज्यायोगंमालिन्याह जन्मेशइति जन्मनियस्मिन्राशौचंद्रः स्थितस्तस्ययोधिपतिर्ग्रहः सजन्मेशः सचयद्यन्यैर्ग्रहैरदृष्टोनावलोकितः नकेनचिद्ग्रहेणदृश्यतेतथाभूतोसावर्कपुत्रंशनैश्चरंपश्यति तदाजातस्यप्रव्रज्याभवति साचशनैश्चरकृताशनैश्चरजन्मेशयोः योबलवांस्तदीयांतर्दशाकाले उक्तंच यस्येक्षतेर्कपुत्रंजन्मपनाथोग्रहैर्नसंदृष्टः तस्यहिदीक्षालाभोनइलयोगाद्दशाकाले पश्यत्यार्किरिति अथवार्किः सौरः सबलोजन्मराश्यधिपंबलोनंवीर्यरहितंपश्यति तथापिशनैश्चरोक्तप्रव्रज्यांवदति उक्तंच शनिदृष्टेबलिहीनेजन्मनिनाथेवदेच्चनिर्ग्रंथं दीक्षांप्राप्नोतीति यत्रतत्रराशौचंद्रेशशिन्यार्किद्रेष्काणसंस्थेसौरद्रेष्काणव्यवस्थितेन केवलंयावद्भौमार्क्यंशेकुजसौरयोरन्यतमनवांशकस्थेतस्मिंश्चसर्वग्रहादृष्टेशनैश्चरेणक्षमाणेदीक्षांप्राप्नोति शनैश्चरोक्तेप्रव्रज्यांव्रजति तथाच सौरद्रेष्काणसंस्थोयदिभवतिशशीतद्दशसंस्थश्चवक्रांशेवादृष्टः सौरेणतुसर्वदर्शनविमुक्तिः निर्ग्रंथसंज्ञोयोर्कपुत्रवीर्यानुसारेणजन्माधिपतिः पापैरपिनिरीक्षितस्त्वेकईक्षितेसौरः यस्यपुरुषस्यमू

जन्मेशोन्यैर्यद्यदृष्टोर्कपुत्रंपश्यत्यार्किर्जन्मपंवाबलोनम् दीक्षांप्राप्नोत्यार्किदृक्काणसंस्थेभौमार्क्यंशेसौरदृष्टेच
चंद्रे ३ क्रूरगुरुशशिहोरास्त्वार्किदृष्टाःसधर्मेगुरुरथनृपतीनांयोगजस्तीर्थकृत्स्यात् ॥ तौनियतादीक्षितोभवति तस्य

जन्माधिपतिंविबलंनिरीक्षितेयस्यसूर्यजाबलः सोपिखलुभाग्यहीनः प्रव्रज्यांप्राप्नुयाज्जातः मांदेकौजेवांशेशशीस्थितः कृष्णाजेद्रेष्काणेवाअंशाधिपानुरूपेकालेदीक्षाप्रदोभवति अत्रयोगत्रयेपिपूर्वपदादनुवर्तनीयः ३ अथयेनयोगेनजातः शास्त्रकरोभवति येनचराजापिदीक्षितोभवति तद्योगद्वयंमालिन्याह क्रूरगुरुरिति क्रूरगुरुःजीवः शशीचंद्रः होरालग्नं एताःक्रूरगुरुशशिहोराःस आर्किणाशनैश्चरेणदृष्टाःसअवलोकिताःस धर्मेनवमेस्थानेगुरुः जीवोयदिभवति अथशब्दः पादपूरणे नृपतीनांयोगजःकश्चिद्राजयोगोजातस्यभवति तदासपुरुषः तीर्थकृच्छास्त्रकृत्स्याद्भवेत् काणादबुद्धपांचशिखवराहमिहिरब्रह्मगुप्तप्रभृतिमइति क्रूरगुरुशशिहोरास्विति धन्विमीनकर्कटलग्नेकेश्चिद्व्याख्यातं तच्चायुक्तं यस्मान्मांडव्यः गतेमंदालोकंगुरुशशिविलग्नेनवमगेगुरौनिष्पद्यंतेनइहनृपयोगेनृपतयः विजृंभंतेयेषांलटहरचनारंभसुभगाजगत्यांयेविद्वद्गुणकथनपाषाणसदृशाः तथाचोक्तम्-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गुरुशशिलग्नाद्दृष्टा कोणेनतुनवमगोयदिगुरुः नरनाथजन्यजातः शास्त्रकरोभवतिनिश्चनृपः अथद्वितीयोराजयोगोस्तत्रोपस्थानंक
रोति तदाराजाभवतितीर्थकरश्चजिनककाशिराजशकचिध्वजप्रतिमइति उक्तंच अस्मिन्योगेचान्योनृपयोगोभवति तत्रयोजातःस
भवति जिनेंद्रतुल्योनरनाथः शास्त्रकर्त्ताच॥ नवमभवनसंस्थेमंदंगच्छतीतिमंदगः सौरः तस्मिन्मंदगेलग्नान्नवमभवनसंस्थेध
र्मस्थानाश्रितेन्यैःसर्वैर्ग्रहैरदृष्टेनावलोकिते तथानरपयोगेराजयोगानांमध्यादन्यतमेराजयोगेसतिजातोदीक्षितः प्रव्रजितः पार्थि
वेंद्रश्चराजाधिराजोभवति पश्चात्तत्कालंसर्वबलीनदीक्षायांदीक्षितश्चभवति राजयोगंविज्ञायमपिप्रव्रज्यायोगः योगेस्मिन्
राजयोगजश्चेज्जातोराजादीक्षितश्चभवति अन्यथादीक्षितएवउक्तंच नवमस्थानेसौरोयदिस्थितः सर्वदर्शनविमुक्तः नरनाथयोग
जातोनृपोपिदीक्षान्वितोभवति नृपयोगस्याभावेयोगेस्मिन् दीक्षितोनरोजातः निःसंदिग्धंप्रवदेद्योगस्यास्यप्रभावेनेति ४ इतिश्री

नवमभवनसंस्थेमंदगेन्यैरदृष्टेभवतिनरपयोगेदीक्षितःपार्थिवेंद्रः ४ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृ
तौप्रव्रज्यायोगाध्यायःसमाप्तः १५ श्रीकृष्णार्पणमस्तु अथऋक्षशीलाध्यायः प्रियभूषणःस्वरूपःसुभ
गोदक्षोश्विनीषुमतिमांश्च कृतनिश्चयःसत्यारुग्दक्षःसुखितश्चभरणीषु १ बहुभुक्परदाररतस्तेजस्वीकृत्तिकासु
विख्यातः रोहिण्यांसत्यशुचिःप्रियंवदःस्थिरमतिःसुरूपश्च २ भट्टोत्पलविरचितायांबृहज्जातकविवृतौप्रव्रज्यायोगाध्यायःपंचद
शःसमाप्तः १५ श्रीकृष्णार्पणमस्तु अथऋक्षशीलाध्यायोव्याख्यायते ऋक्षंनक्षत्रंराशिश्च तत्रादावेवचंद्रभुज्यमाननक्षत्रशीलं
भवति तत्राश्विनीभरण्योःजातयोः शीलविज्ञानमार्ययाह प्रियभूषणइति प्रियभूषणः अलंकरणवल्लभःसुरूपःशोभनरूपः वपुष्मान्सुभ
गः सर्वजनप्रियः दक्षः सर्वकार्यकरणपटुः मतिमान्बुद्धियुक्तः एवंविधोश्विनीषुजातोभवति ताराकापेक्षयात्रसर्वत्रबहुवचननिर्देशः कृतः
कृतनिश्चयइति कृतनिश्चयःआरब्धानांकर्मणामंतगःसत्यःसत्यवाक् अरुक्निरुजः दक्षःचतुरःसुखितःदुःखनिर्मुक्तःएवंविधोभर-
णीषुजातोभवति १ अथकृत्तिकारोहिण्योर्जातस्यस्वरूपमार्ययाह बहुभुक्प्रभूताहारः परदाररतः परस्त्रीषासक्तः तेजस्वीअसहिष्णुः ८२
विख्यातः सर्वत्रप्रसिद्धकीर्तिः एवंविधःकृत्तिकासुजातोभवति सत्यः अवितथभाषी शुचिःपरस्वाद्यलुब्धः शास्त्रोक्तशौचानुष्ठाता प्रि-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

यंवदः मधुरवाक् स्थिरमतिः एकमतिः सुरूपश्चवपुष्मान् एवंविधः रोहिण्यांजातोभवतिति २ अथमृगशीर्षार्द्रयोः जातस्यस्वरूपमा-
र्याह चपलइति चपलइति चपलः क्रियास्वनवस्थितः चतुरः दक्षः भीरुः भयानकः पटुः प्रवक्ता उत्साहीसोद्यमः धनीवित्तवान् भोगी
चसंभोगशीलः एवंविधोमृगेमृगशिरसिजातोभवति शठः परकार्यविमुखः उक्तंचयंथांतरेशठलक्षणम् मनसावचसायश्चदृश्यतेकार्यत
त्परः कर्मणाविपरीतश्चसशठः सद्भिरीर्यते गर्वितः मानीकृतघ्नः खलः कृतमुपकृतंहंतियः सकृतघ्नः हिंस्रः वधकः पापः पापकर्मकर्त्ता-
एवंविधोरौद्रर्क्षेआर्द्रायांजातोभवतीति ३ अथपुनर्वसोजातस्यस्वरूपमार्याह दांतः शमपरः तपःक्लेशसहः सुखीसुखितः सुशीलः
शोभनशीलः विनयवान् दुर्मेधाजडप्रायः रोगभाक् पीडितदेहः पिपासुः तृषार्त्तः अल्पेनस्तोकेनेवार्थेनसंतुष्टः एवंविधोमनुजो मनुष्यः
पुनर्वसौजायतेउत्पद्यते ४ अथपुष्याश्लेषयोः जातस्यस्वरूपमार्याह शांतात्माइति शांतात्माशमदमपरोजितेंद्रियः सुभगः सर्वजन-

चपलश्चतुरोभीरुःपटुरुत्साहीधनीमृगेभोगी शठगर्वितःकृतघ्नोहिंस्रःपापश्चरौद्रर्क्षे ३ दांतःसुखीसुशी-
लोदुर्मेधारोगभाक्पिपासुश्च अल्पेनचसंतुष्टःपुनर्वसौजायतेमनुजः ४ शांतात्मासुभगःपंडितोधनीधर्म
संसृतःपुष्ये शठःसर्वभक्षःपापःकृतघ्नधूर्त्तश्चभौजंगे ५ बहुभृत्यधनोभोगीसुरपितृभक्तोमहोद्यमःपित्र्ये-
प्रियवाग्दाताद्युतिमानटनोनृपसेवकोभाग्ये ६ सुभगोविद्याप्तधनोभोगीसुखभाक्द्वितीयफाल्गुन्याम् ॥

प्रियः पंडितः शास्त्रार्थवित् धनीवित्तवान् धर्मसंसृतः धर्मनिरतः एवंविधः पुष्यजोभवति शठः परकार्यविमुखः सर्वभक्षः संचयनशीलः
पापः पापकर्मरतः कृतघ्नः कृतमुपकृतंहंतिसकृतघ्नः धूर्तः परवंचनदक्षः एवंविधोभौजंगेआश्लेषायांजातोभवति ५ अथमघापूर्वफा
ल्गुन्योः जातस्यस्वरूपमार्याह बहुभृत्यइति बहुभृत्यधनः प्रभूतपरिवारवित्तान्वितः भोगीभोगान्वितः सुरपितृभक्तः देवानांपितृ
णांचभक्तः महोद्यमः महोत्साही एवंविधः पित्र्येमघायांजातोभवति प्रियवाक् अभिमतवक्ता दाताउदानशीलः द्युतिमान्सुकांतिः अटनः
परिभ्रमणशीलः नृपसेवकः राजसेवानुरतः एवंविधोभाग्येपूर्वफाल्गुन्यांजातोभवति ६ अथोत्तराफाल्गुनीहस्तयोर्जातस्यस्वरूपमार्याह
सुभगइति सुभगः सर्वजनप्रियः विद्याप्तधनः विद्ययाआप्तंधनंयेन भोगीभोगान्वितः सुखभाक् दुःखरहितः एवंविधोद्वितीयफाल्गुन्यांउत्तराफाल्गुन्यांजातो

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भवति उत्साही सोद्यमः धृष्टः प्रतिभायुक्तः निर्लज्जो वा पानपः पानप्रियः आसवानुरक्तः अघृणी निर्दयः तस्करः चोरः एवंविधो हस्ते जातो भव
ति ७ अथ चित्रास्वात्योर्जातस्य स्वरूपमार्ययाह चित्रांबरमाल्यधरः चित्राणि नानाप्रकाराणि अंबराणि वस्त्राणि माल्यानि च धारयति सुलो
चनांगः शोभनानेत्रावयवा यस्य एवंविधः चित्रायां जातो भवति दांतो विनयान्वितः जितेंद्रियः वणिक्क्रयविक्रयज्ञः कृपालुः दयालुः के
चित्तृषालुरिति पठंति तृषालुः तृषां न सहते प्रियवाक् अभिमतवक्ता धर्माश्रितः धर्मरतः एवंविधः स्वातौ जातो भवति ८ अथ विशाखा
नुराधयोर्जातस्य स्वरूपमार्ययाह ईर्ष्युरिति ईर्ष्युः परधिमत्सरी लुब्धः लोभाभिभूतः द्युतिमान् सुकांतिः वचनपटुः संभाषणदक्षः के
चिदर्थपटुरिति पठंति अर्थार्जने पटुः प्रवीणः कलहकृद्विरोधशीलः एवंविधो विशाखासु जातो भवति आढ्यः ईश्वरः विदेशवासी पर
देशनिवसनशीलः क्षुधालुः क्षुधां न सहते आटनः परिभ्रमणशीलः एवंविधोऽनुराधासु जातो भवति ९ अथ ज्येष्ठामूलयोर्जातस्य स्वरूप

उत्साही धृष्टः पानपो घृणी तस्करो हस्ते ७ चित्रांबरमाल्यधरः सुलोचनांगश्च भवति चित्रायाम् दांतो व
णिक्कृपालुः प्रियवाग्धर्माश्रितः स्वातौ ८ ईर्ष्युर्लुब्धो द्युतिमान्वचनपटुः कलहकृद्विशाखासु आढ्यो वि
देशवासी क्षुधालुरटनोऽनुराधासु ९ ज्येष्ठासु न बहुमित्रः संतुष्टो धर्मकृत्प्रचुरकोपः मूले मानी धनवान्
सुखी नहिंस्रः स्थिरो भोगी १० इष्टानंदकलत्रो मानी दृढसौहृदश्च जलदेवे वैश्वे विनीत धार्मिक बहुमित्रः
कृतज्ञः सुभगश्च ११ श्रीमान्श्रवणे श्रुतवानुदारदारो धनान्वितः ख्यातः॥ मार्ययाह नबहुमित्रः स्वल्पसुहृद् संतुष्टः

संतोषशीलः धर्मकृद्धर्मानुरतः प्रचुरकोपः अतिक्रोधी एवंविधो ज्येष्ठासु जातो भवति मानी गर्वितः धनवान् प्रभूतवित्तः सुखी सुखितः नहिंस्रः
सौम्यप्रकृतिः परविघातं न करोति स्थिरः एकमतिः भोगी भोगान्वितः एवंविधो मूले जातो भवति १० अथ पूर्वोत्तराषाढयोर्जातस्य स्वरूपमार्य-
याह इष्टानंदकलत्रः इष्टोऽभिमतः सुलभः आनंदकरः तुष्टिकरः कलत्रं भार्या यस्य मानी गर्वितः दृढसौहृदः स्थिरसुहृत् एवंविधो जलदेवे पू
र्वाषाढायां जातो भवति विनीतः विनयसंयुक्तः धार्मिकः धर्मज्ञः बहुमित्रः प्रभूतसुहृत् कृतज्ञः प्रत्युपकारशीलः सुभगश्च सर्वजनप्रियः
एवंविधो वैश्वदेवे उत्तराषाढायां जातो भवति ११ अथ श्रवणधनिष्ठयोर्जातस्य स्वरूपमार्ययाह श्रीमान् श्रिया युक्तः श्रुतवान् पंडितः उदार ८३

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दारः शोभनस्त्रीकः धनान्वितः वित्तवान् ख्यातः जनविदितकीर्तिः एवंविधः श्रवणेजातोभवति ॥ दातादानशीलः आढ्यः ईश्वरः
शूरः रणप्रियः गीतप्रियः गीतवल्लभः धनलुब्धः अर्थरुचिः एवंविधोधनिष्ठास्रुजातोभवति १२ अथशतभिषक्पूर्वभाद्रपदयोर्जा
तस्यस्वरूपमार्याद्वयेनाह स्फुटवाक्निष्ठुरभाषी सत्यवादी व्यसनीस्त्र्यादिव्यसनोपहतः रिपुहाशत्रुघातकः साहसिकः असमीक्षितकार्यकृत्
दुर्गाह्यः दुराध्यः एवंविधः शतभिषजिजातोभवति उद्विग्नः दुःखितमनाः स्त्रीजितः स्त्रीभिरभिभूतः धनीधनवान् अथवास्त्रियाजितं
धनंयस्यपटुः प्रवक्ता अथवाधनपटुः धनार्जनेचतुरः अदाताकदर्यः एवंविधः पूर्वभाद्रपदासुजातोभवति १३ अथोत्तराभाद्रपदारेवत्यो
र्जातस्यस्वरूपमार्ययाह वक्तावचनपटुः संभाषणेदक्षः सुखीविद्यमानसुखः प्रजावान्बहुपुत्रपौत्रः जितशत्रुः जितारिः धार्मिकः
धर्मशीलः एवंविधोद्वितीयासूत्तराभाद्रपदासुजातोभवति संपूर्णांगः परिपूर्णावयवः सुभगः सर्वजनप्रियः शूरः संग्रामधीरः शुचिः

दाता आढ्यःशूरोगीतप्रियोधनिष्ठासुधनलुब्धः १२ स्फुटवाग्व्यसनीरिपुहासाहसिः शतभिषजिदुर्ग्राह्यः भा
द्रपदासूद्विग्नः स्त्रीजितधनीपटुरदाताच १३ वक्तासुखीप्रजावान्जितशत्रुर्धार्मिकोद्वितीयासु संपूर्णांगसु
भगाशूरःशुचिरर्थवान्पौष्णे १४ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौऋक्षशीलाध्यायःस
माप्तः १६ अथराशिशीलाध्यायारंभः वृत्ताताम्रदृगुष्णाशाकलघुभुक्क्षिप्रप्रसादोटनः कामीदुर्बल
जानुरस्थिरधनः शूरोंगनावल्लभः ॥ परधनादिषुलुब्धः अर्थवान् धनान्वितः एवंविधः पौष्णेरेवत्यांजातोभवति एतेयथो-
क्तानक्षत्रस्वभावाचंद्रस्य सबलत्वात्संपूर्णाभवंति १४ इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौऋक्षशीलाध्यायः समाप्तः
१६ अथातोराशिशीलाध्यायोव्याख्यायते अयमेषस्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह वृत्तेति वृत्तेपरिवर्तु
ले आताम्रे लोहितवर्णेदृष्टीचक्षुषीयस्यसवृत्तातान्म्रदृक् परिवर्तुलेलोहितनेत्रः उष्णंशाकलघुचेस्वल्पंभुंक्ते सउष्णशाकलघुभुक् उ
ष्णभोजीशाकभोजीलघुभोजीक्षिप्रप्रसादः आशुएवप्रसीदतिअटनः परिभ्रमणशीलः कामीसुरतप्रियः दुर्बलजानुः निर्मांसल
जंघासंधिः अस्थिरधनः अचिरवित्तः शूरः रणप्रियः अंगनावल्लभः स्त्रीप्रियः अंगनानांवल्लभोअंगनावल्लभायस्य ॥ .७ ७

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सेवाज्ञः पराराधनकुशलः कुनखी कुत्सितनखः व्रणांकितशिराः सच्छिद्रमूर्द्धा मानी गर्वितः सहोत्थाग्रजः सहोत्थानां सहजातानामग्रणी गणप्रधानः पाणितले हस्ततले शक्त्याचिन्हविशेषेणांकितः चिन्हितः अतिचपलः क्रियास्वनवस्थितः तोये च जले भीरुः सभयः एवंविधः क्रियेमेषस्थिते चंद्रमसि जातो भवति १ अथ वृषस्थे चंद्रमसि जातस्य स्वरूपं शार्दूलविक्रीडितेनाह कांतइति कांतः दर्शनीयः खेलगतिः सविलासगामी पृथूरुवदनः पृथू विस्तीर्णौ ऊरू वदनं मुखं च यस्य पृष्ठं पश्चिमभागः आस्यं वक्त्रं पार्श्वे प्रसिद्धे एषामन्यतमस्थानेंकितश्चिह्नितः त्यागी दाता क्लेशसहः कदर्थनासमर्थः प्रभुः सप्रतिहताज्ञः ककुद्वान् ककुदसंयुक्तः कन्याप्रजायस्य स्त्रीजनकः श्लेष्मलः कफाधिकः पूर्वैः प्रथमैः बंधुभिः कुटुंबैः धनैः वित्तैः आत्मजैः पुत्रैश्च विरहितः वियुक्तः सौभाग्ययुक्तः सर्वजनवल्लभः क्षमी क्षमावान् सहिष्णुरित्यर्थः दीप्ताग्निः बह्वाशी प्रमदाप्रियः स्त्रीवल्लभः स्थिरसुहृत् दृढमित्रः मध्यांतसौख्यः मध्ये यौवनेंत्ये वृद्धत्वे च सुखितः अर्थादेव बाल्ये दुःखितः एवंविधो गवि वृषस्थे चंद्रे जातो भ

सेवाज्ञः कुनखी व्रणांकितशिरो मानी सहोत्थाग्रजः शक्त्या पाणितलेंकितोऽतिचपलस्तोये च भीरुः क्रिये १ कांतः खेलगतिः पृथूरुवदनः पृष्ठास्यपार्श्वेंकितस्त्यागी क्लेशसहः प्रभुः ककुद्वान्कन्याप्रजः श्लेष्मलः पूर्वैर्बंधुधनात्मजैर्विरहितः सौभाग्ययुक्तः क्षमी दीप्ताग्निः प्रमदाप्रियः स्थिरसुहृन्मध्यांत्यसौख्यो गवि २ स्त्रीलोलः सुरतोपचारकुशलस्ताम्रेक्षणः शास्त्रवित् दूतः कुंचितमूर्द्धजः पटुमतिर्हास्येंगितद्यूतवित् चार्वंगः प्रियवाक्प्रभक्षणरुचिर्गीतप्रियो नृत्यवित् क्लीबैर्याति रतिं समुन्नतनसश्चंद्रे तृतीयर्क्षगे ३ आवक्रद्रुतगाः समुन्नतकटिः स्त्रीनिर्जितः सत्सुहृद्दैवज्ञः प्रचुरालयः क्षयधनैः संयुज्यते चंद्रवत् ।) वति २ अथ मिथुनस्थे चंद्रमसि जातस्य स्वरूपं शार्दूलविक्रीडितेनाह स्त्रीलोलइति स्त्रीलोलः स्त्र्यभिलाषकरः सुरतोपचारकुशलः सुरतोपचारे सुरतकर्मणि कामशास्त्रेषु कुशलः शिक्षितः ताम्रेक्षणः लोहितनेत्रः शास्त्रवित् शास्त्रज्ञः पंडितः दूतः परेच्छयागमनागमनशीलः कुंचितमूर्द्धजः कुटिलशिरोरुहः पटुमतिश्चतुरधीः अतीवप्राज्ञः हास्यमुपहासं इंगितं परचित्तज्ञानं द्यूतं एतानि वेत्ति जानाति चार्वंगः शोभनावयवः प्रियवाक् अभिमतवक्ता प्रभक्षणरुचिः बहुभक्षकः गीतप्रियः गीतरतिः नृत्यवित् नृत्तज्ञः क्लीबैः षंढैः सह रतिं याति गच्छति समुन्नतनसः उच्चनसः एवंविधश्चंद्रे तृतीयर्क्षगे तृतीय ८४

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

राशौस्थितेमिथुनगेजातोभवतीत्यर्थः ३ अथकर्कटस्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह आवक्रेति आवक्रंकुटिलंद्रुतं सत्वरंग
च्छतीति आवक्रद्रुतगः कुटिलसत्वरगामीससमुन्नतकटिः उच्चजघनः स्त्रीनिर्जितः प्रमदाजितः सत्सुहृच्छोभनमित्रः दैवज्ञः ज्योतिःशास्त्रार्थवे-
त्ता प्रचुरालयः प्रभूतगृहकर्त्ता क्षयधनैरपचयोपचयैश्चंद्रवच्छशीवत्संयुज्यते कदाचिद्विधनइत्यर्थः चंद्रक्षयवृद्धिवत् ह्रस्वः अदीर्घः पीनगलः
मांसलकंठः साम्नाप्रीत्यावशंवश्यतांसमेतियाति सत्सुहृद्वत्सलः मित्रवल्लभः तोयोद्यानरतः जलोपवनसक्तः तोयेनजलेनउपवनेनचरतः एवं-
विधः स्ववेश्मसहितेकर्कटस्थेशशांकेचंद्रेनरः पुरुषः जातोभवति ४ अथसिंहस्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह तीक्ष्ण
इति तीक्ष्णः अमर्षशीलः स्थूलहनुः दृढहनुः बृहत्कपोलः विशालवदनो विस्तीर्णमुखः पिंगेक्षणः कपिलनेत्रः अल्पात्मजः स्वल्पापत्यः
स्त्रीद्वेषीप्रमदाद्विट् स्त्रीद्विष्टेतिकेचित्पठंति प्रियमांसकाननगः मांसमामिषंकाननमरण्यंनगः पर्वतः एतेप्रियायस्य आमिषवनपर्वतानुर

आवक्रद्रुतगः समुन्नतकटिः स्त्रीनिर्जितः सत्सुहृद्दैवज्ञः प्रचुरालयः क्षयधनैः संयुज्यतेचंद्रवत् ह्रस्वः पीनगलः स
मेतिचवशंसाम्नासुहृद्वत्सलस्तोयोद्यानरतः स्ववेश्मसहितेजातः शशांकेनरः ४ तीक्ष्णः स्थूलहनुर्विशालवदनः पिंगे
क्षणोल्पात्मजः स्त्रीद्वेषीप्रियमांसकाननगः कुप्यत्यकार्येचिरं क्षुत्तृष्णोदरदंतमानसरुजासंपीडितस्त्यागवान्विक्रा
तः स्थिरधीः सुगर्वितमनामातुर्विधेयोर्कभे ५ व्रीडामंथरचारुवीक्षणगतिः स्रस्तांसबाहुः सुखीश्लक्ष्णः सत्यरतः क
लासुनिपुणः शास्त्रार्थविद्धार्मिकः ॥१॥

तः अकार्येअकरणीयेऽर्थे कुप्यतिक्रुध्यति चिरंबहुकालंकेचिदकांडेइतिपठंति अकांडे-
अकालेक्षुत्क्षुधातृष्णापिपासाउदरंजठरंदंताद्दशनाः मनश्चित्तंएभ्योजातारुजः पीडास्ताभिः संपीडितउपतप्तः त्यागवान्दाता विक्रांतः परा
क्रमशीलः स्थिरधीरेकमतिः गर्वितमनाः अभिमानसंयुक्तः मातुर्विधेयोजननीवश्यः भक्तइत्यर्थः विधेयोवचनग्राहीइत्यर्थः एवंविधोर्कभेसूर्य
राशौसिंहस्थेचंद्रेजातोभवति ५ अथकन्यागतेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह व्रीडामंथरचारुवीक्षणगतिरिति व्रीडालज्जान
यामंथरंअलसत्वंतेनचारुशोभनंवीक्षणंदृष्टिपातोगतिः गमनंचयस्यस्रस्तावधः पतितौशिथिलावंसौस्कंधौबाहूभुजौयस्यसुखीसु
खिनः श्लक्ष्णः मृदुवाक्तनुकायोवा सत्यरतः सत्यभाषीधार्मिकश्च परमार्थवादी कलासुनिपुणः कलासुनृत्यगीतवाद्यपुस्तकचित्रकर्मसुनिपु-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ज्ञः शास्त्रार्थविखंडिनः धार्मिकः धर्मानुरतः मेधावीबुद्धिमान् सुरतप्रियः कामलोलुपः परगृहैः परवेश्मभिः वित्तैर्धनैश्चसंयुज्यते स-
णः सुज्ञः शास्त्रार्थविखंडिनः धार्मिकः धर्मानुरतः मेधावीबुद्धिमान् सुरतप्रियः कामलोलुपः परगृहैः परवेश्मभिः वित्तैर्धनैश्चसंयुज्यते स-
म्यग्युक्तोभवति परदेशगतः अन्यदेशनिवासशीलः प्रियवचाः प्रियभाषी कन्याप्रजाः कन्याप्रजायस्य स्त्रीजनकः अल्पात्मजः स्वल्पपुत्रः
एवंविधः कन्यायांस्थितेचंद्रेजातोभवति ६ अथतुलास्थेचंद्रमसिजातस्यस्वरूपंशार्दूलविक्रीडितेनाह देवेति देवब्राह्मणसाधुपूजनरतः
देवानां सुराणांब्राह्मणानांद्विजानांसाधूनांसज्जनानांचपूजनेरतः सक्तः प्राज्ञः मेधावीअत्रमेधाबुद्धिः प्रज्ञालक्षणं अतीतानुस्मृता मेधाबु
द्धिस्तत्कालग्राहिणीशुभाशुभविचारज्ञाप्रज्ञाधीरैरुदाहृता शुचिः परधनाद्यलुब्धः श्रोत्रियोवा स्त्रीजितः योषितांवशगः प्रांशुरुच्चः
उन्नतनासिकः अत्युन्नतनासः कृशचपलगात्रः दुर्बलशिथिलावयवः कृशंदुर्बलंचपलंबलहीनंगात्रंशरीरंयस्य अटनः परिभ्रमणशीलः अ-
र्थान्वितः सधनः हीनांगः अपरिपूर्णावयवः क्रयेषुविक्रयेषुचकुशलः शक्तः देवद्विनामासम्यक्पर्यायद्वितीयाभिधानः द्वितीयनामदेवाख्यंचास्यभव

मेधावीसुरतप्रियः परगृहैर्वित्तैश्चसंयुज्यतेकन्यायांपरदेशगःप्रियवचाःकन्याप्रजोल्पात्मजः ६ देवब्राह्मणसा
धुपूजनरतःप्राज्ञः शुचिः स्त्रीजितःप्रांशुश्चोन्नतनासिकःकृशचलद्गात्रोटनोर्थान्वितः हीनांगःक्रयविक्रयेषुकुशलो
देवद्विनामासरुग्बंधूनामुपकारकृद्विरूषितस्त्यक्तस्तुलेःसप्तमे ७ पृथुलनयनवक्षाः हृतजंघोरुजानुर्जनकगुरुवि
युक्तः शैशवेव्याधितश्च नरपतिकुलपूज्यःपिंगलःक्रूरचेष्टोझषकुलिशखगांकश्छन्नपापोलिजातः ८ छ छ

ति सरुक्पीडितदेहः बंधूनांस्वकुटुंबानामुपकारकृद्धितकारी तैश्चबंधुभिः विरूषितः भर्त्सितः पराभूतः त्यक्तःत्यजितश्चएवंविधः सप्तमेतुला-
स्थेचंद्रमसिजातोभवति ७ अथवृश्चिकस्थेचंद्रमसिजातस्यस्वरूपंमालिन्याह पृथुलेति पृथुलनयनवक्षाः पृथुलेविस्तीर्णेनयनेनेत्रे
वक्षउरोयस्य हृतेपरिवर्त्तुलेजंघेऊरूजानुनीचयस्य जनकैःमातृपितृभिः गुरुभिश्चोपदेशकारिभिःगौरवयुक्तैश्चवियुक्तोरहितः शैशवेबाल्ये
व्याधितः पीडितः नरपतिकुलेराज्ञांवंशेपूज्यः आराध्यः पिंगलः क्रूरचेष्टः विषमस्वभावः झषकुलिशखगांकः झषोमीनः कुलिशंवज्रंखगः
पक्षीएतैर्मत्स्यवज्रपक्षिसमानैरंकैश्चिह्नैरंकितश्चिह्नितः छन्नपापः गुप्ताशुभकृत् एवंविधोलिनिवृश्चिकस्थेचंद्रेजातोभवति ८ अथधनु
र्धरस्थेचंद्रेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह व्यादीर्घास्येति व्यादीर्घास्यशिरोधरः व्यादीर्घमतिदीर्घमास्यंमुखंशिरोधराग्रीवाचयस्य



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पितृधनः जनकवित्तान्वितः त्यागी दाता कविः काव्यज्ञः वीर्यवान्बली वक्ता संभाषणेदक्षः स्थूलरदश्रवाधरनसः स्थूलामहत्प्रमाणारदा दंताः
श्रवणौकर्णौअधरओष्ठः नसः नासिका घ्राणः एतेसर्वएवस्थूलायस्यकर्मोद्यतः सर्वकार्येषु उद्यमशीलः शिल्पवित् शिल्पज्ञः लिपिपुस्तक
चित्रज्ञः कुब्जांसः अस्पष्टस्कंधः कुनखी कुत्सितनखः समांसलभुजः पीनबाहुः प्रागल्भ्यवान् अतिमतिभाषकः धर्मवित् धर्मज्ञः बंधु
द्विट् बंधूनामप्रीतिभाक् दुष्टाबलवान् हठादाक्रमणादसंविधेयनावशंनवश्यतां नसमेतिनायाति सान्नाप्रीत्याएकेनैवगुणेनसाध्यः स्त्री
क्रियते एवंविधोश्वजोधनुषिस्थितेचंद्रेजातोभवति ९ अथमकरस्थेचंद्रेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह नित्यंलालयतीति नित्यंलाल
यति स्वदारतनयान् स्वकलत्रंतनयांश्चपुत्रान् लालयति आराधयति प्रीत्याभजते धर्मध्वजः दांभिकः मिथ्याधार्मिकः अधःकृशः अधो-
भागादतिदुर्बलः स्वक्षः शोभननेत्रः क्षामकटीः कृशजघनिः गृहीतवचनः उक्तग्राहकः यदुच्यतेतत्सकृदेवगृण्हाति सौभाग्ययुक्तः सर्वजनप्रि

व्यादीर्घास्यशिरोधरः पितृधनस्त्यागी कविर्वीर्यवान्वक्तास्थूलरदश्रवाधरनसः कर्मोद्यतः शिल्पवित् कुब्जांसः कुनखीस
मांसलभुजः प्रागल्भ्यवान्धर्मविद्बंधुद्विट्नबलात्समेतिचवशंसाम्नैकसाध्योश्वजः ९ नित्यंलालयतिस्वदारतनयान्धर्मध
जोधःकृशः स्वक्षः क्षामकटिर्गृहीतवचनः सौभाग्ययुक्तोलसः शीतालुर्मनुजोऽटनश्चमकरेसत्वाधिकः काव्यकृल्लुब्धोगम्य
जरांगनासुनिरतः संत्यक्तलज्जोघृणः १० करभगलः शिरालुः खररोमशदीर्घतनुः पृथुचरणोरुपृष्ठजघनास्यकटिर्जठरः॥

यः अलसः क्रियास्वपटुः शीतालुः शीतंनसहते अटनः परिभ्रमणशीलः सत्वाधिकः उदारचेष्टः बलाधिकोवा काव्यकृत् विद्वान् लुब्धः लोभा-
भिभूतः अगम्यासुअगमनीयासु निकृष्टजातिषु जरदंगनासु वृद्धस्त्रीषु निरतः संसक्तः संत्यक्तलज्जः विमुक्तव्रीडः अघृणः निर्दयः एवंविधो
मनुजोमनुष्योमकरस्थेचंद्रमसिजातोभवति १० अथकुंभस्थेचंद्रेजातस्यस्वरूपंत्रोटकेनाह करभगलइति करभगलः उष्ट्रसमग्रीवः शि
रालुः शिरासंततः खराकर्कशालोमायस्यासालोमशादीर्घाउच्चात्वातनुः शरीरंयस्य पृथुविस्तीर्णौचरणौपादौतथाऊरूजानूपरिभागौपृष्ठं
देहपश्चिमभागोजघनंनितंबस्थानमास्यंमुखंकटिश्चवलिःयस्यसः पृथुचरणोरुपृष्ठजघनास्यकटिः तथाजठरः सूरवः परिवनितासु
परस्त्रीषुपरार्थेषुपापेचनिरतः सक्तः क्षयवृद्धियुतः उपचयापचयैर्युक्तः प्रियकुसुमानुलेपनः कुसुमानिपुष्पाणिअनुलेपनंसमालं

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

गमनं कृतं दोमित्राणिप्रियाणियस्य अध्वसहः पथिक्षमः एवंविधो घटजः कुंभस्थे चंद्रमसिजातोभवति ११ अथमीनस्थे चंद्रमसिजातस्यस्वरूपं मालिन्याह जलपरधनभोक्तेति जलपरधनभोक्ता जलधनामासुद्कोत्पन्नवित्तानांमुक्ताफलानांक्रयविक्रयजानानांपरधनानांचभोक्तास्वामी दारवासोनुरक्तः दारेषु कलत्रेषुविषयेषुवाससांवस्त्राणांचानुरक्तः समरुचिरशरीरः समंतुल्यंसर्वावयवपरिपूर्णंरुचिरदीप्तिमच्छरीरंयस्य तुंगनासाअत्युच्चनासिकः वृहत्कः विस्तीर्णमूर्द्धा अभिभवतिसपत्नान् सपत्नान्शत्रून् अभिभवतिपराभवति स्त्रीजितः प्रमदावशगः चारुदृष्टिः शोभनाक्षः द्युतिनिधिधनभोगी द्युतिः कांतिः निधिः भूमावधःस्थापितमर्थोनिधिशब्देनोच्यते धनंवित्तं एषांभोगीभोक्ता पंडितश्चशास्त्रार्थवित् एवंविधांत्यराशौमीनस्थेचंद्रमसिजातोभवति १२ अथोक्तराशिस्वरूपमपवादंचभ्रमरविलसितेनाह बलवतिराशावितिपुरुषस्यजन्मसमयेयस्मिन्राशौचंद्रमाव्यवस्थितस्तस्मिन्बलवतिसबलेतथातस्यचराशेर्योधिपतिस्तस्मिंस्तदधिपतौचबलवति तथा

परवनितार्थपापनिरतः क्षयवृद्धियुतः प्रियकुसुमानुलेपनसुहृत्घटजोध्वसहः ११ जलपरधनभोक्तादारवासोनुरक्तः समरुचिरशरीरस्तुंगनासोबृहत्कः अभिभवतिसपत्नान्स्त्रीजितश्चारुदृष्टिर्द्युतिनिधिधनभोगीपंडितश्चांत्यराशौ १२ बलवतिराशौतदधिपतौच स्वबलयुतः स्याद्यदितुहिनांशुः कथितफलानामविकलदाताशशिवदतोन्येत्यनुपरिचिंत्याः १३ इतिश्री बृहज्जातकेराशिशीलश्चंद्रस्यसप्तदशोऽध्यायः १७॥ ॥

तुहिनांशुश्चंद्रमासंच यदिस्वबलेनात्मीयेनवीर्येण पूर्वोक्तेन संयुतोन्वितः स्याद्भवेत् एवमेतेषुत्रिषुयदिसबलत्वंविद्यते तदा यथोक्तराशिस्वरूपंजातःजातः पुरुषोभवति यतउक्तं कथितफलानामविकलदातेति अनयासामग्र्यासंचंद्रः कथितफलानांउक्तस्वरूपाणामविकलानांपरिपूर्णानांदाताभवति एषांमध्याद्द्वयोर्बलवतोर्मध्येयत्फलं स्वरूपंप्राप्नोति एकस्मिन्बलवतिहीनंकिंचित् नकस्मिंश्चिद्बलवतिनदुक्तंस्वरूपंनकिंचिद्भवति शशिवदतइति अतोस्माच्चंद्राद्न्येपरिशिष्टायेग्रहाः रविभौमज्ञगुरुसितसौराः शशिवच्चंद्रवत् परिकल्प्याः यत्रराशौस्थिताभवंति तदाश्रयेण वक्ष्यमाणंस्वरूपंदास्यंति तदपिचंद्रवत् एतदुक्तंभवति बलवतिराशौ तदधिपतौच बलवतियस्यग्रहस्यराशिस्वरूपंपच्यते तस्मिन्नपिबलवतितदधिपतौच संपूर्णंतत्संस्थितंराशिस्वरूपंभवति यद्येकयोश्च बलवतोर्मध्यमानमितिनकस्मिंश्चिद्बलवति नैनत्किंचिदिति



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चंद्रराशिस्वभावइति १३ इतिश्रीबृहज्जानकेराशिशीलश्चंद्रस्यसप्तदशोध्यायः १७ अथमेषवृषगतेर्केजातस्य स्वरूपमोपच्छं दसिकेनाह प्रथितः प्रख्यातः चतुरः दक्षः अटनः परिभ्रमणशीलः अल्पवित्तः स्तोकार्थः आयुधभृत् शस्त्रधारणजीवी एवंविधः क्रियगेमेषस्थेभानावादित्येजातोभवति एतच्चफलंवितुंगभागेयदितत्रैवमेषस्थः आदित्यः परमोच्चस्थोभवति तुंगभागंपरमोच्चंवर्जयित्वा अन्यत्र-स्थितेर्केचैतत्फलंदोषभागजातोनभवति तद्यथा अल्पवित्तोबहुवित्तोभवति अटनोनभवति आयुधभृन्नभवति तस्यान्येआयुधभृतोनुयायिनोभवंति अन्येतुपुनः पूर्वोक्तागुणाः प्रथितश्चतुरोभवति गवीत्यादि वस्त्रैरंबरैः स्रग्गंधद्रव्यैः पुण्येश्चजीवति वनिताहृद् स्त्रीषु दृष्टा गेयगीते वाद्येच वादनविधौकुशलः शिक्षितः एवंविधोगविवृषस्थेसूर्येजातोभवति १ अथमिथुनकर्कसिंहकन्यास्थेसूर्येजातस्यस्वरूपंशार्दूलविक्रीडितेनाह विद्याज्योतिषवित्तवान् विद्यावान्व्याकरणज्ञः ज्योतिषवान् ज्योतिषशास्त्रज्ञः वित्तवान्धनी एवंविधोमिथुनस्थेभानौजातोभवति ती

प्रथितश्चतुरोटनोल्पवित्तः क्रियगेत्वायुधभृद्वितुंगभागे गविवस्त्रस्रग्गंधपण्यजीवी वनिताहृद्कुशलश्चगेयवाद्ये १
विद्याज्योतिषवित्तवान्मिथुनगेभानौकुलीरेस्थितेतीक्ष्णोऽस्वःपरकार्यकृच्छ्रमपथः क्लेशैश्चसंयुज्यते सिंहस्थेवनशैलगोकुलरतिर्वीर्यान्वितोऽज्ञः पुमान्कन्यास्थेलिपिलेख्यकाव्यगणितज्ञानान्वितः स्त्रीवपुः २ जातस्तौलिनिशौंडिको ध्वनिरतोहैरण्यकोनीचकृत्क्रूरः साहसिकोविषार्जितधनः शस्त्रांतगोलिस्थिते ॥१॥ ॥अर्द्धश्लोकः॥ ५ ॥

क्ष्णः उग्रः अस्वः दरिद्रः परकार्यकृत्अन्येषांकार्यकर्त्ता श्रमपथः श्रमेणखेदेनपथाध्वनाक्लेशैः दुःखैश्चसर्वकालंसंयुज्यतेएवंविधः कुलीरस्थेक-र्कटगतेभानौजातोभवति सिंहस्थइति वनमरण्यं शैलः पर्वतः गोकुलः गोवाटः एतेषुस्थानेषुरतिः निवासशीलः तदासक्तइत्यर्थः वीर्यान्वितः बली अज्ञः मूर्खः एवंविधः पुमान्पुरुषः सिंहस्थेर्केजातोभवति लिपिरक्षरविन्यासः लेख्यंचित्रकर्म काव्यंकवेःकर्मगणितंग्रहगणितादि ज्ञानंविज्ञानं एतैरन्वितोयुक्तः स्त्रीवपुः स्त्रीतुल्यशरीरः एवंविधः कन्यास्थेर्केजातोभवति २ अथतुलावृश्चिकधन्विमकरस्थेर्केजातस्यस्वरूपंशार्दूलविक्रीडितेनाह जातइति शौंडिकोमद्यविक्रयीभवति मद्यकरोवेतिकेचित् अध्वनिरतः प्रथिमक्षिप्तः हैरण्यकः स्वर्णकारः नीचकृत्तुच्छकर्मकर्त्ता एवंविधः तौलिनितुलास्थेर्केजातोभवति क्रूरः उग्रस्वभावः साहसिकः असमीक्षितकार्यकृत् तथाच अस-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मोक्षितकार्याणांकर्त्ता साहसिकः स्मृतः विषार्जितधनः विषप्रयोगैरर्जितंधनंसंचितंवित्तंयेन प्रत्यंतरेरथार्जितधनः यद्धनमर्जतितदस्यदृ-
ष्टानिः फलंभवति चौरादयो पहरंति शस्त्रांतगः शस्त्रनैपुण्यकः शस्त्रस्यायुधस्यांतगः एवंविधोलिस्थितेवृश्चिकगतेर्केजातोभवति सत्पूज्यःस
तामर्च्चनीयः धनवान्वित्तयुक्तः तीक्ष्णः निरपेक्षः भिषक्वैद्यः प्रयोगज्ञः कारुकः शिल्पिकर्मज्ञः एवंविधोधनुर्धरस्थेर्केजातोभवति नीचः कुला
नुचिताधर्मकर्मकृत् अज्ञः मूर्खः कुवणिक् कुत्सितवणिक् अल्पधनवान् स्तोकार्थः लुब्धः लोभाभिभूतः अन्यभाग्येरतः परकीयेभाग्येः-
वित्तादिभिः रतः परार्थोपकारभोक्ता एवंविधो मृगेमकरस्थेर्केजातोभवति ३ अथकुंभमीनगतेर्केजातस्यस्वरूपंचंद्रार्कयोरेकराशिगतयोस्तुल
क्ष्मज्ञानंवसंततिलकेनाह नीचइति नीचः कुलानुचिताधमकर्मकृत् तनयैः पुत्रैः भाग्यैश्चपरिच्युतः त्यक्तः पुत्रैः जलवाल्लभ्येनचविरहितः
अस्वः निर्धनः एवंविधोघटेकुंभस्थेर्केजातोभवति तोयोत्थंजलोत्पन्नंमुक्ताफलादिना तत्पण्येन तद्विक्रयेणविभवमैश्वर्यं यस्य वनिताहतः स्त्रीपू

सत्पूज्योधनवान्धनुर्द्धरगतेतीक्ष्णोभिषक्कारुकोनीचोज्ञः कुवणिग्मृगेल्पधनवांल्लुब्धोन्यभाग्येरतः ३ नीचोघटेत-
नयभाग्यपरिच्युतोस्वस्तोयोत्थपण्यविभवोवनिताहृतोंत्ये नक्षत्रमानवतनुः प्रतिमोविभागेलक्ष्मादिशेत्तुहिनर
श्मिदिनेशयुक्ते ४ नरपतिसत्कृतोटनश्चमूपवणिक्सधनाः क्षततनुश्चोरभूरिविषयांश्चकुजःस्वगृहे युवतिजि
तान्सुहृत्सुविषमान्परदाररतान्कुहकसुवेषभीरुपरुषान्सितभेजनयेत् ५ श्रीरामचंद्राभ्यान्नमः॥श्रीः॥

पूज्यः एवंविधोंत्येमीनस्थेर्केजातोभवति नक्षत्रमानवकोराशिपुरुषः कालांगानीत्यादिनाप्रदर्शितः तुहिनरश्मिश्चंद्रः दिनेशआदि-
त्यः एतौसमेतौयस्मिन्राशौस्थितौसराशिनक्षत्रपुरुषस्ययस्मिन्नंगेस्थितस्तत्रपुरुषस्यजातस्यलक्ष्मचिन्हंमशकादिसमादिशेत्
वदेत् यथामेषस्थयोः शिरसि वृषस्थयोः मुखइत्येवमूह्यम् आदित्यराशिस्वभावः ४ अथमेषवृश्चिकवृषतुलस्थेकुजेजा-
तस्यस्वरूपंत्रोटकेनाह नरपतिसत्कृतः राजपूजितः अटनः परिभ्रमणशीलः चमूपः सेनापतिः वणिक्क्रयविक्रयज्ञः सधनः
वित्तान्वितः क्षततनुः विक्षतदेहः व्रणितशरीरः चोरस्तस्करः भूरिविषयः विप्रकीर्णेंद्रियः एवंविधान् स्वगृहेमेषवृश्चिकस्थः ८७
कुजः भौमः जनयेत् युवतिजितः स्त्रीविधेयः सुहृत्सुमित्रेषुविषमः दुर्विधेयः सक्रूरस्वभावः परदाररतः परयोषितिप्रस-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कः कुहककृज्ञः ऐंद्रजालिकः सुवेषः शोभनालंकारः भीरुः सभयः परुषः कर्कशः निस्नेहः एवंविधान्पुरुषान् सितभेशकक्षेत्रेवृषेतुलेचस्थितोभौमोज
नयेदुत्पादयेत् ५ अथमिथुनकन्याकर्कटस्थेभौमेजातस्यस्वरूपंवसंततिलकेनाह अथमिथुनकन्यागतेभौमेजातस्यस्वरूपमाह बोधेति अस
हः तेजस्वी तनयवान् पुत्रयुक्तः विसुहृत् मित्ररहितः कृतज्ञः परोपकारशीलः गांधर्वयुद्धकुशलः गांधर्वेगीतेयुद्धेचसंग्रामेप्रवेशनिर्गमव्यू
हरचनादिषुचकुशलःनज्ञः कृपणः अदाता अभयः निर्भयः अर्थीयाज्ञापरः एवंविधोबोधेमिथुनकन्यास्थेकुजेभौमोजातोभवति अथकर्कट
स्थेभौमेजातस्यस्वरूपमाह चांद्रेति अर्थवान्सधनः सलिलयानसमर्जितस्वः सलिलयानेनप्लवादिनासम्यगर्जितंस्वंधनंयेन अथवासलि
लेनजलेनयानेनगमनेनाध्वनासमर्जितंस्वंधनंयेन प्राज्ञः मेधावी विकलोंगहीनः खलः दुर्जनः एवंविधश्चांद्रेगर्कटगतेभौमेजातोभवति ६
अथसिंहधन्विमीनकुंभमकरस्थभौमेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह निस्वइति निस्वः निर्धनः क्लेशसहः आपद्भिरः कदर्थनासहः वनांतर

बोधेसहस्तनयवान्विसुहृत्कृतज्ञोगांधर्वयुद्धकुशलःकृपणोभयोर्थी चांद्रेर्थवान्सलिलयानसमर्जितस्वःप्राज्ञश्चभू
मितनयेविकलःखलश्च ६ निस्वःक्लेशसहोवनांतरचरःसिंहेल्पदारात्मजोजैवेनैकरिपुर्नरेंद्रसचिवःख्यातोभयोल्पा
त्मजः दुःखार्त्तोविधनोऽटनोनृतरतस्तीक्ष्णश्चकुंभस्थितेभौमेभूरिधनात्मजोमृगगतेभूपोथवातत्समः ७ द्यूतर्णपा
नरतनास्तिकचौरनिस्वाःकुस्त्रीककूटकृदसत्यरताःकुजर्क्षे

चरः अरण्यमध्यचारी केचिदभयोवनचरइतिपठंति अभयो-
भयरहितः वनांतरचरोरण्यचारी अल्पदारात्मजोल्पकलत्रः अल्पापत्यः एवंविधः सिंहस्थेभौमेजातोभवति अनेकरिपुः बह्वरिः नरेंद्रसचि
वः मंत्रीख्यातः विदितकीर्तिः अभयः निर्भयः अल्पात्मजः स्वल्पापत्यः एवंविधोधन्विमीनस्थेभौमेजातोभवति दुःखार्तः नित्यंदुःखसंतप्तः
निधनः दरिद्रः अटनः परिभ्रमणशीलः अनृतरतः असत्यभाषी तीक्ष्णः निरपेक्षः क्रूरः एवंविधः कुंभस्थेभौमेजातोभवति भूरिधनात्मजः
प्रभूतधनः प्रभूतपुत्रः भूपः राजा अथवातत्समः राजतुल्यः एवंविधोमृगगतेमकरस्थेभौमेजातोभवति ७ अथमेषवृश्चिकतुलवृषगतेबु
धेजातस्यस्वरूपंवसंततिलकेनाह द्यूतेति द्यूतेः क्षज्ञानेऋणेपरस्वहरणेपानेचानिरतः सक्तः नास्तिकः शास्त्रार्थादपेतः तार्किकः नास्ति
परलोकेमतिर्यस्यसनास्तिकः चौरस्तस्करः निःस्वोदरिद्रः कुस्त्रीकः कुत्सितभार्यः कूटकृत्कूटकर्त्तादांभिकः असत्यनिरतः अनृतभाषी-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एवंविधाजाताः सौम्येबुधेभौमर्क्षेमेषवृश्चिकस्थेभवंति आचार्येत्यादि आचार्यः उपदेशकर्त्ताभूरिस्कृतः प्रभूतायस्यः भूरिदारोबहुकलत्रः धना
र्जनेष्टः धनार्जनमिष्टंयस्य अर्थार्जनेनित्यमुद्यतः वदान्यः दाता गुरुभक्तिरताः मातृपितृगुरूणांभक्ताः एवंविधाः पुरुषाः शौक्रे वृषतुलस्थेबुधे
जाताभवंति ८ अथमिथुनकर्कटस्थेबुधेजातस्यस्वरूपमुपेंद्रवज्रयाह विकत्थनइति विकत्थनः वाचालः असत्यवादी शास्त्रकलाविद
ग्धः शास्त्रेकलासुचगीतवाद्यनृत्यलेपचित्रकर्मसुविदग्धः शिक्षितः प्रियंवदोभिमतकथः सौख्यरतः सुखासक्तः एवंविधः शशांकजेबुधे
तृतीयेमिथुनस्थेजातोभवति जलार्जितइति जलार्जितस्वः जलेनोदकेनार्जितंस्वंधनंयेनसः केचित् जलार्जितस्वइति बलेनवीर्येणार्जि
तंस्वंधनंयेन स्वजनस्यात्मीयजनस्यच बंधुजनस्यशत्रुःरिपुः एवंविधः शशांकजेबुधेशीतकरर्क्षेचंद्रराशौकर्कटयुक्तेजातोभवति ९
अथसिंहकन्यागतेबुधेजातस्यस्वरूपंमहर्षिण्याह स्त्रीद्वेष्येति स्त्रीणांद्वेष्यः स्त्रीद्वेष्यः विधनसुखात्मजः विधनोधनरहितः विसुखः

आचार्यभूरिसुतदारधनार्जनेष्टाः शौक्रेवदान्यगुरुभक्तिरताश्चसौम्ये ८ विकत्थनःशास्त्रकलाविदग्धःप्रियं
वदःसौख्यरतस्तृतीये जलार्जितस्वःस्वजनस्यशत्रुःशशांकजेशीतकरर्क्षयुक्ते ९ स्त्रीद्वेष्योविधनसुखात्मजो
ऽटनोऽज्ञःस्त्रीलोलःस्वपरिभवोर्कशशिगेह्ने त्यागीज्ञःप्रचुरगुणःसुखीक्षमावान्युक्तिज्ञोविगतभयश्चषष्ठराशौ
१० परकर्मकृदस्वःशिल्पबुद्धिर्ऋणवान्विष्टिकरोबुधेर्कजर्क्षे ॥१॥ विगतसुखः विगतात्मजःपुत्ररहितः अटनःपरि
भ्रमणशीलः अज्ञः मूर्खः स्त्रीलोलः वनिताभिलाषी स्वपरिभवः स्वेषामात्मीयानांसकाशात्परिभवोयस्य एवंविधोज्ञेबुधेर्कशश
शिगेसिंहस्थेजातोभवति त्यागीदानाज्ञःपंडितः प्रचुरगुणः प्रभूतगुणैर्युतः गुणाःविद्याशौर्यादयः सुखीसुखिनः क्षमावान्सहि
ष्णुः युक्तिज्ञःप्रयोगवेत्ता विगतभयःनिर्भयः एवंविधः षष्ठराशौकन्यास्थेबुधेजातोभवति १० अथमकरधन्विमीनगतेबुधेजात
स्यस्वरूपमौपच्छंदसिकेनाह परकर्मकृदिति परकर्मकृत् परप्रेष्यकरः अस्वःदरिद्रः शिल्पबुद्धिःशिल्पकर्मस्वनुरतमतिर्ऋणवान् पर 
स्वग्रहणशीलः विष्टिकरः आज्ञाकरः एवंविधोर्कजर्क्षेमकरकुंभस्थेबुधेजातोभवति नृपसत्कृतः राजपूजितः नृपसंमतोवा राजवल्लभः
पंडितःविद्वान् आप्तवाक्यः व्यवहारार्थविना आप्तमनुकूलंवाक्यंयस्य एवंविधोनवमेधन्विस्थितेबुधेजातोभवति जितसेवकः जिता

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सेवकायेन पराराधनदक्षः पराभिप्रायज्ञः अंत्यशिल्पः एवंविधोंत्येमीनस्थेबुधेजातोभवति इतिबुधराशिस्वभावः ११ अथमेषवृश्चिक-
वृषतुलमिथुनकन्यागतेजीवेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह सेनानीति सेनानीसेनानायकः बहुवित्तः प्रभूतधनः बहुदारः प्रभूतकलत्रः
बहुतनयः प्रभूतापत्यः दानादानशीलः सुभृत्यः शोभनभृत्यः क्षमीक्षमावान् तेजसाकांत्यादारगुणैः कलत्रसौख्यैरन्वितोयुक्तः ख्यातः
प्रख्यातकीर्तिः एवंविधः सुरगुरौजीवेकौजेकुजभे भौमक्षेत्रेमेषवृश्चिकस्थेजातोभवति कल्यांगः स्वस्थदेहः सधनार्थः समित्रः
ससुतः सतनयः पुत्रान्विता सुखधनमित्रपुत्रयुक्तः त्यागीदाता प्रियः सर्वजनवल्लभः एवंविधः शौक्रभे शुक्रक्षेत्रस्थेवृषतुलस्थेजी
वेजातोभवति बौधेत्यादि भूरिपरिच्छदः बहुवस्त्रगृहपरिवारः भूर्यात्मजः बहुपुत्रः भूरिसुहृत्प्रभूतजनमित्रः साचिव्यमंत्रित्वेनियुक्तः स
चिवस्वभावः साचिव्यंसुखंसुखितः एवंविधोबौधेबुधक्षेत्रेमिथुनकन्यास्थेजीवेजातोभवति १२ अथकर्कटसिंहधन्विमीनकुंभमकरस्थे

नृपसत्कृतपंडितामवाक्योनवमेंत्येजितसेवकोंत्यशिल्पः ११ सेनानीबहुवित्तदारतनयोदानासुभृत्यःक्षमी
तेजोदारगुणान्वितःसुरगुरौख्यातःपुमान्कौजभे कल्यांगःसधनार्थमित्रतनयस्त्यागीप्रियः शौक्रभेबौधेभू
रिपरिच्छदात्मजसुहृत्साचिव्ययुक्तःसुखी १२ चांद्रेरत्नसुतस्वदारविभवःप्रज्ञासुखैरन्वितःसिंहेस्याद्बल
नायकःसुरगुरौप्रोक्तंचयच्चंद्रभे स्वर्क्षेमांडलिकोनरेंद्रसचिवःसेनापतिर्वाधनीकुंभेकर्कटवत्फलानिमकरेनी
चोल्पवित्तोसुखी १३ जीवेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह चांद्रइति रत्नानिमणयः सुताःपुत्राः स्वंधनंदाराः कलत्रं
विभवऐश्वर्यं प्रज्ञामेधासुखंसुखभावः एतैरन्वितः संयुक्तः एवंविधः चांद्रेचंद्रक्षेत्रेकर्कटस्थेसुरगुरौजीवेजातोभवति बलनायकः
सेनाप्रधानः अन्यच्च यच्चंद्रभेकर्कटस्थेउक्तम् रत्नसुतस्वदारविभवः प्रज्ञासुखैरन्वितः एवंविधः सिंहस्थेजीवेस्याद्भवेत् मांडलिकः
मंडलाधिपतिः सेनानायोवा अथवाधनीवित्तवान् एवंविधः स्वर्क्षेस्वराशौधन्विमीनस्थेजीवेजातोभवति कुंभेकर्कटवदिति यानिक
र्कटस्थेजीवेजातन्यभिहितानि रत्नसुतस्वदारविभवः प्रज्ञासुखैरन्वितइत्येतानि कुंभस्थेगुरौभवंति अत्रान्येनसहमतभेदः तेनानिष्टं
फलममिहितं तथाच नीचःकुंभेजनयति कर्मणितोयाश्रयेसक्तंनीचः कुलानुचिताधमकर्मकृत् अल्पवित्तः स्तोकार्थः असुखीदुःखितः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

एवंविधोमकरस्थेजीवेजातोभवति इतिबृहस्पतिराशिस्वभावः १३ अथशुक्रराशिः अथमेषवृश्चिकवृषतुलगतेशुक्रेजातस्यस्वरूपंपुष्पि
ताग्रयाह परयुवतिरतः परस्त्रीषुसक्तः तदर्थवादैस्तासांपरस्त्रीणामर्थवादैःपराधातुवंचनैः हृतविभवोपहृतार्थःकुलपांसनः कुलकलंकभू
तः एवंविधः सितेशुक्रे कुजर्क्षेभौमक्षेत्रेमेषवृश्चिकस्थेजातोभवति स्वबलेत्यादि स्वबलेनात्मीयवीर्येण समस्ताआत्मीयबुद्ध्याचधनंय
स्यासोस्वबलमतिधनः नरेंद्रपूज्यः राजवल्लभः स्वजनविभुः बंधुप्रधानः प्रथितः विख्यातः अभयः निर्भयः एवंविधः स्वेस्वक्षेत्रेवृषतु
लास्थेसितेशुक्रेजातोभवति १४ अथमिथुनकन्यामकरकुंभस्थेशुक्रेजातस्यस्वरूपमौपछंदसिकेनाह नृपकृत्यकरः राजकर्मकर्ता
अर्थवान् धनी कलावित् कलाज्ञः गीतवाद्यादिकवेत्ता एवंविधोमरारिपूज्येदैत्यगुरौशुक्रेमिथुनस्थेजातोभवति षष्ठगतेकन्यास्थेशुक्रेऽति
नीचकर्मक्लिष्टकार्यकरोजातोभवति सुभगः सर्वजनप्रियः स्त्रीविजितः प्रमदावशगः कुनार्यांकुत्सितस्त्रियांरतःसक्तः एवंविधः शुक्रेर

परयुवतिरतस्तदर्थवादैर्हृतविभवःकुलपांसनःकुजर्क्षे स्वबलमतिधनोनरेंद्रपूज्यःस्वजनविभुःप्रथितोभ-
यःसितेस्वे १४ नृपकृत्यकरोर्थवान्कलावित्मिथुनेषष्ठगतेतिनीचकर्मा रविजर्क्षगतेमरारिपूज्येसुभगःस्त्रीविजि
तोरतःकुनार्याम् १५ द्विभार्योर्थीभीरुःप्रबलमदशोकश्चशशिभेहर्यंशेयोषाप्तार्थःप्रवरयुवतिर्मंदतनयः गुणैः
पूज्यः सस्वस्तुरगसहितेदानवगुरौझषेविद्वानाढ्योनृपजनितपूजोतिसुभगः १६ ५ ५ ५ ५

विजर्क्षगतेमकरकुंभस्थेजातोभवति १५ अथकर्कटसिंहधन्विमीनस्थेशुक्रेजातस्यस्वरूपंशिखरिण्याह द्विभार्यः द्विस्त्रीकः अर्थी
याञ्चापरः भीरुःसभयः प्रबलमदोतिदृप्तः प्रबलशोकोतिदुःखितः एवंविधोदानवगुरौदैत्यपूज्येशुक्रेशशिभेकर्कटस्थेजातोभवति योषा
प्तार्थः स्त्रीप्राप्तधनः प्रवरयुवतिः प्रधानस्त्रीकः मंदतनयः अल्पापत्यः एवंविधोहर्यंशेसिंहस्थेशुक्रेजातोभवति गुणैः पूज्यः मान्यः सस्वः
सधनः एवंविधस्तुरगसहितेधन्विस्थेदानवगुरौशुक्रेजातोभवति विद्वान्पंडितः आढ्यः ईश्वरः नृपजनितपूजः नृपेणराज्ञाजनितोसा
दितापूजाऽर्हणंयस्य अतिसुभगः सर्वजनानामतिवल्लभः एवंविधोझषेमीनस्थेशुक्रेजातोभवति -इतिशुक्रराशिस्वभावः १६



अथशनिः अथमेषवृश्चिकमिथुनकन्यागतेसौरेजातस्यस्वरूपंवसंततिलकेनाह मूर्खोज्ञानोपेतः अटनः परिभ्रमणशीलः कपटवान्

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

दांभिकः विस्कृत्वन् मित्ररहितः एवंविधोयमेसौरेअजेमेषस्थेजातोभवति बंधवधभाक् बंधोबंधनंवधस्ताडनंवधबंधौभजते चपलः
क्रियास्वनवस्थितः अघृणः निर्दयः एवंविधः कीटेवृश्चिकस्थेजातोभवति निर्ह्रीस्करवार्थननयः निर्गताह्रीर्लज्जायस्यसनिर्लज्जः निः
स्करवोदुःखिनः निरर्थोदरिद्रः निस्तनयः पुत्ररहितः लेख्ये आलेख्यकर्मणि स्खलितः अज्ञः रक्षापतिर्भवत्यारक्षिकः सुखपतिः प्रधान
नाथः एवंविधोबोधेबुधक्षेत्रेमिथुनकन्यास्थेसौरेजातोभवति १७ अथवृषतुलाकर्कटसिंहस्थेसौरेजातस्यस्वरूपंमंदाक्रांतयाह
वर्ज्यास्वगम्यासुस्त्रीषुयोषित्सुइष्टः वल्लभः नबहुविभवः नप्रभूतैश्वर्ययुक्तः अल्पैश्वर्ययुक्तः भूरिभार्यः प्रभूतदारः एवंविधोवृष
स्थेसूर्यपुत्रेशनैश्चरेजातोभवति ख्यातः विदितकीर्तिः गणानांसमूहानांपुराणांनगराणांबलानांसैन्यानांग्रामाणांचपूज्योमान्यः अर्थवान्स
धनः एवंविधःस्वोच्चआत्मीयस्वोच्चराशौतुलास्थेसौरेजातोभवति अस्वःदरिद्रविकलदशनः अल्पदंतःमातृहीनः जननीवियुक्तः

मूर्खोऽटनः कपटवान्विस्कृत्वद्यमेजेकीटेतुबंधवधभाक्चपलोऽघृणश्च निर्ह्रीस्करवार्थननयःस्खलितश्चलेख्येर
क्षापतिर्भवतिसुखपतिश्चबोधे १७ वर्ज्यस्त्रीष्टोनबहुविभवोभूरिभार्योवृषस्थेख्यातःस्वोच्चेगणपुरबलग्राम
पूज्योर्थवांश्च कर्किण्यस्वोविकलदशनोमातृहीनोसुतोज्ञःसिंहेनार्योविस्करवतनयोविष्टिकृत्सूर्यपुत्रे १८
स्वंतःमत्यार्यितोनरेंद्रभवनेसत्पुत्रजायाध नोर्जीवक्षेत्रगतेर्कजेपुरबलग्रामाग्रनेताथवा अन्यस्त्रीधनसंवृतःपु
रबलग्रामाग्रणीर्मंदहक्स्वक्षेत्रेमलिनःस्थिरार्थविभवोभोक्ताचजालःपुमान् १९ असुतः पुत्ररहितः अज्ञः मूर्खः एवं-
विधः कर्कटस्थेसौरेजातोभवति सिंहेनार्यइति अनार्यः मूर्खः विस्करवोदुःखितः वितनयः पुत्ररहितः विष्टिकृद्भारवाहकः एवंविधः सिंहस्थे
सूर्यपुत्रेशनैश्चरेजातोभवति १८ अथधन्विमीनमकरकुंभगतेसौरेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह स्वंतः शोभनोंतः पर्यंतोयस्यसस्वं
तः शोभनेनकर्मणातस्यमृत्युर्भवति अथवांतेशोभनंसुखादिकंयस्यनरेंद्रभवनेराजगृहेमत्यार्यितः संजातमत्ययः सत्पुत्रः शोभनापत्यः
सज्जायः शोभनभार्यः सद्धनः साढ्यः पुरबलग्रामाग्रनेतापुराणांनगराणांबलस्यसेनायाः ग्रामाणांचअग्रनेताप्रधानोनायकः एवंवि-
धोर्कजेसौरेजीवक्षेत्रेधन्विमीनस्थेजातोभवति अन्यस्त्रीधनसंवृतः परयोषिद्भिः परधनैश्चसंवृतः संयुक्तः पुरबलग्रामाग्रणीः पुराणां

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

बलानांग्रामाणांचअग्रणीः प्रधाननायकः मंददृगल्पचक्षुः मलिनः मलोपेतः स्नानालसः स्थिरार्थः स्थिरवित्तः स्थिरविभवः स्थिरैश्वर्यः भोक्ता असंचयशीलः एवंविधः पुमान् पुरुषः स्वक्षेत्रेमकरकुंभस्थेसौरेजातोभवति इतिशनैश्चरराशिस्वभावः एतेषुसर्वेषुग्रहराशिस्वभावेषुबलवति राशौतदधिपतौचतस्मिंश्चग्रहेबलवतिजातस्ययथोक्तंराशिस्वरूपंभवति द्वयोर्यत्रयोश्चबलवतोर्मध्येसमानमिति नकस्मिंश्चिद्बलवतिनकिंचिदिति १९ अथमेषादिषुलग्नेषुचंद्राक्रांतराश्यंतस्वरूपाणिदर्शयितुमिच्छन्नाचार्यआह शिशिरकरश्चंद्रमास्तस्यराशिभिः सहसमागमेयत्स्वरूपमुक्तंवृत्तान्तम्हदृगित्यादिकंतन्मेषलग्नजातस्यापिवक्तव्यं एवमन्येष्वपिराशिषुवृषादिषुस्थितेचंद्रमसियदुक्तंतल्लग्नजातस्यापिवक्तव्यं यतोमुनयः सदृशंफलंवदंति कथयंति स्वरूपभेदाभावात् तथाचसत्यः मेषविलग्नेकुनखीक्रूरोषणोभेदकृत स्वबलितवाक्यः पिनानिलभूयिष्ठः कृपणोतिबहुव्ययश्चैव रहितोबल्येगुरुभिर्मंदसुतः स्वजनसहजहिंसकर्ता धर्मस्थितोविदेशोपगश्चकर्मारंभत्यफलं नीचांवापिशत्रुतांवा विकलांलभतेन्यपूर्विकांभार्यां सहजसमान्यपिमित्राणिचास्यबंधनतामुपयांति शस्त्रेणवाविषैर्वामरणांपित्तोद्भवैर्वि

शिशिरकरसमागमेक्षणानांसदृशफलंप्रवदंतिलग्नजातम् फलमधिकमिदंयदत्रभावाद्भवनपनाथगुणैर्विचिंतनीयाः॥२०॥ध

कारैर्वा स्त्राल्पक्षाज्ज्वलनाद्वा वर्षाद्दुर्गाद्विपतनाद्वा वृषभविलग्नेस्थूलोष्ठगंडनासामहाललाटश्च श्लेष्मानिलभूयिष्ठस्त्यागीबहुशोव्ययरतश्च कन्याप्रजोल्पपुत्रः पितुर्जनन्याश्चदोषकृद्बहुशः कर्मणिसततंसक्तोविधर्मयुक्तोर्थभाक्चैव नित्यंकलत्रकांक्षीशस्त्रविघातीसदा स्वजनहर्ता मृत्युः शस्त्रैः पाशैर्मृगैश्चलभतेन्यदेशेषुदेहः अश्मैर्जलैर्वाशूलैर्वाप्यटननिरसनेश्चैव पुरुषश्चतुष्पदैर्वाबलान्वितान्मृत्युमुपयाति पूर्वविलग्नेमिथुनेहीनांगः सूयतोधिकांगोवा प्रियवाग्विशिष्टकर्माभिजनप्रकृतिर्हिजननीकः अल्पमतिरल्पकायः सतांचमहितोगुरूणांच अल्पसहजोल्पचेष्टः परवधूर्गुणानुनश्च कर्मसुबहुषुभिरतोधर्मसाधयति नचार्थधर्मेणप्रमाणात्लाभान्निविधान्दोषैर्नैतेश्चनाशयति बह्वीः पत्नीर्लभतेरोगांश्चदारुणान् जनयति व्यालात्दूषात्मृगाद्वाप्युदकाद्वामृत्युमुपयाति कर्किणिपूर्वविलग्नेनेकार्थोगुरुश्यरोगवान्भीरुः उरसिकृतनाभिज्ञानः कफानिलात्माहृद्ग्राही पापानहितान्भजतेपरस्वमपिनाक्षिपत्यपेतसत्कृत् स्वजनादृतः स्वजनैर्विभक्तितोत्यस्थिरप्रसवः तीक्ष्णंकर्माविदेशीनित्यंत्यद्रौदिनः परस्वामी असदृशदारोरिपुनिर्जितश्चपूज्यः सपूहानांकंठ[illegible] देहच्छेदादथवाजलोदरान्मृत्युमाप्नोति सिंहविलग्ने ९०

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

कठिनः प्रियामिषः पत्तिकोविनतनाशः बह्वारंभकुटुंबः कृपणस्त्वयसंमतः ख्यातः सहजविषादी स्वजनस्य घातकोक्लिकर्मैः स्वकैर्युक्तः अ
विषादी कर्मकरोविविधोपायैस्त्वधर्मिष्टः मार्यावह्नी लभतेविं याद्विविधाः कुलैरूपेताश्च कन्यांरुजश्च बहुशोजान्वोर्दशनेषुचाप्नोति मृ
त्कः शस्त्रैः पापैर्विषैश्चक्रोधैरथामयैश्चापि अंबुचरैर्वासलैर्बुभुक्षया ह्रासमुपयाति षष्ठविलग्नेप्रियवाक् तनुच्छविर्दीर्घकरचरणः मि
श्रप्रकृतिश्चार्याकृतिर्व्रणी चार्थवान् कृपणः स्वजनस्येष्टः कन्याबहुप्रजोप्यानृभिर्विरुद्धश्च धर्मप्रियोल्पलाभः कर्मणिनिपुणः समा
चरति विविधाच्चतुष्पद्गणाच्छस्मात् शोकात्संपाताद्वामृत्युंचाप्नोति पाशाद्वासप्तमराशौलग्नेविषमांगः स्तूयतेनिष्पशीलः कफवातिकः कृपा
लोलुरवग्रीवः कृतज्ञश्च अर्थान्विपुलान्लभते व्ययेनसंपूज्यतेयशः प्रायःगुरुसेवायांनिरतः पित्तान्यजनसहजपूज्यः अध्वरुचिर्धर्मिष्ठोविनाश
मायातिपीडनैः स्वैःस्वैःमृतभार्यः कलहरुचिर्बहुशः शोकादिभिः क्लिष्टः मृत्युः व्याघ्रात्पुरुषात्स्वजनात्सौम्याच्चतुष्पदाद्वापि खेदाच्च विषयोगाद्वु
पवासान्मार्गयोगाद्वा अष्टमराशौलग्नेविशालवज्ज्वाननोदरः क्रूरः पित्तप्रकृतिः पिंगेक्षणोमृदुद्रुतगतिः परस्वामी स्रोतकुटुंबस्वजनोंतकश्च
बहुश्रुयोबहुप्रसवः सुखरहितोभ्रातृव्योवृषसेवीधर्महीनश्च मायानिमित्तविमुखो शत्रोरर्थान्नदद्वातिबहुशश्च स्वकुलोद्भूतांश्चछन्नं लभतेरो
गांश्चनैकविधान् गात्रच्छेदैः शत्रोर्वशंगतोबंधनैः प्रहारैश्च रोगैर्वापापकृतैर्ज्वलनाद्वामृत्युमुपयाति स्थूलोष्ठदशननासानवमेलग्नेकफानिल-
प्रकृतिः मांसलगुह्योरुमध्यजः कुनखीकर्मोद्यतः शूरः क्षुद्रान्नीनाभजते चौर्यादनलान्नृपाच्च नष्टधनः द्विजानानांपरसेवी बहुपूज्योभ्रातृघा
तकृतिः कर्मविदेशोविष्टः कुरुतेचित्तानिचार्हतिनृपेभ्यः धर्मेनुपथ्यममतिर्दारैश्चाविरोधमुपयाति रोगान्वदनेलभते चतुष्पदाच्चात्मनः समाप्नोति
मृत्युंबिलेशयाद्वानृपाच्चवंधाज्जनाद्वापि दशमाविलग्नेतनुनासिकापुटोदीर्घवल्कः करचरणः पाप्यात्मकोमृगास्यो भीरुश्च परलोकवंधनभाक् क्ष
द्रकुटुंबोल्पधनः कृपणः कन्याप्रजोमृतस्वजनः सहजसमृद्धः शौर्यान्नृपादरण्याच्चलब्धधनः उपवासव्रतशीलोनीचाभिशयपवासुयाज्ञार्थाम
बहुविग्रहाल्पकेशोदुर्बलजाङ्घश्चरोगार्तः बालादनिलाच्छस्त्रान्नृपाद्विषात्पतनाद्भुजाद्वापि पित्तोदयादजीर्णान्म्रियतेवापार्गविषमस्थः एका
दशेविलग्नेलब्धः क्रूरः कुलाग्रजः पुरुषः पित्तानिलभूयिष्टःशिलउपसमानपासश्च प्राप्तान्नाशयतेधनिबहुभृत्यः साध्यतेव्ययैश्चापि
क्षीणः स्वगोत्रगुरुजनपरपक्षसुहृत्स्वजनशत्रुः कर्मणिपापेसक्तः तनुश्चकांतानवासुयाज्ञाभाक् धर्मध्वजप्रवृत्तोदेवनपूजश्चकारयतिभा-
र्यामि विग्रहशीलांलभतेविविधान्रोगान्कफोद्भवान्तुरसि म्रियतेचजठररोगाद्भ्रमनात्स्त्रीणांप्रयोगाद्वा द्वादशगेप्यारब्धेने स्थूलोष्ठोमीन

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

हृद्रुग्हानासः कफवातिकोमहात्मालग्दाषीनैकमतिर्नेष्टः शिष्टायव्ययमृत्सैः स्वजनस्त्रीपूजितः मद्रजनाथः कर्मणिधर्मैकसक्तः पत्रोपचयः स्फ
दारश्च नीचाचाराभार्यालभतेचरिपून्क्रूदारुणान्क्रूरान् रोगास्तशोणितोदाभुपान्ड्यंन्याल्लिंहेभ्यः मृत्स्फपङ्केभेग्र गणदपूजितेगुत्यजेर्विका
रैर्वा विद्यौषधमयागाद्युपवासान्मार्गदोषाद्वा एवंशिशिरकरसमागमसदृशंलग्नजातफलं तथाचशिशिरकराश्रितराशोरीक्षणाद्विफलंव-
क्ष्यमाणंतथातदेवतल्लग्नजातस्यापिवक्तव्यं चंद्रेभूपबुधावित्यादि किंतुलग्नेफलमापिकिंभिदं यदत्रभावइति नंद्रराशितइदमिलग्नादिष्व-
भावेष्वधिकंफलंयद्भावास्तन्वादयः भवनगुणैः राशिगुणैर्भवननाथगुणैस्तत्स्वामिगुणैर्विचिंतनीयाः विचार्याः भवनभनाथयोर्गुणः सवलत्वं
एतदुक्तंभवति लग्नेबलवतिलग्नपतौन्चबलवतिजातस्यशरीरपुष्टिर्वक्तव्या लग्नाद्द्वितीयराशौबलवतितदधिपतौच बलवतिजातस्यधनसमृ-
द्धिर्वक्तव्या एवंशेषराशिबलेतदधिपवलेच जातस्यभ्रात्रादीनांवृद्धिर्वक्तव्या तथापिकिंचिद्विशेषः कथयति विपरीतंरिःफषष्ठाष्टमेष्विस्या-

इतिश्रीभट्टोत्पलविरचितायां बृहज्जातकविवृतौराशिशीलाऽध्यायोऽष्टादशः समाप्तः १८ अथदृष्टिफला-
ध्यायः चंद्रेभूपबुधौनृपोपमगुणीस्तेनोधनश्चाजगेनिःस्वःस्तेननृमान्यभूपधनिकःप्रेष्यःकुजाद्यैर्गवि नृ-
स्थेयोव्यवहारिपार्थिवबुधाभीस्तंतुवायोधनीस्वर्दर्योऽधकविज्ञभूमिपतयोऽन्योजीविद्योगिणो ॥ १ ॥

दि एवंतन्वादिस्थेषुराशिषुबलवत्सु तदधिपेषुबलवत्सुचभावद्धानिर्वक्तव्या भवनभनाथयोः यद्येकोबलवान्भवतिदामध्यस्थाभाववृद्धिर्वा-
च्येति तथाचयवनेश्वरः भावेशभावबशिभस्तभावमधानमध्याधमदर्शनार्थैः तद्भावसंपत्तिविपत्फलपायैर्नैर्योणिकंपाकमुपैतिपुंसाम् २०
इतिश्रीभट्टोत्पलविरचितायांबृहज्जातकविवृतौराशिशीलाऽध्यायोऽष्टादशःसमाप्तः १८ अथातोदृष्टिफलाध्यायोव्याख्याय-
ते तत्रमेषवृषमिथुनकर्कटस्थेचंद्रेभौमाद्यैर्ग्रहैः दृश्यमानेजातस्यस्वरूपंशार्दूलविक्रीडितेनाह चंद्रेभूपबुधावितिकुजाद्याभौमादयः
भौमबुधबृहस्पतिशुक्रशनैश्चरार्काः तत्राजगेमेषस्थेचंद्रमसिभौमदृष्टेजातोभूपोराजाभवति बुधदृष्टेबुधः पंडितः जीवदृष्टे नृपोपमः रा-
जतुल्यः शुक्रदृष्टेगुणीगुणवान्भवति केचिद्गुणिगितिपठंति शनैश्चरदृष्टेस्तेनश्चौरः सूर्यदृष्टेऽधनः दरिद्रइति एवमपिमेषलग्नेभौमा- ९१
दिदृष्टेफलंवाच्यं गविस्थेति गविवृषस्थेचंद्रमसिभौमदृष्टेजातोनिःस्वः दरिद्रः भवति बुधदृष्टेस्तेनश्चौरः जीवदृष्टेनृमान्यः नृणांमान्यः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पूज्यः केचिन्नृपाढ्य इति पठंति नृपाढ्यः नृपोराजा २ चाढ्यः ईश्वरः शुक्रदृष्टे भूपः राजा सौरदृष्टे धनी धनवान् सूर्यदृष्टे प्रेष्यः दासः एवं वृषलग्ने-
पि नृस्थे मिथुनस्थे चंद्रमसि भौमदृष्टे ऽयोव्यवहारी शस्त्रविक्रयकः बुधदृष्टे पार्थिवः राजा जीवदृष्टे बुधः पंडितः शुक्रदृष्टे भीः निर्भयः धीरः
भयरहितः सौरदृष्टे तंतुवायः रविदृष्टे धनः दरिद्रः एवं मिथुनलग्नेपि स्वर्क्षे कर्कटस्थे चंद्रमसि भौमदृष्टे योद्धा भवति युद्धकुशलः बुधदृष्टे क
विः काव्यकर्त्ता जीवदृष्टे ज्ञः पंडितः शुक्रदृष्टे भूमिपतिराजा सौरदृष्टे योजीवी आफधजीवी शस्त्रोपजीवी सूर्यदृष्टे रोगी च कुर्व्याध्यर्दितः एवं
कर्कटलग्नेपि १ अथ सिंहकन्यातुलावृश्चिकस्थे चंद्रे बुधादिदृष्टे जातस्य स्वरूपं शार्दूलविक्रीडितेनाह ज्योतिरिति बुधादयः बुधगुरुशुक्रशनिसू
र्यभौमाः हरिः सिंहस्तस्मिन् हरौ सिंहस्थे चंद्रे बुधदृष्टे ज्योतिर्ज्ञः ज्योतिः शास्त्रार्थवेत्ता जीवदृष्टे आढ्यः ईश्वरः शुक्रदृष्टे नरेंद्रः राजा सौरदृ
ष्टे नापितः रविदृष्टे नृपः राजा भौमदृष्टे क्ष्मेशः भूपतिः एवं सिंहलग्नेपि तद्वदित्यादि तद्वद्बुधादिभिर्दृष्टे इत्यनुवर्त्तने सर्वत्र षष्ठे कन्यागते चं

ज्योतिर्ज्ञाढ्यनरेंद्रनापितनृपक्ष्मेशा बुधाद्यैर्हरौ तद्वद्भूपचमूपनैपुणयुता: षष्ठेशुभैस्त्वाश्रयः जूके भूप
स्वर्णकारवणिजः शेषेक्षितनैकृतीकीटेयुग्मपितानतस्त्वरजकोव्यंगोधनोभूपतिः २ ज्ञात्युर्वीशजनाश्र
यश्चतुरगेपापैस्सदंभः शठस्वात्युर्वीशनरेंद्रपंडितधनी द्रव्योन भूपोमृगे ॥ १ ॥ द्रे बुधदृष्टे भूपः राजा जीवदृष्टे चमूपतिः

सेनापतिः शुक्रदृष्टे नैपुणयुतः सर्वकार्येषु सूक्ष्मदृष्टिः अशुभैः सौररविभौमैर्दृष्टे त्वाश्रयो भवति स्त्रियमाश्रित्य जीवतीत्यर्थः एवं कन्याल
ग्नेपि जूके तुलास्थे चंद्रमसि बुधदृष्टे भूपो राजा भवति जीवदृष्टे स्वर्णकारः शुक्रदृष्टे वणिजः क्रयविक्रयज्ञः शेषाः सौरसूर्यभौमाः एतैः
दृष्टे नैकृतो निकृतः मणिघातकः एवं तुललग्नेपि कीटे वृश्चिकस्थे चंद्रमसि बुधदृष्टे युग्मपिता युग्मस्य जनकः द्वयोः पिता जातो भवति जात एव
युग्मपिता द्विपितृक इति केचित्पठंति जीवदृष्टे नतः नम्रः शुक्रदृष्टे रजकः वस्त्ररागकृत् सौरदृष्टे व्यंगो गात्रहीनः सूर्यदृष्टे ऽधनः दरिद्रः भौम
दृष्टे भूपतिः राजा एवमेतैरेव दृष्टे वृश्चिकेपि २ अथ धन्विमकरकुंभमीनस्थे चंद्रमसि बुधादिदृष्टे जातस्य स्वरूपं शार्दूलविक्रीडितेनाह ज्ञात्यु
र्वीशेति तुरगो धन्वी तत्रस्थे चंद्रे बुधदृष्टे ज्ञातीशः स्वजनभर्त्ता जीवदृष्टे उर्वीशो राजा शुक्रदृष्टे जनाश्रयः जनानामाश्रयस्थानं पापैः शनिरवि
भौमैर्दृष्टे सदंभः दांभिकः मिथ्याधर्मध्वजी शठः परकार्यविमुखश्च भवति एवं धन्विलग्नेपि मृगे मकरस्थे तत्रस्थे चंद्रे बुधदृष्टे ऽत्युर्वीशो-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

राजाधिराजो भवति जीवदृष्टो नरेंद्रो राजा शुक्रदृष्टे पंडितः शनिदृष्टे धनी वित्तवान् सूर्यदृष्टे द्रव्योनः दरिद्रः भौमदृष्टे भूपो राजा एवं मकरलग्नेपि कुं-
भस्थे चंद्रमसि बुधदृष्टे भूपः राजा भवति जीवदृष्टे भूपसमः राजतुल्यः शुक्रदृष्टेन्यदारनिरतः परस्त्रीसंक्तः चशब्दाच्छेषैः शनिसूर्यभौमैः स्त्रीभिर
प्यन्यदारनिरत एव एवं कुंभलग्नेपि झषगे मीनस्थे चंद्रमसि बुधदृष्टे हास्यज्ञः उपहासं कर्त्तुं जानाति जीवदृष्टे नृपतिः राजा शुक्रदृष्टे बुधः पंडितः आ-
पाः शनिसूर्यभौमाः एतैर्दृष्टे च पाप एव भवति एवं मीनलग्नेपि लग्नदृष्टिफलं चंद्रदृष्टिफलानि देशेनोक्तं शिशिरकरसमागमेक्षणानां सदृशफलं प्र-
वदंति लग्नजातमिति तत्र चंद्रमसा दृष्टे लग्ने फलं नोक्तं तस्मात्तत्रोच्यते उक्तमेव यस्मादुक्तं होरास्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटाः तत्र रु-
केटवर्ज्यमन्योलग्नः चंद्रदृष्टो हीनबलो भवति हीनबलत्वादशोभनफलः उक्तं च सुत्कात्तु चंद्रभवनं लग्नगतं शिशिरकिरणसदृष्टं अशुभफलं निर्दिष्टं
प्रच्छायां जन्मसमये वा ३ अथ होराद्रेष्काणव्यवस्थितस्य चंद्रस्य ग्रहदृष्टिफलं शार्दूलविक्रीडितेनाह होरेशेति होराशब्देन राश्यर्द्धमुच्यते होरेति
लग्नं भवनस्य चार्द्धमिति वचनात् होराया ईशो होरेशः तस्य र्क्षदलं होरेशर्क्षदलं तत्राश्रिता होरेशर्क्षदलाश्रिताः तैर्ग्रहैः होरेशर्क्षदलाश्रितैः शशी-

भूपो भूपसमोन्यदारनिरतः शेषैश्च कुंभस्थिते हास्यज्ञो नृपतिर्बुधश्च झषगे पापश्च पापेक्षिते ३ होरेशर्क्षदलाश्रितैः
शुभकरो दृष्टः शशी तद्गतस्त्र्यंशे तत्पतिभिः सुहृद्भवनगैर्वा वीक्षितः शस्यते यत्प्रोक्तं प्रतिराशि वीक्षण[illegible]फलं तद्द्वाद
शांशे स्मृतं सूर्याद्यैरवलोकितेपि शशिनि ज्ञेयं नवांशेषु तत् ४ चंद्रः तद्गतस्तद्धोरास्थो दृष्टः शुभकरो भवति एतदुक्तं भवति यत्र तत्र रा-
शौ यस्यां होरायां चंद्रमाः स्थितः तद्धोरास्थैः सर्वग्रहैः यदि दृश्यते तदा जन्मनि शुभकरो भवति तेनार्कहोरास्थश्चंद्रो यत्र तत्र राश्याश्रितैरर्कहोराश्रितै
र्ग्रहैः दृष्टश्च शुभकरो भवति अर्थादेव चंद्रहोरास्थैर्दृष्टो शुभकरः एवं यत्र तत्र राशौ स्वहोरास्थ चंद्रहोरास्थैर्ग्रहैर्यत्र तत्रावस्थैर्दृष्टः शुभकरो भवति अ
अर्थादेवार्कहोरास्थैर्दृष्टो शुभकरः एवं लग्नेपि होरेशेन फलं याज्यं त्र्यंशे तत्पतिभिरिति यत्र तत्र राशौ यस्मिन् द्रेष्काणे स्थितश्चंद्रस्तस्य यः पति
स्तेन द्रेष्काणपतिना दृष्टश्चंद्रः शस्यते स्तूयते शुभकर इत्यर्थः पतिभिरिति बहुवचननिर्देशान्नवांश द्वादशांश त्रिंशांशकाधिपतयो गृह्यंते तैरपि
दृष्टः चंद्रः शुभकरो भवति एवं लग्नेपि यद्यपि सामान्येनोक्तं तथापि शुभग्रहैर्द्रेष्काणपतिभिर्दृष्टः शस्यते पापग्रहैर्मध्यमः यस्मादनेनैव स्वल्पजात- १२
केप्युक्तं क्षेत्राधिपसंदृष्टे शशिनि नृपस्तत्सुहृद्भिरपि धनवान् द्रेष्काणांशकपैर्वा प्रायः सौम्यैः शुभं नान्यैरिति सुहृद्भवनगैरित्यादि सुहृद्भवनगैः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

मित्रक्षेत्रस्थैः ग्रहैः वीक्षितः दृष्टः चंद्रः शस्यते स्तूयते शुभकर एव अर्थादेवस्वभवनगतैर्दृष्टः शस्यते अर्थादेवारिभवनगतैः दृष्टः नशस्यते-
अशुभफलो भवति एवं लग्नेपि योज्यं यच्चोक्तं भनिराशिवीक्षणफलं न द्वादशांशोस्मृतमिति भनिराशिः राशो राशौ मेषादिस्थे चंद्रमसि यद्वीक्षणफलं मो
क्तं कथितं तदेव मेषादिद्वादशांशकस्थे चंद्रमसि स्मृतमुक्तं नदेवं वाच्यमिति चंद्रेभूपबुधावित्यादि यदुक्तं एवं लग्नेपि तत्रापि कर्कटद्वादशांशं विनाचं
द्रदृष्टिरशोभनासूर्याद्यैरित्यादि अतोऽस्मात्परं शशिनि चंद्रे सूर्याद्यैः रव्यादिभिरवलोकिते दृष्टे नवांशेषु फलं ज्ञेयं ज्ञातव्यमिति ४ अथमेषवृश्चि
कवृषतुलांशकस्थे चंद्रमसि सूर्यादिदृष्टे फलं वसंततिलकेनाह आरक्षिकइति क्षितिजोभौमः तन्नवांशकस्थे मेषनवांशकस्थे वृश्चिकनवांशकस्थे चंद्र
मसि सूर्यदृष्टे आरक्षिको भवति आरक्षिकः नगररक्षाधिकृतः भौमदृष्टे वधरुचिः प्राणिघातकः बुधदृष्टे नियुद्धे कुशलः नियुद्धे बाहुयुद्धे कुशलः शि
क्षितः प्रवीणः जीवदृष्टे भूपः राजा शुक्रदृष्टे र्थवानीश्वरः सौरदृष्टे कलहकृदिति मूर्खइत्यादि सितांशे शुक्रनवांशके वृषनवांशके तुलनवांशके वास्थि

आरक्षिको वधरुचिः कुशलो नियुद्धे भूपोर्थवान्कलहकृत्क्षितिजांशसंस्थे मूर्खोन्यदारनिरतः सुकविः सितांशे सत्काव्य
कृत्सुखपरोन्यकलत्रगश्च ५ बौधेहि रंगचरचोरकवींद्रमंत्रिगेयज्ञशिल्पनिपुणः शशिनि स्थितेंशे स्वांशेल्पगात्रधनलु
ब्धतपस्विमुख्यः स्त्रीपोष्यकृत्यनिरतश्च निरीक्ष्यमाणे ६

ते चंद्रमसि रविदृष्टे मूर्खो भवति भौमदृष्टेन्यदारनिरतः परदारस
क्तः बुधदृष्टे काव्यकृत् काव्यज्ञः केचिदाधवदितिपठंति जीवदृष्टे सत्काव्यकृत् शोभनकाव्यकर्ता शुक्रदृष्टे सुखपरः सुखासक्तः सौरदृष्टे परदार-
गः परकलत्राभिगामी ५ अथमिथुनकन्याकर्कटनवांशकस्थे चंद्रेर्कादिदृष्टे फलं वसंततिलकेनाह बौधेहीति शशिनि चंद्रे बौधे बुधनवांशक
स्थे मिथुननवांशकस्थे कन्यानवांशकस्थे वाकणनीरीक्ष्यमाणे दृष्टे रंगचरः मल्लादिको भवति भौमदृष्टे चौरः तस्करः बुधदृष्टे कवींद्रः कविराजः
जीवदृष्टे मंत्री सचिवः शुक्रदृष्टे गेयज्ञः सौरदृष्टे शिल्पनिपुणः स्वांशेति स्वांशे आत्मीयनवांशकस्थे कर्कटनवांशकस्थे शशिनि चंद्रे सूर्यदृष्टे ल्पगात्रः कृशदेहो भ
वति भौमदृष्टे धनलुब्धः कृपणः अल्पधनोवा बुधदृष्टे तपस्वी जीवदृष्टे मुख्यः प्रधानः सितदृष्टे स्त्रीपोष्यः स्त्रीभिरभिवर्धनीयः सौरदृष्टे कृत्य
निरतः कार्यासक्तः ६ अथसिंहधन्विमीननवांशकस्थे चंद्रे सूर्यादिदृष्टे फलं मंदाक्रांतयाह सक्रोधइति सिंहांशकस्थे चंद्रे स्यर्कदृष्टे सक्रोधः
क्रोधयुक्तो भवति भौमदृष्टे नरपतिसंमतिः राजवल्लभः बुधदृष्टे निधीशः निधिनामप्राप्तार्थः गुरुदृष्टे मसुरपतिहनाशः शुक्रदृष्टे ऽसुतः पुत्र

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

रहितः सौरदृष्टेतिहिंस्रकर्मा क्रूरकर्मणिरतः जीवांशइत्यादि जीवांशेबार्हस्पत्येनवांशके धन्व्यंशकमीनांशकगतेवास्थितेचंद्रमसिसूर्यदृष्टेप्रथितब
लः प्रख्यातवीर्योभवति भौमदृष्टेरणोपदेष्टा संग्रामदेशकालव्यूहरचनाभिज्ञः बुधदृष्टेहास्यज्ञः उपहासवेत्ता जीवदृष्टेसचिवः मंत्री शुक्रदृष्टेवि
कामः कामहीनः पुंस्त्वहीनः सौरदृष्टेमृदुशीलः धर्ममतिरिति ७ अथमकरनवांशकस्येकुंभनवांशकस्येवाचंद्रेसूर्यादिदृष्टेजातस्यफलंशार्दूलेनाह
अल्पापत्यइति आर्किः अर्कस्यापत्यमार्किः तस्यभागेशनैश्चरनवांशके मकरनवांशकस्येकुंभनवांशकस्थेवाचंद्रेसूर्यदृष्टेऽल्पापत्योऽल्पप्रसवोभवति
भौमदृष्टेसत्स्वपिस्वेदुःखितः सत्स्वपिविद्यमानेष्विपिस्वेधनेदुःखितोभवति बुधदृष्टेमानासक्तः गर्वितः जीवदृष्टेस्वेआत्मीयेकर्मण्यनुरक्तः कुलानुरू
पंकृत् शुक्रदृष्टेदुष्टस्त्रीष्विष्टः वल्लभः सौरदृष्टेकृपणः अदाता एवंतत्कालनवांशकवशात् ग्रहदृष्ट्यालग्नेपिवक्तव्यं किंतुतत्रापिकर्कटनवांशकं
विनाचंद्रदृष्टिरशुभेति भानौनद्वदिंद्वादिदृष्टे भानावादित्यें द्वादिदृष्टेचंद्राद्यैर्ग्रहैरवलोकितेतदुक्तंनेवप्रकारेणदृष्टिफलंयत्रतत्रराशौयत्रतत्रनवांश
कस्थेचंद्रमस्यर्कादिदृष्टेयत्फलमुक्तंतदुक्त यत्रतत्रराशौ यत्रतत्रनवांशकेव्यवस्थितेरवौचंद्रदृष्टेतदेवफलंवाच्यं एतदुक्तंभवति नवांशकव्यव

सक्रोधोनरपतिसंमतोनिधीशः सिंहांशेप्रभुरसुतोतिहिंस्रकर्मा जीवांशेप्रथितबलोरणोपदेष्टाहास्यज्ञः
सचिवविकाममृदुशीलः ७ अल्पापत्योदुःखितःसत्स्वपिस्वेमानासक्तःकर्मणिस्वेनुरक्तः दुष्टस्त्रीष्टःकृपण
श्चार्किभागेचंद्रेभानौतद्वदिंद्वादिदृष्टे ८ वर्गोत्तमस्वपरगेषुशुभंयदुक्तंतत्पुष्टमध्यलघुताशुभमुत्क्रमेण ॥ १ ॥

स्थितस्यादित्यस्यचंद्रस्यचताराग्रहदृष्टिफलंतुल्यं किंतु यदादित्यचंद्रा चंद्रस्योक्तं नचंद्रदृष्ट्यासूर्यस्यवक्तव्यं तद्यथामेषवृश्चिकनवांशक
स्थेर्केचंद्रदृष्टेआरक्षिकोभवति वृषतुलानवांशकस्थेमूर्खः मिथुनकन्यानवांशकस्थेरंगचरः सिंहनवांशकस्थेसक्रोधः धन्विमीननवांशकस्थे
प्रथितबलः मकरकुंभनवांशकस्थेअल्पापत्यः कर्कटनवांशकस्थेल्पगात्रः एवमादित्यस्यनवांशकावस्थितस्यग्रहदृष्ट्याचंद्रेणफलंसमानमिति
८ अथास्यैवनवांशकदृष्टिफलस्यविशेषंवसंततिलकेनाह वर्गोत्तमेति नवांशकव्यवस्थितेचंद्रेनवांशकदृष्टिफलंद्विःप्रभारस्युक्तंशुभमशुभं
च यथाआरक्षिकइतिशुभं वधरुचिरित्यशुभंच तत्रवर्गोत्तमांशकगतेचंद्रेयत् ग्रहदृष्टिजंफलंशुभमुक्तं तत्पुष्टमतीवशुभंभवति स्वांश ९३
कस्थेतुयच्छुभमुक्तंतन्मध्यमं परनवांशकव्यवस्थितेयच्छुभंतल्लघुस्तोकंविज्ञेयं एवंशुभफलस्यपुष्टतामध्यतालघुताच अशुभमुत्क्रमे

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

ण अंशकमुनिर्दिष्टंयत्फलंतदुत्क्रमेणविपरीतंज्ञेयं परनवांशकस्थस्यचंद्रस्ययदंशकसंदर्शनफलमुक्तं तदतीवाशक्तंभवति स्वनवांशकस्थस्य मध्यमं वर्गोत्तमांशकस्थस्यलघुता एवंलग्नादित्ययोरपिदृष्टिफलंयोज्यं जातकेसर्वाण्येवफलानिभवंतीतिप्राप्तं यस्माद्यवनेश्वरः अन्योन्यराश्यंशकसंभयोगैरन्योन्यसंदर्शनसंगमैश्च अन्योन्यसंयोगविकल्पनाभिरिदंसमुद्रांबुवदप्रमेयमिति अतःसदैवराशिदृष्टिनवांशकदृष्टिफलयोरपिसदैवपंक्तिंप्राप्नोति तत्रनवांशकपतौबलवतिराशिदर्शनफलबोधनार्थमाह वीर्यान्वितइति यस्मिन्नवांशकेचंद्रस्थितस्मिंद्रोलग्नंवाभवतितस्यनवांशकस्ययोधिपतिः सचेद्वीर्यान्वितोबलवान्भवति तदानिरुणद्धिपूर्वंप्रथमंनिवारयति किंसर्वमेव नहिराशीक्षणस्य फलं नहोराद्रेक्काणद्वादशभागेक्षणस्यनत्वहित्वांशेक्षणफलमेवददाति अथांशकेपतिर्बलवान्नभवति तदाराशीक्षणांशकेक्षणफलेउभेअपि वाच्ये एवंचंद्रलग्नयोरुभयोरपि आदित्यस्यतुनवांशकेक्षणफलमेववक्तव्यं यस्मात्तस्यराशीक्षणफलमिहनोक्तमिति ९ इतिश्रीबृ

वीर्यान्वितोंशकपतिर्निरुणद्धिपूर्वंराशीक्षणस्यफलमंशफलंददाति ९ इतिश्रीबृहज्जातकवि
वृतौदृष्टिफलाऽध्यायःसमाप्तः १९ अथभावाऽध्यायप्रारंभः शूरस्तब्धोविकलनयनोनि
र्घृणोर्कतनुस्थमेषस्वस्तिमिरनयनःसिंहसंस्थोनिशांधः नीचेंऽधोऽस्वःशशिगृहगतेबुद्धुदाक्षःप
तंगेभूरिद्रव्योनृपहृतधनोवक्त्ररोगीद्वितीये १ हज्जातकविवृतौदृष्टिफलाऽध्यायएकोनविंशतिः १९ अथातो-

भावाध्यायोव्याख्यायते तत्रादित्यस्यलग्नगतस्यद्वितीयस्थस्यचफलंमंदाक्रांतयाह शूरइति शूरः संग्रामप्रियः स्तब्धःचिरकार्यकृत् विकलनयनः हीनदृष्टिः निर्घृणःनिर्दयः एवंविधोर्केरवौतनुस्थेलग्नस्थेजातोभवति एतत्तावत्सर्वलग्नेषुनासामान्यफलंभवति अथमेषसिंहतुलाकर्कटानामन्यतमेलग्नगतेर्केतदापूर्वोक्तंफलंनभवति वक्ष्यमाणंचोक्तराशीनांप्रतिराशिफलंभवति मेषेस्वइति मेषलग्नेतत्रस्थेचार्केसस्वःसार्थः तिमिरनयनःचक्षुरोगीभवति तिमिरश्चक्षुरोगीतिप्रसिद्धः सिंहलग्नेतत्रस्थेचार्केनिशांधःरात्र्यंधोभवति आदित्यस्यनीचःतुलातस्मिन्लग्नगतेतत्रस्थेचार्केसूर्येऽधःनेत्रहीनोऽस्वःदरिद्रश्चभवति शशिगृहेकर्कटेलग्नेतत्रस्थेपतंगेचार्केबुद्बुदेक्षणःपुष्पिताक्षोभवति भूरिद्रव्यइतिलग्नाद्द्वितीयेर्केभूरिद्रव्यःप्रभूतार्थः नृपहृतधनःराज्ञात्हृतस्वोवक्त्ररोगीमुखपीडार्तश्चभवति १ . . १ . २ .

अथलग्नात् द्वितीयतृतीयचतुर्थपंचषष्ठस्थानस्थार्कफलमोपच्छंदसिकेनाह मतीतिमतिः बुद्धिः विक्रमः पराक्रमः एतौ विद्यते यस्य तथावि धस्तृतीयगेऽर्के रवौ भवति विसुखो दुःखितः पीडितमानसः नित्योद्विग्नचित्तः एवंविधश्चतुर्थगेऽर्के जातो भवति असुतः विपुत्रः धनवर्जितो दरि द्रः एवंविधस्त्रिकोणे पंचमस्थे रवौ जातो भवति बलवान्बलयुक्तः शत्रुजितश्च शत्रुभिरारिभिः जितः एवंविधः शत्रुयाते षष्ठस्थानगते अर्के जातो भव ति केचिद्बलवान्नष्टरिपुश्च शत्रुयात इति पठंति तथाच सत्यः षष्ठोरिपुरोगशोकभः आचार्येणात्रयवनेश्वरमतमंगीकृतं यतः षष्ठस्थानस्थितानां पापानां यवनेश्वरेणानिष्टं फलमभिहितं तथाच शक्तिध्वजः षष्ठाश्रितो कौ विषशस्त्रदाहकृद्रोगशत्रुव्यसनोपतप्तं काष्ठाश्मपातोचविशीर्णदंता न्यूनेदवीदंष्ट्रीनरविक्षतांश्च कुजोगतस्तत्रपरिक्षतांगं दग्व्याधितंधिक्कृतिकाशितिंच सौरः शिरोश्माशनिपातशतादिमुष्टिघातोपहतंचकुर्यात् अनेनैवातिदेशं गापानामाचार्यः करिष्यत्यर्कवत् २ अथलग्नात्सप्तमाष्टनवमदशमैकादशद्वादशस्थेऽर्के जातस्य स्वरूपं वसंततिलकेनाह

मतिविक्रमवांस्तृतीयगेऽर्के विसुखः पीडितमानसश्चतुर्थे असुतो धनवर्जितस्त्रिकोणे बलवाञ्छत्रुजितश्च शत्रुयाते
२ स्त्रीभिर्गतः परिभवं मदगे पतंगे स्वल्पात्मजो निधनगे विकलेक्षणश्च धर्मे सुतार्थसुखभाक्सुतशौर्यभाक्खे लाभे
प्रभूतधनवान्पतितस्तु रिःफे ३ मूकोन्मत्तजडांधहीनबधिरप्रेष्याः शशांकोदये स्वर्क्षाजोच्चगते धनी बहुसुतः स्वः कुटुंबी धने हिंस्रो भ्रातृगते सुखे सतनयैः स्त्रीकामवानित्यनेकारिर्मृदुकायवन्हिमदनस्तीक्ष्णोलसश्चारिगे ४

स्त्रीभिर्गतइति पतंगे आदित्ये मदनगे सप्तमस्थानस्थे जातः स्त्रीभिः योषिद्भिः परिभवं गतः प्राप्तो भवति केचिन्मदहते पतगइति पठंति निध नगे अष्टमस्थे पतंगे सूर्ये स्वल्पात्मजः अल्पापत्यः विकलेक्षणश्च विकले अक्षीणि यस्य अदृढचक्षुर्भवति हीनदृष्टिर्भवतीत्यर्थः धर्मे नवम स्थे सुतार्थसुखभाक् सुताः पुत्राः अर्थो धनं सुखं सुखभावः एषां भागी भवति केचिद्धर्मे सुतार्थरहितइति पठंति तथाच सत्यः साध्वाचारवि रोधकृज्जः मदो दैत्यकृन्नवमसंस्थः खे दशमे सुखशौर्यभाक् सुखितो बली च भवति लाभे एकादशे प्रभूतधनवान् बहुवित्तो भवति रिःफे द्वा दशे पतितः स्वकर्मपरिभ्रष्टो भवति इत्यादित्यचारः ३ अथचंद्रे लग्नद्वितीयतृतीयचतुर्थपंचमषष्ठस्थे जातस्य स्वरूपं शार्दूलविक्रीडितेना ह मूकइति मूको वाग्घीनः उन्मत्तः धातुवैषम्याद्यथेष्टकारी जडः अप्रतिपन्नः अंधः नेत्रहीनः हीनः अनुचितकर्मकृत् बधिरः श्रोत्रेंद्रियही

ध २ ९१

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

नः मेष्योदासः एषामन्यतमोजातः शशांकोदये शशांके चंद्रे उदयगे लग्नस्थे जातो भवति एतन्मेषवृषकर्कटवर्ज्यं तेषां विशेषमाह स्वर्क्षगो जगत इति स्वर्क्षः कर्कटकः तस्मिंल्लग्ने तत्स्थे चंद्रमसि धनीवित्तवान् भवति अजे मेषलग्ने तत्स्थे चंद्रमसि बहुसुतः प्रभूतपुत्रो भवति चंद्रस्योच्चो वृषः तस्मिंल्लग्ने चंद्रे सस्वः अर्थवान् भवति धने लग्नात् द्वितीये चंद्रे कुटुंबी बहुकुटुंबी भवति भ्रातृगते तृतीयस्थानस्थे हिंस्रः क्रूरो भवति प्राणिवधको वा सुखे चेच्चतुर्थे सुतनये तनये पंचमेन स्थानेन फक्तेन सोक्तभावान्वितस्तेन मोक्तेन कथितेन भावेनान्वितो युक्तो भवति तेन सुखे सुखितस्तनये पुत्रान्वित इति नैकारिरित्यनेकारिः बहुशत्रुः मृदुकायः सुकुमारशरीरः मृदुवह्निः नातिप्रदीप्ताग्निः मृदुमदनः मैथुनरतिप्रगः तीक्ष्णउग्रस्वभावः अलसः क्रियास्वपटुः एवंविधो रिपुगे लग्नात् षष्ठस्थे चंद्रे जातो भवति ४ अथ लग्नात्सप्तमाष्टमनवमदशमैकादशद्वादशस्थे चंद्रे जातस्य स्वरूपं शार्दूलविक्रीडितेनाह ईर्ष्युरिति ईर्ष्युः परर्द्धिमत्सरी तीव्रमदः अतिमदनः एवंविधो मदे सप्तमस्थे चं-

ईर्ष्युस्तीव्रमदो मदे बहुमतिर्व्याध्यर्दितश्चाष्टमे सौभाग्यात्मजमित्रबंधुधनभाक् धर्मस्थिते शीतगौ निष्पत्तिं समुपैति धर्मधनधीशौर्यैर्युतः कर्मगः ख्यातो भावगुणान्वितो भवगते क्षुद्रोंगहीनो व्यये ५ लग्ने कुजे क्षततनुर्धनगे कदन्नो धर्मेऽघवान् दिनकरप्रतिमोन्यसंस्थः ॥६॥

द्रे जातो भवति बहुमतिः बहुमज्ञः चपलबुद्धिरस्थैर्यः व्याध्यर्दितः रोगपीडितः एवंविधोऽष्टमस्थे चंद्रे जातो भवति सौभाग्यं सर्वजनवाल्लभ्यं आत्मजाः पुत्राः मित्राणि सुहृदः बांधवाः स्वजनाः धनं वित्तं एषां भागी भवति शीतगौ चंद्रे धर्मस्थे नवमस्थानाश्रिते जातो भवति निष्पत्तिः निष्पादनं सर्वकर्मसु समुपैति गच्छति धर्मधनधीशौर्यैर्युतः धर्मेण धनेन वित्तेन धिया बुद्ध्या शौर्येण बलेन युतः एवंविधः कर्मगे दशमस्थानस्थे चंद्रे जातो भवति ख्यात इति ख्यातः सर्वत्र प्रसिद्धः भावगुणान्वितः भावो ए कादशो लाभस्थानं तेनान्वितः सलाभ इत्यर्थः एवंविधो भवगते एकादशस्थे चंद्रे जातो भवति क्षुद्रो हिंस्रस्वभावः अंगहीनः अवयवरहितः एवंविधो व्यये द्वादशस्थे चंद्रे जातो भवति इति चंद्रचारः ५ अथ लग्नादिस्थयोर्भौमबुधयोर्जातस्य स्वरूपं वसंततिलकेनाह लग्न इति लग्नस्थे कुजे प्रहारादिना क्षततनुः विक्षत[illegible]शरीरः धनगे द्वितीयस्थे कदन्नः कुत्सितान्नाशी भवति धर्मे नवमेऽघवान् पापरतो भवति अन्यसंस्थो दिनकरप्रतिमः अन्येषु पारिशिष्टस्थानेषु स्थितो दिनकरप्रतिमो र्के तुल्यफलः तृतीयचतुर्थपंचमषष्ठसप्तमाष्टमदशमैकादश-

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

बृ॰ टी॰ ९५ द्वादशेष्वपियान्येवादित्यस्यफलान्यभिहितानितान्येवभौमस्यवाच्यानि तद्यथा तृतीयेमतिविक्रमवांश्चतुर्थेविसुखः पीडितमनसः पंचमेसुतधन भा॰ अ॰ २०
वर्जितः षष्ठेबलवान् शत्रुजितः सप्तमेस्त्रीभिः परिभवंगतः अष्टमेसत्यात्मजः नवमेविकलेक्षणः दशमेसुखशौर्यवान् एकादशेप्रभूतधनवान्
द्वादशेपतितः इतिभौमचारः ६ अथबुधचारः विद्वान्धनीत्यादि ज्ञेबुधेलग्नगतेविद्वान्पंडितोभवति द्वितीयेधनवान् तृतीयेप्रबलः प्रकर्षेणख
लोदुर्जनः चतुर्थेपंडितः पंचमेमंत्री षष्ठेशत्रुः विगतरिपुः सप्तमेधर्मज्ञः अष्टमेविश्रुतगुणः प्रख्यातगुणः परतोऽन्यराश्यन्यस्थानेः केवलसूर्यवत्
नवमदशमैकादशद्वादशेष्वपियान्यर्कस्यफलान्यभिहितानितान्येवबुधस्यवाच्यानि तद्यथा नवमेसुतार्थसुखभाक् दशमेसुखशौर्यभाक्
एकादशेप्रभूतधनवान् द्वादशेपतितइति इतिबुधचारः ७ अथलग्नादिस्थस्यजीवस्यफलमिंद्रवज्रयाह विद्वानिति जीवेगुरौविल
ग्नात्प्रभृतिस्थितेषु द्वादशस्वपिस्थानेषुक्रमशः परिपाठ्येतानिफलानि तद्यथा लग्नस्थेगुरौविद्वान्पंडितोभवति द्वितीयेसुवाक्यः शोभनव-

विद्वान्धनीप्रबलपंडितमंत्रिशत्रुर्धर्मज्ञविश्रुतगुणःपरतोर्कवज्ज्ञे ६ विद्वान्सुवाक्यःकृपणःसुखीचधीमानशत्रुःपितृ
तोधिकश्च नीचस्तपस्वीसधनःसलाभःखलश्चजीवेक्रमशोविलग्नात् ७ स्मरनिपुणःसुखितश्चविलग्नेप्रियकल
होस्तगतेसुरतेप्सुः तनयगतेसुखितोभृगुपुत्रेगुरुवदतोन्यगृहेषुभवेद्द्रविणीस्यात् ८

चनः तृतीयेकृपणः अदाताचतुर्थेसुखी
पंचमेधीमान् बुद्धिमान् षष्ठेऽशत्रुः विगतरिपुः सप्तमेपितृतोधिकः पितुः सकाशात्गुणाधिकः अष्टमेनीचः सत्कुलानुचितकर्मकृत् नवमे
तपस्वी विद्यमानतपाः दशमेसधनः सवित्तः एकादशेसलाभः लाभयुक्तः द्वादशेखलः क्रूरचेष्टः इतिबृहस्पतिचारः ७ अथलग्नादिस्थस्य
शुक्रस्यफलंचित्रतयाह स्मरनिपुणइति स्मरनिपुणः कामकुशलः सुखितः संजातसुखः एवंविधोविलग्नस्थेभृगुपुत्रेशुक्रेजातोभवति प्रिय
कलहः कलहवल्लभः सुरतेप्सुः सुरताभिलाषी एवंविधोस्तगतेसप्तमस्थेशुक्रेजातोभवति तनयगतेपंचमस्थेशुक्रेसुखितोभवति गुरुवदतो
न्यगृहे अतोस्मात्स्थानत्रयादन्यस्मिन्गृहस्थानेगुरुवत् जीववत्फलानिवक्तव्यानि द्वितीयतृतीयचतुर्थषष्ठाष्टमनवमदशमैकादशद्वा
दशेष्वपियान्येवगुरोः बृहस्पतेः फलान्यभिहितानि तान्येवशुक्रस्यवक्तव्यानि तद्यथा द्वितीयेसुवाक्योभवति तृतीयेकृपणः चतुर्थेसुखी षष्ठेऽशत्रुः अष्ट ९५
मेनीचः नवमेतपस्वी दशमेसधनः एकादशेसलाभः द्वादशेखलः सधनोंत्येअंत्येमीने यत्रतत्रभावस्थेसधनः वित्तवान्भवति स्थानोक्तंतत्फलन

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

भवति केचिद्गुरुवदन्यनक्त झषेद्द्रविणीस्यादितिपठंति अतोनंतरंपरिशेषस्थानेषुगुरुवत् झषेमीनेद्रविणीस्यात् भवेदिति इतिशक्रचारः
८ अथलग्नादिस्थस्यसौरस्यफलंशिखरिण्याह अदृष्टार्थोरोगीति अदृष्टार्थः नित्यंदरिद्रः रोगी व्याधितः मदनवशगः कामाधीनः अत्यंत
मलिनः अतीवमलोपेतः शिशुत्वबाल्येपीडार्थोव्याध्यर्दितः अलसवाक् अव्यक्तभाषी एवंविधः सवितृसुतेसौरेलग्नस्थितेजातोभवति य
दितुलधन्विमकरकुंभमीनानामन्यतमोराशिः लग्नगतोनभवति तदा तदेतदुक्तंफलंभवति एषामन्यतमेलग्नगतेतस्यसौरस्यफलमाह गुरुस्व
र्क्षोच्चस्थइति गुरुक्षेत्रे धन्विमीनौ शनैश्चरस्य स्वर्क्षेस्वक्षेत्रेमकरकुंभौतस्यैवोच्चस्तुला एषामन्यतमोराशिः यदिलग्नगतोभवति तत्रस्थिते
तसौरेनृपतिसदृशः राजतुल्योभवति ग्रामपुरपः ग्रामाणांपुराणांचाधिपतिः सुविद्वान्पंडितः चार्वंगः शोभनावयवश्चभवति केचित्सुतस्तव-
र्क्षोच्चस्थइतिपठंति तदुक्तं यस्मात्सारावल्यामुक्तं स्वोच्चस्वजीवभवनेक्षितिपालतुल्योलग्नेऽर्कजेभवति देशनराधिनाथः शेषेषुदुःखगद
पीडितएवबाल्येदारिद्र्यकामवशगोमलिनोलसश्च १ दिनकरसमोन्यत्रकथितइति अन्यत्रद्वितीयादिषुस्थानेषुदिनकरसमार्कतुल्यः कथितउक्तयान्या

अदृष्टार्थोरोगीमदनवशगोत्यंतमलिनःशिशुत्वेपीडार्त्तःसवितृसुतलग्नेत्यलसवाक् गुरुस्वर्क्षोच्चस्थेनृपतिसदृशोग्रामपुरपः
सुविद्वांश्चार्वंगोदिनकरसमोन्यत्रकथितः ९ ॥७॥

दिनस्यफलान्यभिहितानितान्येवसौरस्यवाच्यानि तद्यथा द्वितीयेभूरिद्रव्यो
नृपस्तनधनोपलक्षरोगीचभवति तृतीयेमतिविक्रमवान् चतुर्थेविसुखः पीडितमानसः पंचमेअसुतोधनवर्जितः षष्ठेबलवान् शत्रुनिर्जितःसप्तमस्त्री-
भिः परिभवंगतः अष्टमेस्वल्पासुनोविकलेक्षणश्च नवमेसुतार्थसुखभाक् दशमेसुतयशोर्थभाक् एकादशेप्रभूतधनवान् द्वादशेपतितइति इ
तिशनैश्चरचारः ९ अथलग्नादारभ्यतन्वादयोभावास्तेषुभावेषुव्ययेस्थितानांसर्वेषामेवग्रहाणांफलविशेषंमालिन्याह सुहृदिति यदेतल्ल-
तिगृहं लग्नात्प्रभृति द्वादशसुस्थानेषुफलमनुपरिचिंत्यं भावाः तनुकुटुंबसहोत्थादयः लग्नदेहादिभावेशिति लग्नंदेहः शरीरंपरिकल्प्यम् लग्ना
दारभ्यतनुकुटुंबसहोत्थादयोभावाः परिकल्प्याः अत्रकाश्चांतिः तदोच्यते अस्त्येव यस्माद्यवनेश्वरः मूर्तिंचहोरांशशिभंचविंद्यादिति अत्रराशिभा
नुपरिकल्प्यालग्नात्परिकल्प्याः तेषुशरीरादिभावेषुयोग्रहोन्यवस्थितः सतस्यभावस्यपुष्टिंकृशतांवाकरोति कथमित्याह सुहृदरिपरकीयःस्व
र्क्षतुंगस्थितानांफलमनुपरिचिंत्यमिति सुहृत्क्षेत्रंमित्रर्क्षं अरिक्षेत्रंशत्रुभं परकीयमुदासीनभंस्वर्क्षमात्मीयक्षेत्रं तुंगमुच्चभं एतेषुस्थानेषु

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

स्थितानांफलमनुपरिचिंत्यम् परिकल्प्यम् भावस्थोग्रहोयादृशेक्षेत्रेभवतितादृशंफलंप्रयच्छति नन्वत्रशुभस्थानादिक्षेत्राणांपरिगणनाकृता तत्रन
शुभाशुभफलभागउक्तः उच्यते अर्थादेवैतद्गम्यते तथामित्रक्षेत्रस्थोभाववृद्धिंकरोति शत्रुक्षेत्रादिस्थश्चतद्धानिं तत्रचयेशुभाशुभक्षेत्रेनोक्ते
त्रिकोणनीचभेनेपियाद्ये मित्रादिक्षेत्रान्यक्षेत्रोपलक्षणानिज्ञेयानि कःपुनरपिअरिपरकीयोर्विशेषउच्यते उदासीनोत्रपरोभिमतः अरिःशत्रुः
परउदासीनः तत्रैतदुक्तंभवति पापःसौम्योवा नीचस्थः शत्रुक्षेत्रस्थोवा यस्मिन्भावेव्यवस्थितः तस्यभावस्यहानिंकरोति उदासीनक्षेत्रस्थो
नहानिंनचवृद्धिं मित्रक्षेत्रेस्वक्षेत्रेमूलत्रिकोणेस्वोच्चेव्यवस्थितोभावस्य वृद्धिमिति एतत्केषांचिन्मते तथाचभगवान्गार्गिः नीचर्क्षरिपुगेह
स्थोग्रहोभावविनाशकृत उदासीनगृहेमध्योमित्रर्क्षस्वत्रिकोणगः स्वोच्चगश्चग्रहोवश्यंभाववृद्धिकरः स्मृतइति सत्याचार्यस्तुपुनः समुप-
चयविपत्तीसौम्यपापेषुकथयति यस्मिन्भावेसौम्याःस्थितास्तस्यभावस्यसमुपचयंवृद्धिंकुर्वंति यस्मिन्भावेपापाःस्थितास्तस्यभावस्यविप
त्तिंहानिंनकुर्वंति किंतुरिःफषष्ठाष्टमेषुतेनविपरीतंकथयंति रिःफेद्वादशेस्थानेसौम्याःभावहानिंकुर्वंति पापाःवृद्धिंःतेनरिःफेसौम्याव्ययहानिं

सुहृदरिपरकीयस्वर्क्षतुंगस्थितानांफलमनुपरिचिंत्यंलग्नदेहादिभावैः समुपचयविपत्तीसौम्यपापेषुसत्यः कथयतिवि
परीतंरिःफषष्ठाष्टमेषु १०

कुर्वंति पापाःव्ययवृद्धिं षष्ठेसौम्याः शत्रुहानिंकुर्वंति पापाःशत्रुवृद्धिं अष्टमेसौम्याः मृत्युहानिंकुर्वंति पा-
पाःमृत्युवृद्धिमिति तथाचसत्यःसौम्याःपुष्टिंपापास्तद्धानिंसंश्रिताग्रहाः कुर्युःमूर्त्यादिषुनिधनेत्येषषष्ठेचविपर्ययात्फलदाः ननुपूर्वंसौ-
म्यानांपापानांचोपचयस्थानावस्थितानांशुभफलंव्याख्यातंतत्कथं षष्ठस्थाःपापाः शत्रुवृद्धिंकुर्वंति अत्रोच्यते पूर्वंसामान्येनोक्तं यत्रचवा
चनिकीबाधाभवति तत्रसामान्यंभावफलंत्यक्त्वायथोक्तफलंवक्तव्यं यद्येवंकथंस्वल्पजातकेउक्तं पुष्णंतिशुभाभावान्मूर्त्यादीन्घ्नंतिसंस्थि-
ताःपापाःसौम्याःषष्ठेरिघ्नाःसर्वेनेष्टाव्ययाष्टमगाइति अत्रोच्यते बृहज्जातके आचार्येणोक्तंस्वल्पजातकेन्याचार्यमतेनप्रतिज्ञेयमाचा
र्येण ज्योतिषमागमशास्त्रंविप्रतिपत्तौनयोग्यमस्माकं स्वयमेवविकल्पयितुंकिंतुबहूनांमतंवक्ष्ये यत्राचार्याणांसमसंख्यानांमतभेद
समत्वंभवति तत्रवराहमिहिरोमतद्वयमपिदर्शयति तथाचबृहद्यात्रायामन्यरूपंग्रहकुंडलिकांस्वल्पयात्रायांसामान्यरूपांपठति एवंबृह
दल्पयोर्विवाहपटलयोरपि १० अथग्रहकुंडलिकाफलविशेषमनुष्टुभाह उच्चेति ग्रहकुंडलिकांयाफलंद्विविधमुक्तं शुभमशुभंच



CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तत्र यच्छुभं फलं तदुच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैर्गृहैर्दत्तं यथाक्रमं पादोनदलपादाल्पनिष्फलं भवति तेनोच्चस्थो ग्रहः संपूर्णं प्रय-
च्छति मूलत्रिकोणस्थः पादोनं स्वक्षेत्रस्थोऽर्द्धं मित्रक्षेत्रस्थः पादफलं शत्रुक्षेत्रस्थः पादादप्यल्पम् नीचस्थोऽस्तमितश्च न किंचिदपि एवं शुभ-
फलं शुभग्रहणादेवाशुभस्य ग्रहस्य व्युत्क्रमो व्याख्येयः तत्रास्तमितो नीचस्थश्चाशुभं फलं संपूर्णं प्रयच्छति शत्रुक्षेत्रस्थः पादोनं मित्रक्षे
त्रस्थोऽर्द्धं स्वक्षेत्रस्थः पादम् त्रिकोणस्थः पादादप्यल्पं उच्चस्थो न किंचिदपि एवं जातककाले ग्रहस्यावस्थानात्फलं वाच्यम् दशाष्टकवर्गादिफल
पक्तिकाले शुभमशुभं वा पुष्टफलं बलवानेव प्रयच्छति एतच्च पूर्वमेव व्याख्यातं उक्तं च तत्कालं बलयुक्तो भवति यदि दशाधिपस्तस्य शुभमशु
भं वापि फलं वक्तव्यं नित्यमेव परिपूर्णम् ॥ इति श्रीभट्टोत्पलविरचितायां बृहज्जातकविवृतौ भावाध्यायो विंशतिः समाप्तः २० ॥
अथातआश्रययोगाध्यायो व्याख्यायते तत्रादावेवैकादिसंख्योत्तरवृद्ध्या स्वगृहगतानां ग्रहाणां मित्रक्षेत्रगतानां च फलं प्रथितायथाह

उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः शुभसंपूर्णपादोनदलपादाल्पनिष्फलम् ॥ इति श्रीभट्टोत्पल
विरचितायां बृहज्जातकविवृतौ भावाध्यायो विंशतिः समाप्तः २० ॥ कुलसमकुलमुख्यबंधुपूज्या धनिसुखिभि-
भोगिनृपाः स्वभैकवृद्ध्या परविभवसुहृत्स्वबंधुपोष्या गणपबलेशनृपाश्च मित्रभेषु १ ॥

कुलसमकुलेति स्वभेषु स्वराशिष्वेकवृद्ध्या स्थितैर्ग्रहैर्जाताः कुलसमकुलमुख्यबंधुपूज्याधनिसुखिभोगिनृपाः पुरुषा भवंति यस्मिन्
तस्मिन् ग्रहे स्वक्षेत्रगते जातः कुलसमः स्वकुलतुल्यो भवति एवं द्वयोः स्वक्षेत्रस्थयोः कुलमुख्यः स्वकुलप्रधानः स्वकुलाधिकः त्रिषु बंधू
नां पूज्यः चतुर्षु धनी वित्तवान् पंचसु सुखी षट्सु भोगी नृपतुल्यः केचिन्नृप इति पठंति स चोपमानान्नृपतिरिव नृपस्तत्समत्वमेवमुक्तं स्व
ल्पजातकेप्युक्तं कुलतुल्यकुलाधिकबंधुमान्यधनिभोगिनृपसमनरेंद्राः एवं षट्सु नृपसमः सप्तसु नृपो राजा एवंगुणः एकोत्तरवृद्ध्या स्व-
क्षेत्रगेषु जातो भवति परविभवेत्यादि एकवृद्ध्या इत्यनुवर्त्तते मित्रभेष्वेकवृद्ध्या स्थितेषु परविभवसुहृत्स्वबंधुपोष्यगणपबलेशनृपाश्च जा
ता भवंति तेनैकस्मिन् मित्रक्षेत्रस्थे ग्रहे जातः परविभवपोष्यो भवति पराजीवीत्यर्थः द्वयोः सुहृत्पोष्यः त्रिषु स्वपोष्यो ज्ञातिपोष्यो भवति च
तुर्षु बंधुपोष्यः भ्रातृपोष्य इत्यर्थः पंचसु गणपः गणस्वामी षट्सु बलेशः सेनापती सप्तसु नृपो राजा १ ॥

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथोच्चगतस्यैकस्यापि मित्रदृष्टस्य फलमेकोनरवृन्द्यानीचशत्रुस्थानांचमालिन्याह जनयतीति एकोप्युच्चगतोग्रहोमित्रदृष्टः सकृद्दव
लोकितः नृपंराजानंजनयति उत्पादयति एवमेकोप्युच्चगतोमित्रयोगान्मित्रफलत्वात्प्रचुरधनसमेतंसिद्धंजनयति प्रचुरधनसमेत पर्याप्त
वित्तफलंसिद्धंचसर्वत्रावाप्तकृत्यंजनयति विधनविसुखमूढेत्यादि एकवृन्द्येत्यनुवर्तते एकवृन्द्याशत्रुनीचर्क्षगेषु शत्रुक्षेत्रस्थेषुनीचगेषु
ग्रहेषुविधनविसुखमूढव्याधितबंधनभावधदुरितसमेताजाताः भवंति तेनयस्यजन्मन्येकोग्रहःशत्रुक्षेत्रगतोनीचगोवाभवतिसविध
नः विगतधनोभवति दरिद्रः यस्यद्वौ सविसुखोदुःखितः यस्यत्रयःसमूढः विचित्तः यस्यचत्वारः सव्याधितः पीडितः यस्यपंचसबंधनत
तोभवति यस्यषट्सतप्तोभवति बहुदुःखसंतप्तः यस्यसप्तसवधदुरितसमेतोभवति वधवध्योदुरितंदुष्कृतं वधएवदुरितंतेनसमेतोफलो
वा नीचेयद्यपिसमतसंभवंति तथापिवज्रादिवत्पूर्वशास्त्रानुसारेणतत्फलोपदेशः १ अथकुंभलग्नज्ञानस्याऽशुभफलमुपजाति

जनयतिनृपमेकोप्युच्चगोमित्रदृष्टःप्रचुरधनसमेतंमित्रयोगाच्चसिद्धम् विधनविसुखमूढव्याधितोबंधनभाव
धदुरितसमेतःशत्रुनीचर्क्षगेषु २ नकुंभलग्नंशुभमाहसत्योनभागभेदाद्यवनावदंति कस्यांशभेदोनतथास्ति
राशेरतिप्रसंगास्त्विति विष्णुगुप्तः ३

कयाह नकुंभलग्नमिति सत्याचार्यःकुंभलग्नंजन्मनिनशुभमाह नशोभनमुक्तवान्
तथाचसत्यः जन्मनिचंद्रःश्रेष्ठःभवदोहोराशिर्निधनवर्ज्यःस्यात् होराचभवेदिष्टाद्विपदेष्विहकुंभवर्ज्याहि कुंभविलग्नेजातोभवतिनरोदुःख
शोकसंतप्तइति नभागभेदादिति पुराणयवनाभागभेदाद्द्वादशभागभेदाज्जन्मनिकुंभलग्नमशुभमिति यस्यतस्यलग्नस्यकुंभद्वादशभा
गेजन्मतशुभमितितेषांमतंनकुंभलग्ने तथाच तन्मतानुसारिणाश्रुतकीर्तिनाप्युक्तं सर्वस्मिन्लग्नगतेकुंभद्विरसांशकोयदाभवति राशीन
तदासुखितः परान्नभोजीभवेत्पुरुषइति अत्रविष्णुगुप्तचाणाक्यावाहतुः कस्यांशभेदइति यदुक्तं भागभेदात्कुंभलग्नंजन्मनिनशु-
भं तत्कस्यराशेर्लग्नगतस्य कुंभद्वादशभागोनास्त्यपितुसर्वस्यैवास्तिविद्यते यस्माद्यदिकुंभस्यद्वादशभागोनशुभस्तदासर्वाण्येवलग्नो
क्तानिफलानिनिरर्थकानिभवंति तस्मादतिप्रसंगःतेनकुंभलग्नमेवाशुभंनतद्भागभेदइति तथाचतद्वाक्यम् कुंभद्वादशभागोलग्नगतोनश ९७
स्यतेयवनैःयद्येवंसर्वेषांलग्नगतानामनिष्टफलंनस्यात् षट्योगाद्राशीनांनचतत्सर्वशास्त्रकाराणांतस्मात्कुंभविलग्नोजन्मन्यशुभोनतद्भागइति
२

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अधुना होरास्थानां ग्रहाणां फलं वसंततिलकेनाह यातेष्विति असद्ग्रहाः पापाः तेषु सत्सु पापेषु समभेषु विषमराश्यवस्थितेषु न केवलं यावद्दिनेशहोरामादित्यहोरां यातेषु प्राप्तेषु विषमराशिषु पापाः प्रथमार्द्धस्या यदा भवंति तदाजातः ख्यातः सर्वत्र प्रसिद्धः महोद्यमबलार्थयुतः महत्सु कार्येषु उद्यमरतो बलवान् वीर्यवान् अर्थयुतो धनवान् अतितेजा अतितेजस्वी भवती चांद्रांशकभेष्विति युजि युग्मराशौ शुभेषु सौम्यग्रहेषु चांद्रीं होरां यातेषु समराशिषु प्रथमार्द्धस्थाः सौम्याः भवंति तदाजातो मार्दवयुतो मृदुस्वभावः कांतियुतो द्युतिमान् सौख्ययुतः सुखान्वितः सौभाग्ययुतः सर्वजनप्रियः धीयुतः मतिमान् मधुरवाक्ययुतः प्रियंवदः एतैः गुणैर्युक्तो जातो भवति ४ अथ पुनरपि होरागतं फलमिंद्रवज्रयाह तास्वेवेति तास्वेव पूर्वोक्तासु होरासु परर्क्षगेषु अन्यराश्याश्रितेषु जाता नराः सर्वेषु पूर्वोक्तगुणेषु मध्याः भवंति एतदुक्तं भवति समराशिषु रविहोरायां पापग्रहाणामवस्थानं भवति तदाजातानां पूर्वोक्तगुणा मध्या भवंति एवं विषमराशिषु चंद्रहोरायां सौ

यातेष्वसत्स्वसमभेषु दिनेशहोरां ख्यातो महोद्यमबलार्थयुतोऽतितेजाः चांद्रांशकभेषु युजि मार्दवकांतिसौख्य-
सौभाग्यधीमधुरवाक्ययुतः प्रजातः ४ तास्वेव होरासु परर्क्षगेषु ज्ञेया नराः पूर्वगुणेषु मध्याः व्यत्यस्तहोराभ
वनस्थितेषु मर्त्या भवंत्युक्तगुणैर्विहीनाः ५ कल्याणरूपगुणमात्मसुहृद्दृकाणे चंद्रो न्यगस्तदधिनाथगुणं करो
ति ॥ १ ॥ म्यग्रहाणामवस्थानं भवति तदाजातानां पूर्वोक्तगुणा मध्या भवंति व्यत्यस्तहोराभवनस्थितेष्विति व्यत्यस्तासु विपरीत-
स्थासु होरासु व्यत्यस्तेषु च भवनेषु राशिषु स्थितेषु ग्रहेषु जाता मर्त्या मनुष्या उक्तगुणैः प्रागुद्दिष्टैः गुणैः विहीना वर्जिता भवंति एतदुक्तं भवति समराशिषु चंद्रहोरायां पापानामवस्थानं भवति तदाजाता महोद्यमबलार्थहीना भवंति वितेजसश्च एवं विषमराशिषु आदित्यहोरायां सौम्यानामवस्थानं भवति तदाजाता मार्दवकांतिसौख्यसौभाग्यधीमधुरवाक्यविहीना जाता भवंति अत्र च दर्शिते ग्रहावस्थाने यथा यथा ग्रहबहुलं भवति तथा तथा गुणबहुलत्वं वक्तव्यं ५ अथ द्रेष्काणावस्थानाच्चंद्रस्य फलं वसंततिलकेनाह कल्याणरूपगुणमिति आत्मीयद्रेष्काणे यदा चंद्रः स्थितो भवति अथवा सुहृद्द्रेष्काणे स्थितस्तदाजातः कल्याणरूपगुणः प्रशस्तरूपः प्रशस्तगुणश्च भवति आत्मीयद्रेष्काणमित्रद्रेष्काणावस्थानं विनान्यद्रेष्काणावस्थिते चंद्रमसि विचारः यस्मादुक्तान्यगस्तदधिनाथगुणं करोति यस्मिन्द्रेष्काणे चंद्रमा व्यवस्थितस्तस्य योऽधिपतिः

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

सयदि चंद्रस्य तत्कालमध्यस्थस्तदा जानस्य मध्यमो रूपगुणो भवनः अथ द्रेष्काधिपतिश्चंद्रस्य तत्कालमारिस्तदा जातो रूपगुणहीनो भवति
व्यालोद्यतायुधेति व्यालद्रेष्काणः सर्पद्रेष्काणस्तत्रस्थे चंद्रे जानः तीक्ष्णउग्रो भवति उद्यतायुधद्रेष्काणः सायुधस्तत्रस्थे चंद्रे जातो तिहिंस्रो मार
णात्मको भवति प्राणिघातरत इत्यर्थः चतुश्चरणः चतुष्पदद्रेष्काणः तत्रस्थे चंद्रे गुरुतल्परतो गुरुदाराभिगामी भवति अंडजद्रेष्काणः पक्षिद्रे
काणस्तत्रस्थे चंद्रे ऽटनः परिभ्रमणशीलो भवति आत्मीयादिद्रेष्काणस्थे चंद्रमसि व्यालद्रेष्काणस्थे चंद्रे संभवतः फलद्वयमपि वक्तव्यम्
अत्र व्यालद्रेष्काणाः कर्कटद्वितीयः वृश्चिकाद्यः मीनतृतीयः उद्यतायुधद्रेष्काणाः मेषाद्यः मेषतृतीयः मिथुनद्वितीयः सिंहाद्यः तुलाद्वितीयः
कुंभाद्यश्च अत्रापि गुणद्वयांतर्भूतद्रेष्काणस्थे चंद्रे फलद्वयं वक्तव्यमिति ६ अधुना मेषादिनवांशकजातस्य स्वरूपं शार्दूलेनाह स्तेनइति
मेषवर्ज्यमन्यस्मिन्राशौ मेषलग्नगते नवांशके जातः स्तेनश्चौरो भवति वृषवर्ज्ये वृषनवांशके जातो भोक्ता असंचयशीलः एवं मिथुनवर्ज्ये
मिथुननवांशके जातः पंडितो विद्वान्भवति कर्कटनवांशके जातः आढ्यः ईश्वरः सिंहांशके नरेंद्रो राजा कन्यांशके क्लीबः पुरुषाकाररहितः

व्यालोद्यतायुधचतुश्चरणांडजेषु तीक्ष्णोऽतिहिंस्रगुरुतल्परतोऽटनश्च ६ स्तेनो भोक्ता पंडिताढ्यो नरेंद्रः क्लीबः
शूरो विष्टिकृद्दासवृत्तिः पापो हिंस्रो भीश्च वर्गोत्तमांशे स्वेषामीशा राशिवद्द्वादशांशैः ७

तुलांशके शूरः संग्रामप्रियः वृ
श्चिकांशकस्थो विष्टिकृद्भारजीवी धन्व्यंशके दासवृत्तिः मकरांशके पापः कुंभांशके हिंस्रः क्रूरः मीनांशके भीः निर्भयः केचिदधीरिति पठंति अधीः
बुद्धिरहितः आचार्यस्य चाभीरभिमतं तथा च स्वल्पजातके तस्करभोक्तृविचक्षणधनिनृपतिनपुंसकाभयदरिद्राः खलपापोग्रोक्तं ह्यमेषाद्या
नां नवांशभवाइति वर्गोत्तमांशे स्वेषामीशाः एवं स्वराशिषु वर्गोत्तमांशेषु जाता एषामेव पूर्वोक्तानामीशाः स्वामिनो भवंति एतदुक्तं भवति
मेषलग्ने मेषनवांशके जातश्चौरस्वामी भवति वृषलग्ने वृषनवांशके जातो भोक्तॄणामसंचयशीलानां स्वामी भवति एवं मिथुने पंडितस्वामी
कर्कटलग्ने ईश्वराणां स्वामी महाधनिकः सिंहे नृपस्वामी महाराजाधिराजः कन्यायां क्लीबस्वामी तुले शूराणां स्वामी वृश्चिके भारवाहानां
स्वामी धन्विनि दासानां स्वामी मकरे पापानां स्वामी कुंभे क्रूराणां स्वामी मीनांशके ऽभयानां स्वामी राशिवद्द्वादशांशैरिति द्वादशांशैः राशि
वत्फलानि वाच्यानि यानि मेषादिस्थे चंद्रमसि फलान्यभिहितानि वृत्ताताम्रदृगित्येवमादीनि तान्येव मेषादिद्वादशांशकजानस्य वक्तव्यानीति ७ १८

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

अथभौमसौरयोः स्वत्रिंशांशकस्थयोः फलंवसंततिलकेनाह जायान्वितइति जायान्वितोभार्यायुक्तः बलंवीर्यंविभूषणान्यलंकरणानि सत्वमौ
दार्यमेतैर्युक्तः तथातितेजाः अतिसाहसेनासमीक्षितकार्यकरणेनचयुक्तः एवंविधः कुजेभौमेस्वभागेस्वत्रिंशांशकस्थे जातोभवति रोगीव्या
धितः मृतस्वयुवतिः मृतास्वा आत्मीयायुवतिर्भार्यायस्य विषमः क्रूरः अन्यदारोऽन्यसंबंधिनीदारायस्य परदारासक्तः दुःखीनी सुखः परि
च्छदयुतः गृहवस्त्रपरिवारोपेतः मलिनः मलोपेतः एवंविधोर्कपुत्रेसौरेस्वत्रिंशांशकस्थेजातोभवति नन्वत्रत्रिंशांशकग्रहणंनास्ति तत्कथम्
ज्ञायते त्रिंशांशकफलमेतत् उच्यते शुक्रफलाभिधानेत्रिंशांशकग्रहणंभविष्यति ८ अथजीवबुधयोःस्वत्रिंशांशकस्थयोःजातस्य
स्वरूपंवसंततिलकेनाह स्वांशइति धनेनवित्तेनयशसाकीर्त्यासुखेनानिदुःखत्वेन बुद्ध्यामेधयाचयुक्तः तेजस्वीसोत्साहः पूज्यः लोकवंद्यः नि
रुक् स्वस्थदेहः उद्यमवान् उत्थानशीलः भोगवान् भोगसंयुक्तः एवंविधागुरौजीवेस्वत्रिंशांशकस्थेजातोभवति मेधाबुद्धिः कलागीत

जायान्वितोबलविभूषणसत्वयुक्तस्तेजोतिसाहसयुतश्चकुजेस्वभागे रोगीमृतस्वयुवतिर्विषमोन्यदारोदुःखी
परिच्छदयुतोमलिनोर्कपुत्रे ८ स्वांशेगुरौधनयशःसुखबुद्धियुक्तास्तेजस्विपूज्यनिरुगुद्यमभोगवंतः मेधाकला
कपटकाव्यविवादशिल्पशास्त्रार्थसाहसयुताशशिजेतिमान्याः ९ स्वेत्रिंशांशेबहुसुतसुखारोग्यभाग्यार्थरूपः
शुक्रेतीक्ष्णःसुललितवपुःसुप्रकीर्णेंद्रियश्च ॥१॥ वाद्यंनृत्यपुस्तकचित्रकर्मादिकाः कपटः दांभिकत्वं काव्यंकवेःकर्म वि-
वादः वाक्पटुत्वं शिल्पंतक्षककर्मादि शास्त्रार्थः सतामाचारानुष्ठानं साहसमसमीक्षितकार्यकरणशीलता अतिमान्योतिपूज्यः एवंविधाः
शशिजेबुधेस्वत्रिंशांशकस्थेजाताःभवंति केचिदत्रसर्वत्रकवचनमेवेच्छंति तथापिनकश्चिद्दोषः ९ अथशुक्रस्यस्वत्रिंशांशकस्थस्य
भौमादित्रिंशांशकस्थयोश्चंद्रार्कयोश्चजातस्यस्वरूपंमंदाक्रांतयाह स्वेत्रिंशांशेति बहुसुतः प्रभूतपुत्रः बहुसुखः परिमितिसुखः
आरोग्येणानिरोगतया भाग्यैःजनप्रियत्वेन अर्थेनधनेनरूपेणसुचारुतयासंयुक्तः केचिद्भार्यार्थरूपइतिपठंति भार्ययाकलत्रेण तथा
तीक्ष्णःक्रूरः सुललितवपुः शोभनशरीरः सुप्रकीर्णेंद्रियः विक्षिप्तेंद्रियार्थः सुप्रकीर्णानि विक्षिप्तानींद्रियाणियस्य बहुस्त्रीगमनशीलः ए
वंविधः शुक्रेस्वत्रिंशांशकस्थेजातोभवति शूरस्तब्धावित्यादिआरपूर्वांशकेषुभौमप्रथमेषुभागेषुरविशशियुक्तेस्वर्केचंद्रसंयुक्तेषुयथा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

 

संख्यंफलानि तयथा. भौमत्रिंशांशकस्थेर्के क्रूरः सग्रामप्रियः चंद्रेलब्धश्रीर्वैरकारी सौरत्रिंशांशकस्थेर्के विषमः क्रूरः भवति चंद्रमसि वधकः जीवत्रिंशांशकस्थेर्के सद्गुणोभवति चंद्रमस्याढ्यः ईश्वरः बुधत्रिंशांशकस्थेर्के कुरवीभवति चंद्रेज्ञः पंडितः शुक्रत्रिंशांशकस्थेर्के चार्वंगः शोभनशरीरः चंद्रमसीष्टः सर्वजनप्रियः एवमारपूर्वेषंशेषु आरोंगारकः पूर्वः प्रथमोयेषामंशकानांत्रिंशद्भागानांतेष्विति १०

इतिश्री भट्टोत्पलविरचितायांबृहज्जातकविवृत्तोआश्रययोगाऽध्यायएकविंशतिः समाप्तः २१ ॥ ॥ श्रीसांबसदाशिवप्रसन्न-

अथातः प्रकीर्णकाध्यायोव्याख्यायते मिश्रःप्रकीर्णकइत्युच्यते तत्रग्रहाणांपरस्परंकारकसंज्ञांवेत्तोर्लीयेनाह स्वर्क्षेति स्वर्क्षेस्वक्षेत्रे-योग्रहः स्थितः यश्चतुंगेस्वोच्चे यश्चमूलत्रिकोणे स्थितः साचयदि लग्नकंटकेषुकेंद्रेष्वाश्रितः स्थितोभवति एवंविधस्यग्रहस्यान्योप्येवंविधः केंद्रगोयदिभवति तदातौग्रहावन्योन्यंपरस्परंकारकाख्योभवतः अनेनप्रकारेणयः कर्मगः यो




क्रूरस्तब्धोविषमवधकोसद्गुणाढ्योसुरूरिवज्ञोचार्वंगेष्टोरविशशियुतेष्वारपूर्वांशकेषु १० इति आश्रययोगाऽध्यायएकविंशतिः समाप्तः २१ श्रीसांबसदाशिवप्र॰

स्वर्क्षतुंगमूलत्रिकोणगाः कंटकेषुयावंत आश्रिताः सर्वएवतेन्योन्यकारकाः कर्मगस्तुतेषांविशेषतः १ कर्कटोदयगतेयथोडुपेस्वोच्चगाः कुजयमार्कसूरयः ॥१॥

यस्मात् ग्रहाः

दशमस्थानस्थः सविशेषतः विशेषेणतेषांग्रहाणांमध्यात्कारकसंज्ञांलभते अतउक्तं कर्मगस्तुतेषांविशेषतइति १ अथास्यैवोदाहरणप्रदर्शनार्थस्थोद्धृतयाहकर्कटेति यथाकर्कटोदयेकुलीरलग्नेतत्स्थेचोडुपेचंद्रेकुजोंगारकः यमः सौरिः अर्कः आदित्यः सूरिः बृहस्पतिः एतेकुजयमार्कसूरयः स्वोच्चगाः आत्मीयतुंगस्थायदिभवंति कुजोमकरेयमस्तुलेअर्कोमेषेसूरिः कर्कटे तदातेपरस्परमन्योन्यंकारकानिगदिताउक्ताः अनेनप्रकारेणयावंतोभवंतितावंतः परस्परकारकाख्याः अनेनोदाहरणेनेतत्प्रतिपादितंभवति यथापुरुषस्यजन्मलग्नेकेंद्रेविनास्वक्षेत्रउच्चत्रिकोणगाः अपिसंतोंपरस्परंकंटकगास्तदाकारकसंज्ञामपिलभंते लग्नगस्येति लग्नगस्यग्रहस्यप्राग्लग्नेसमवस्थितस्यसकलः सर्वोग्रहोंबरगः दशमस्थानस्थःश्रेष्ठबुग ९९

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

चतुर्थस्थानस्थश्च कारकसंज्ञो भवति अनेनैतदुक्तं भवति लग्नगो ग्रहः स्वक्षेत्रगोच्चत्रिकोणेषु यद्यपि भवति तस्माद्यो दशमस्थः चतुर्थो वासौ
स्वत्रिकोणस्वक्षेत्राणामन्यतमस्थो भवति तथापि लग्नगतस्य सकारकाख्यो भवति नंतस्थलग्नगत इति अत उक्तं लग्नगस्य सकलोंब
राम्बुगा इति २ अथानन्तरमपि अन्यत्कारकलक्षणमनुष्टुभाह स्वत्रिकोणोच्चग इति स्वत्रिकोणोच्चगो ग्रहः कारकत्वे हेतुः कारणं न केंद्रस्थः य
तोन्यो यस्य ग्रहस्य लग्नं केंद्रं विनाप्यवस्थस्य स्यस्य यदि कोपि ग्रहः कर्मगो दशमस्थानस्थो भवति स च स्वक्षेत्रोच्चमूलत्रिकोणानामन्यतमेन
भवति तस्माच्च दशमस्थस्य यदि स तन्मित्रं निर्गतो न केवलं यावत् गुणसंपन्नस्तेन मित्रगुणेन संयुक्तस्तात्कालिके मित्रामित्रविधिना
धिमित्रतां प्राप्तस्तथाविधः सर्वग्रहः कारकाख्यो भवति यस्य च दशमः स तस्य कारकाख्यो न भवति कारकसंज्ञा च यात्रायामुपयुज्यते
यतस्तत्रोक्तं त्रिकोपहन्तदशायां जन्मोद्भयनाथशत्रुपाके च स्वदशेशकारकदशासंश्रयणीयो नरेंद्रपतिरिति तथा ह्यसारविंशिगृहस्युक्तः

कारकानिगदिताः परस्परं लग्नगस्य सकलोंबरांबुगाः २ स्वत्रिकोणोच्चगो हेतुरन्योन्यं यदि कर्मगः स्वल
तद्गुणसंपन्नः कारकश्चापि स स्मृतः ३ शुभं वर्गोत्तमे जन्म वेशिस्थाने च सद्ग्रहे अशून्येषु च केंद्रेषु कारका
ख्यग्रहेषु च ४ मध्ये वयसः सुखप्रदाः केंद्रस्था गुरुजन्मलग्नपाः ॥१॥ कारकर्क्षेपि चंद्रः जयसुखधनदाता नत्स्वह

तान्यथेति ३ अथ कारकस्य प्रयोजनमनुष्टुभाह शुभमिति यस्य लग्नं नवांशे वर्गोत्तमाख्यो जन्म भवति चंद्रोपि वा वर्गोत्तमांशगतो
भवति तस्य शुभं जन्म यस्मिन्राशौ पुरुषस्य जन्मसमये र्कः स्थितस्तस्माद्राशेर्यो द्वितीयो राशिः स वेशिसंज्ञः यस्य च शुभे वेशिस्था
ने सद्ग्रहः सौम्यग्रहो ज्ञगुरुसितानामन्यतमो भवति तस्यापि शुभं जन्म यस्य जन्मलग्नं केंद्रचतुष्टयादेकमप्यशून्यं केंद्रं भवति तस्यापि
शुभं जन्म अत्र सौम्यग्रहाधिष्ठिते केंद्रे विशेषेण शुभं जन्म यस्मादुक्तमनेनैव एकस्मिन्नपि केंद्रे यदि सौम्यो न ग्रहोस्ति यात्रायां ज
न्मन्यथवा कर्मणि नृत्तच्छुभमाहुराचार्याः यस्य जन्मनि कारकाख्याः कारकसंज्ञा ग्रहा भवंति तस्यापि शुभं जन्म अत्र यथा गुणाधिक्यं
तथा शुभतरमेव जन्म ४ अथ येन योगेन जातो यौवने सुखी भवति दशापतिफलपाकं वैतालीयेनाह मध्ये वयस इति गुरुर्जीवः जन्म
नि यत्र राशौ चंद्रमाः स्थितः तदधिपतिः जन्मपः यस्मिंल्लग्ने जातः तदधिपो लग्नपः एषामन्यतमो यस्य लग्नकेंद्रे भवति तस्य वयो मध्ये

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

फलप्रदो भवति योवनेसफलो भवतीत्यर्थः अत्र च यवनेश्वरः लग्नाधिपो लग्नपतिश्चयेषां चतुष्टयेस्याद्वलवान्गुरुर्वा चतुर्ष्वहोरादिषु संगतः स्याच्चतुर्वयः कालफलप्रदस्यात् पृष्ठोभयेत्यादि दशापतिर्दशाप्रवेशकाले पृष्ठोदयेराशिगो मेषवृषधन्विमकराणामन्यतमस्थितो यदा भवति तदासदशांतेफलप्रदो भवति अथोभयोदयेमीने भवति तदा तद्दशामध्ये फलप्रदो भवति अथ कोदये शीर्षोदये मिथुनसिंहकन्यातुलावृश्चिककुंभानामन्यतमे यदा भवति तदा प्रथमदशाप्रवेशसमये फलप्रदो भवति एवंशुभस्याप्यशुभस्यवापक्तिर्वाच्या दशाकालंत्रिधा परिकल्प्य यस्मिन्काले तस्य फलपक्तिर्ज्ञायिते आद्येमध्येंत्येवातत्र चंद्रः सकलबोधनानिकुरुते पापानिचातोन्यथेति एतत्त्रिधाविभक्ते दशाकालेज्ञेयं पूर्वोक्तं सर्वदशाफलंयोज्यं दशापतिः प्रवेशकालेतिष्ठन्नेवतत्फलं ददातीत्येतल्लक्ष्यं गम्यते यवनेश्वरादिभिः सामान्येनचोक्त उच्यते भगवतोगर्गवचनात् तथा च भगवान्गार्गिः आद्यंतमध्यफलदः धिरः पृष्ठोभयोदये दशाप्रवेशसमयेतिष्ठन्वाच्योदशापतिरिति ५ अथाष्टकवर्गफलस्य कालंसूचयितुमाह दिनकरेति चारवशात्सर्वकालेयस्मिन्राशौशुभमशुभं वाष्टकवर्गफलं दिनकर आदि-

पृष्ठोभयकोदयर्क्षगास्त्वंतेंतः प्रथमेषु पाकदाः ५ दिनकररुधिरौप्रवेशकालेगुरुभृगुजौभुवनस्यमध्ययातौ रविसुतशशिनौविनिर्गमस्थौशशितनयः फलदस्तु सर्वकालम् ६ इति प्रकीर्णाध्यायः २२ छ

त्वः प्रयच्छति तस्मिन्नराशौप्रवेशकाले आद्ये त्रिभागेतिष्ठन्नेव फलं प्रयच्छति एवमेव रुधिरो भौमः गुरुर्जीवः भृगुः शुक्रः एतौगुरुभृगुजौभवनस्य राशेर्मध्ययातौ मध्यत्रिभागगतौ फलप्रदौ भवतः रविसुतः सौरः शशीचंद्रः एतौरविसुतशशिनौविनिर्गमस्थौराश्यंतत्रिभागस्थौ फलप्रदौ भवतः शशितनयोबुधः सर्वकालफलदः सर्वभागस्थोफलप्रदो भवति सर्वस्मिन्नेवराशौयावत्तिष्ठति तावत्फलं शुभमशुभं कर्मायामास ददातीति ६ इतिश्रीभट्टोत्पलविरचितायां बृहज्जातकविवृत्तौ प्रकीर्णाध्यायो द्वाविंशतिः समाप्तः २२ छ

अथ नष्टजातकाध्यायोव्याख्यायते तत्रादावेवदारसुतहीनजन्मज्ञानं शार्दूलविक्रीडितेनाह लग्नादिति यस्यजन्मनिलग्नात्पुत्रभं पंचमंस्थानं शुभग्रहेण स्वपतिना च प्राप्तं संयुक्तं भवेत्तथवा आलोकितं दृष्टं भवति तस्यापिपुत्रसंपत् अस्तीतिवक्तव्यं चंद्राद्वा पंचमस्थानं यस्यशुभग्रहेण स्वपतिनावायुक्तं दृष्टं भवति तस्यापिपुत्रसंपदस्ति यस्यलग्नचंद्रयोरुभयोरपिपंचमस्थानं शुभग्रहेण स्वपतिनावायु- १००

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

तदृष्टैः [illegible]ति [illegible] [illegible] अपुत्रत्वंवक्तव्यं अत्र केचिद्द्वादश [illegible]रसपुत्रं वर्णयंति औरसः क्षेत्रजः दत्तः कृत्रिमः अधमप्रभवः गूढो
[illegible] अपवि[illegible]ः [illegible] [illegible]नः सहोढः दासीप्रभवइति तथाचसारावल्याम् शुभभवनमथशुभयुतं शुभदृष्टंवा शुक्रर्क्षमिह्ये-
षां [illegible] [illegible]भवः [illegible] [illegible]पंनविपरीतं १ एकत्र मेगुरुवर्गे शुभराशौ वौरसोभवेत्पुत्रः लग्नाच्चंद्रादथवा बलयुक्ता द्दीक्षितोपिवा
सौम्यैः २ [illegible]नवांशतुल्यासौम्याशनावतीसदादृष्टा शुभदृष्टेनद्विगुणाक्लिष्टापापांशकेनथादृष्टा ३ सौरर्क्षेसौरगुणाबुधदृष्टोगुरु
कुजार्कदृष्टोनः क्षेत्रजपुत्रजनयतिवौधोपिगुणोरविमदृष्टः ४ [illegible]र्क्षेमिंदुर्निरीक्षतेयदिशनैश्चरेणयुतं दत्तकपुत्रोसाविति कौज
[illegible]बुधस्यचैवंस्यात् ५ सप्तमभागेकेजेसौरयुतेपंचमेसदाभवने कृत्रिमपुत्रंविंद्याच्छेषग्रहदर्शनात्सुतं ६ वर्गेपंचमराशौसौरे
सूर्येणतत्रसंयुक्ते लोहितदृष्टेवाच्योजातस्त्वधमप्रभवः ७ चंद्रेभौमांशगतेधीस्थेमंदावलोकितेभवति गूढोत्पत्तिर्भवेत्पुत्रः शे
षग्रहदर्शनीयाते ८ तस्मिन्नेवचभौमेशनिवर्गस्येनिरीक्षितेरविणा पुरुषस्यभवतिपुत्रोऽपविद्धइतिचयवनमुनिवचनात् ९ शनिवर्गस्थे
चंद्रेशनियुक्तेपंचमेसदासौरे शुक्ररविभ्यांदृष्टेपुत्रः पौनर्भवोभवति १० चूडायदार्कभला कलाहतस्यैवपंचमेभवने रविदृष्टेप्यथसाहि
तेकानीनः संभवतिपुत्रः ११ वर्गेरविचंद्रमसोः स्वतगेहेचंद्रसूर्यसंयुक्ते शुक्रेणदृष्टमात्रेपुत्रः कथितः सहोढश्च १२ पापैर्बलिभिर्युक्ते
पापर्क्षेपंचमेसदाराशौ जातोपुत्रः पुरुषः सौम्यग्रहदर्शनानीते १३ शुक्रनवांशेतस्मिन्शुक्रेणानिरीक्षितेत्वपत्यानि दासीप्रभवानिवदेच्चंद्रे
पिकेचिदाचार्याः १४ सितगुरु[illegible]धीस्थेताभ्यांदृष्टेथवापिसंयुक्ते प्रायेणदारिकास्युस्तद्राशिगणोपिवान्यथापुत्राइति १५ एवंलग्ना-
च्चंद्राद्वाकलत्रभंसप्तमंस्थानंयस्यशुभेनस्वपतिनावायुतदृष्टंभवति तस्यकलत्रसंपद्भवतीतिवक्तव्यं एवंल्लग्नाच्चंद्राद्वायस्यसप्तमस्था
नंशुभग्रहेणस्वपतिनावायुतदृष्टंनभवतितस्यकलत्रसंपन्नभवतीतिवक्तव्यं भार्यातस्यनभवतीत्यर्थः यतउक्तं ज्ञयोन्यथासंभवःअ
न्यथानयोः पुत्रकलत्रयोरसंभवः अभावोज्ञेयोज्ञातव्यः अत्रपुत्रकलत्रग्रहणमुपलक्षणार्थं सर्वेषामपितन्वादीनांभावानांलग्नाच्चंद्राद्वा
स्थितिरन्वेष्या यतोद्वावेतौमूर्तिसंज्ञौ तथाचयवनेश्वरः मूर्तिंविहोरांशशिभंचोवंद्यादिति अत्रकलत्रस्थानेपिकेचिद्विशेषंवर्णयंति शुक्रे
दुजीवशशिजैः सकलैस्त्रिभिश्चद्वाभ्यांकलत्रभवनेचतथैककेन एषांगृहेपिचगणोथविलोकितेवासंतिस्त्रियोभवनवर्गखगास्वभावाः १ एवं
क्रूरेर्णाशेलग्नाच्चंद्राद्दंदेच्चबलयोगात् शशिरविजयोः कलत्रेभार्याप्रुंसांपुनर्भूःस्यात् २ भवनाधिपांशतुल्याभवंतिनार्योनिरीक्षणाद्वा

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri

पि एकैकेवरविकुजांशेगुरुबुधयोश्चापिस्वामित्रे ३ मायेण चंद्रसितयोर्बलसंयुक्तेथवापियामित्रे दृष्टेवाबहुपत्न्यो भवंतिशुक्रेविशेषेण ४
गुरुशुक्रयोः स्ववर्णाद्रविकुज शशिभानुजैर्भवंत्यूनाः शुक्रेवेश्यामायाश्चंद्रेपिवदंतिकेतुमालाख्याः ५ पाथेनेत्यादि पाथेनः कन्यातस्मि
न्नुदयेगतेलग्नस्थेतत्रचरवावर्केस्थितेरविसुतः सौरः मीनस्थोयदिभवति तदादारहाभवति दारान्कलत्राणिहंति घातयति तस्यपुरुष
स्यजीवतएवभार्यामरणंवक्तव्यम् अस्मिन्नेवयोगेपाथोनोदयगेरवौ अवनेः भूमेः पुत्रोभौमः पुत्रस्थानेगतः पंचमेस्थानेगतोमकरेस्थि
तोभवति तदासुतमरणं सुतविपत्तिं यच्छति ददाति तस्यजीवतएवपुत्रमरणंवक्तव्यम् १ अथजीवतएवभार्यामरणयोगत्रयंमहर्षि
राह उग्रग्रहैरिति उग्रग्रहाः आदित्यभौमसौराः तैः सितात्शुक्राद्यथासंभवंचतुरस्रसंस्थितैः चतुर्थाष्टमगतैः यस्यजन्मभवति त
स्यजायावधोभार्याविपत्तिर्दहनेनाग्निनाभवति तस्यजीवतएवभार्याग्निनात्मानंव्यापादयति अथवापयोः पापयोः द्वयोर्मध्येशुक्र-
कादेकोद्वादशेऽन्योद्वितीयेभृगुतनयेशुक्रेस्थितेजातस्यनिपातेनोच्छ्रितस्थाननाज्जायावधोभवति तस्यजातस्यजीवतएवपतनान्नि

अथानिष्टाऽध्यायः लग्नात्पुत्रकलत्रभे शुभपतिप्राप्तेथवालोकितेचंद्राद्वायदिसंपदस्तिहितयोर्ज्ञेयोन्य
थासंभवः पाथेनोदयगेरवौरविसुतोमीनास्थितोदारहा पुत्रस्थानगतश्चपुत्रमरणंपुत्रोवनेर्यच्छति १ उग्रग्र
हैःसितचतुरस्रसंस्थितैर्मध्यस्थितभृगुतनयेथवोग्रयोः सौम्यग्रहैरसहितसन्निरीक्षितेजायावधोदहननि-
पातपाशजः २

पतिनाभार्याम्रियतइति अथवैकस्मिन्सशावेकेनशुक्रंस्थानमतिक्रम्यान्येनप्राप्यमानमप्राप्यदिशुक्र
स्यावस्थानदापापद्वयमध्यस्थोभवति अथयस्यजन्मनिसौम्यग्रहैरन्यतमेनसहितः संयुक्तः शुक्रोनभवति नचापितन्निरीक्षितो-
दृष्टस्तस्यपाशजाज्जायावधोभवति जीवतएवभार्योद्बंधनेनात्मानंव्यापादयति केचिद्योगद्वयमेतद्व्याख्यातं उग्रग्रहैःसितचतुरस्रसंस्थितैरेकः
मध्यस्थितेभृगुतनयेथवोग्रयोर्द्वितीयः सौम्यग्रहैरसहितः तन्निरीक्षित इति योगद्वयविशेषभूतजायावधोदहननिपातपाशजः इति
[illegible] चतुर्थाष्टमगैः शुक्रात्सौरारार्कैर्हुताशनात् तेषांद्वयोस्तुमध्यस्थेतयाशुक्रेनिपातजः
शुक्रेरसंयोगादृष्टेपाशजाज्जायाक्षयोभवेत् २ अथनाथिकलनयनदारजन्मयोगज्ञानंवसंततिलकेनाह लग्नाशिभे शशीचंद्रः तिग्मर 

CC-0 Shri Krishna Museum Kurukshetra. Digitized by eGangotri